विराजते राजन्वती जयपुर-जगती येन ।
माधवसिंहमहीपतिर् जयतु चिरं स सुखेन ॥

# पाणिनीयसूत्रवृत्तिः

---

राणावत क्षत्रियवंशसमुद्रसमुद्भूत कामधेन्वा
जयपुर नगराधीश-सवाई रामसिंह ( K. G. C. S. I ) सहधर्मिण्या
श्री १०८ युत मेजर जनरल सर सवाई माधवसिंह देवनरपतिप्रकाण्डानां
( G. C. S. I., G. C. I. E., G. C. V. O., O. B. E., LL. D. )
मातृभूतया
रूपकुमारी देव्या
कारिता

---

माथुर चतुर्वेद राजकुमार तनयेन
जयपुर संस्कृत पाठशालाधीत शास्त्रवराध्यापकवरेण
पण्डित तनुज जानकीलाल शर्मणा
विरचिता

---

जयपुर महाराज महासामन्त नाथावत वंशवतंस सामोद नरेशाश्रितेन
जयपुर संस्कृत पाठशालाधीत शास्त्रवराध्यापकवरेण
लाहौरनगर प्राच्यविद्यालय संस्कृतप्रधानाध्यापकेन
महामहोपाध्याय पण्डित शिवदत्त दाधिमथेन
समुपस्कृता

---

इत्येषा
जयपुरी " मुफीद आम " यन्त्रालये मुद्रयित्वा प्रकाशिता ।

॥ श्रीः ॥

विदित हो कि श्रीमान् सकलगुणगणनिधान महाज्ञानवान् सवाई जयपुर नरपति महाराजाधिराज सवाईरामसिंहजी की धर्मपत्नी परमबुद्धिमती श्रीमती रूपकुमारी जी ने वेदान्तादि के ज्ञान से संसार की अनित्यता और क्षण भंगुरता को भली भान्ति विचार यह निर्धारण किया कि कोई ऐसा कार्य किया जाय जिस से संसार में लोकोपकारके साथ २ नाम भी चिरस्थायी हो। अन्त में विमर्श करते २ "कीर्तिरक्षरसम्बद्धा चिरं तिष्ठति भूतले" के अनुसार किसी पुस्तक के बनवाने का निश्चयकर अपनी गुरु उपदेशिका श्रीमती गंगादेवी जी से पूछा कि आप संस्कृत में ऐसा विषय बतावें जिस पर पुस्तक लिखी जाने से वह सर्वोपयोगी हो सके। उन्हों ने कहा कि संस्कृतका मूल व्याकरण है, संस्कृत जिज्ञासु को पहले इसी का शरण लेना पड़ता है। उस में मुख्य पाणिनि की अष्टाध्यायी है इसी से व्याकरण की सारी प्रक्रिया चलती है और प्रायः सर्वत्र व्याकरण पढने वालों को श्रीगणेशायनमः इसी का कराया जाता है। यद्यपि इस पर काशिका आदि वृत्ति ग्रंथ विद्यमान हैं तथापि वे अति विस्तीर्ण और अति गहन होने से प्रथम सुकुमारमति बालकों की समझ में नहीं आसकते। इस लिये यदि आप चाहती हैं तो अष्टाध्यायी परही बालकोपयोगी सरल सी कोई वृत्ति तय्यार करवाइये। श्री गंगादेवी जी की यह आज्ञा पाते ही श्रीमती जी ने मेरे गुरु जयपुर संस्कृत पाठशालाध्यापक पं० जानकीलाल जी चतुर्वेदी माथुर को उस प्रकार की अष्टाध्यायी पर वृत्ति बनाने की आज्ञा दी। और उसी के अनुसार पं० जानकीलाल जी ने यह राणावतीयविद्वृत्ति नामक वृत्ति बनाई ॥

और मेरी वा माता जी की प्रार्थना से अपने सतीर्थ्य पं० जानकीलाल जी के निर्मित इस ग्रन्थ को म० म० पंडित शिवदत्त जी ने शोधकर किसी २ स्थानों में टिप्पणी कर छपने के समय प्रूफ देखने का श्रम किया ॥

श्रीमती गंगादेवीजी का पुत्र—

रामचन्द्र गौड रसालदार।

॥ श्री ॥

गङ्गानिर्झरधरो दिगम्बरः शम्बरारिहर इन्दुशेखरः ।
भोगिभूषण उदस्तदूषणः शङ्करः शुभकरः परोऽवतु ॥ १ ॥

अवनाद्गुणेषु सततं जनताया जगति विदितमहिमानः ।
राणावत्तेतिसार्थीकृतसंज्ञा भूभुजोऽभूवन् ॥२॥

तेषामनन्तरत्नप्रभवे वंशे बभूव भूमिपतिः ।
श्रीमान् प्रतापसिंहः प्रतापसूर्यः पुरुषसिंहः ॥ ३ ॥

यस्यार्तावनदीक्षिते करतले वासं समासादय-
न्त्यासप्रौढबला कृपाणलतिका कालीकटाक्षोद्भटा।
प्रोत्सर्पद्घनदर्पपर्वतशिरस्यारुह्य संगर्जतां
शत्रूणां व्यतनोन्निपत्य निकरे कालस्य लीलायितम् ॥४॥

यं रत्नप्रवरं प्रसारिमहसं संप्राप्य चित्तोढभू-
र्दीप्तिं प्राप परां पराञ्चि विदधौ यः शत्रुसैन्यान्यलम् ।
यस्यासीत् परमं व्रतं क्षितितले हिन्दुत्वसंरक्षणं
यः कीर्तिप्रकरैः करोति जगतामद्यापि भूषाविधिम् ॥५॥

पूर्वाचलादिवाऽभूत्तस्माद् द्युतिसुन्दरः कलाकलितः ।
भुवने महस्य हेतुर्नेत्रवतां चन्द्रमाः सहसमालः ॥६॥

भूपालसिंह सिंहस्तस्य सुतत्वेन जगदलञ्चक्रे ।
भिजपालसिंह भूपस्तस्माज्जन्माप पुण्यमतिः ॥७॥

तस्मादजायतोच्चैः सद्भावैर्भाविनो वखतासिंहः ।
तस्मादुपात्तजन्मा सन्मान्योऽभूत सगरासिंहः ॥ ८ ॥

तस्मादवाप भूपादुदयं श्रीमानुदयासिंहः ।
जनिमाप देवासिंहस्तस्मादभिरामसत्त्वाढ्यः ॥९॥

**गोविन्दसिंह** नामा तस्मादुदभून्महायशोधामा ।
तस्माद् **गुलाबसिंह** समाख्यस्तनुजः सन्मनोरमणः ॥१०॥
तस्माद् प्रशस्यकर्मा प्रशस्यधर्माश्रयः महामहिमा ।
**देवीसिंहो**ऽजायत, यस्य महागुणवतस्तनूभवया ॥११॥
'पितामहवरः **सवाईजयपुर**-राजस्य **रामसिंहस्य** ॥
सहधर्मिण्या पात्रावर्जितभूत्या मधुरसत्कीर्त्या' ॥१२॥
माथुर-चोबी **छिद्दा** दुहितुः सद्गुणविद्याविलसितायाः ।
**भगवान्दीन**गृहिण्याः मातुश्च मम **रामचन्द्रस्य** ॥१३॥
**गङ्गादेव्या** यस्याः स्त्रीजनशिक्षासमानचरितायाः ।
शिष्यात्मसूरीकृत्य मातृमनोराज्यपूर्णसुफलतया ॥१४॥
'श्रीगङ्गा गोपाल मदय मनोमाय **माधव** नृपस्य ।
मात्रा' सुकृतसकृपा **रूपकुमार्या** समादिष्टः ॥१५॥
**राजकुमारवयस्यो** श्रीमान् मथुराभिजनचतुर्वेदः ।
राणावतीयवंशी पाणिनिनिघ्नेषु दधिमाल्यगुणात् ॥१६॥
निर्माय यथापूर्वं समापयत्येष **जानकीलालः** ॥
दोषोऽत्र योऽभवत्सोऽनुकम्पया शोध्यतामार्यैः ॥ १७ ॥
विधुविधुपो नवचन्द्रप्रभेशराशिमृगपाणिः प्रथमः सुखाश्रयात् ।
परः सोम्योऽधिमदा शिवासत्य शिवः शिवं यस्तनुतां चिरंस्थरम् ॥१८॥

॥ श्रीराजराजेश्वरो विजयतेतराम् ॥

# चतुर्वेदजानकीलालप्रणीता श्रीभगवत्पाणिनिगोत्रजेन शलङ्कतनयेनाह्निकमुनिना प्रादुष्कृतानां शब्दानुशासनसूत्राणां राणावतीयाभिधाना वृत्तिः प्रारभ्यते ।



ताण्डवे डमरु नादनिस्वनो यस्य सोऽभजत सूत्ररूपताम् ।
त नितान्त करुणान्वितान्तर शङ्कर शुभकरं पर भजे ॥ १ ॥
जयपुर-विलासवसतेर्विशुद्धविधिसिद्धसाधुवादततेः ।
गम्भीरधीरवृत्तेः पुण्यरते रामसिंहभूमिपतेः ॥ २ ॥
पत्न्या रूपकुमार्या राणावतवंशजातजन्मायाः ।
आज्ञा प्राप्य महेशप्रसादसजातधीरधीविभव. ॥ ३ ॥
अष्टाध्यायीवृत्तिं ध्याय ध्यायं महत्तमोऽपनुदम् ।
वितनोति चारुबोधा बालसुखा जानकीलालः ॥ ४ ॥

---

अथ शब्दानुशासनम् ॥ अथ शब्दानुशासन व्याकरण,नाम शास्त्रं प्रारभ्यते ॥

रक्षोहागमलघ्वसन्देहाः प्रयोजनम् ॥ रक्षार्थं वेदानामध्येयं व्याकरणम् ॥ वेदेषु विभक्तीनामूहार्थमध्येयं व्याकरणम् ॥ 'ब्राह्मणेनावश्य शब्दा ज्ञेया.' इति वेदाज्ञापालनार्थं व्याकरणमध्येयम् ॥ लोके वेदे चार्थस्यासंदेहाय व्याकरणमध्येयम् ॥

---

* सिद्धे शब्दार्थसंबन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः ॥ १॥ नित्येऽपि शब्देऽर्थे सम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शब्देन चापशब्देन चार्थावगतौ समानायामपि शब्देनैवार्थोऽभिधेयो नापशब्देनेति धर्माय नियमः शास्त्रेण क्रियते ॥

* अस्त्यप्रयुक्तः ॥२॥ लोकेऽप्रयुक्तानां साधकं व्याकरणमनर्थकं स्यात् ॥

* अप्रयुक्ते दीर्घसत्रवत् ॥३॥ अप्रयुक्तदीर्घसत्रोपयुक्तवेदमन्त्रकल्पसूत्राध्ययनवद् अप्रयुक्तशब्दसाधकं व्याकरणमप्यध्येयमेव॥

* सर्वे देशान्तरे ॥ ४ ॥ सप्तद्वीपमयभूमीघटितत्रिलोकीरूपदेशान्तरे प्रयुज्यमाना.,११३१शाखाभेदभिन्नसाङ्गवेदकाव्यादि-

अथ प्रथमाध्यायस्य प्रथमः पादः ॥

१ वृद्धिरादैच् ॥ १ ॥ आकार ऐकार औकारश्च वृद्धिसंज्ञकाः स्युः ॥ आ-शालीयः, अहार्षीत्, ऐ-अस्तैषीत्, औ-अस्तौषीत् ॥

२ अदेङ्गुणः ॥ २ ॥[1] अकार एकार ओकारश्च गुणसंज्ञकाः स्युः ॥ अ-हर्ता सः, ए-सेता पथे, ओ-सोता ॥

३ इको गुणवृद्धी ॥ ३ ॥ गुणवृद्धिशब्दाभ्यां विधीयमाने गुणवृद्धी इक एव स्तः ॥ कृष्-कर्षति, चित्-चेतति, शुभ्-शोभते, अकार्षीत्, निज्-अनैक्षीत्, गुप्-अगौप्सीत् ॥ व्यञ्जनस्य तु न-उम्भिता ॥

४ न धातुलोप आर्धधातुके ॥ ४ ॥ धात्ववयवलोपनिमित्त आर्धधातुके परत इको गुणवृद्धी न स्तः ॥ नेन्यः, योयुवः, मरीमृजः ॥

५ क्ङिति च ॥ ५ ॥ गिति किति ङिति च परत इको गुणवृद्धी न स्तः ॥ गित्-जिष्णुः, कित्-भूतः, ङित्-अनिजत्, कित्, ङित्-मृष्टः ॥

६ दीधीवेवीटाम् ॥ ६ ॥ दीधीवेव्योरिटश्च गुणवृद्धी न स्तः ॥ आदीध्यनम्, आवेव्यनम्, भविता, आदीध्यकः, आवेव्यकः ॥

७ हलोऽनन्तराः संयोगः ॥ ७ ॥ अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ॥ घ्राणः, ग्लानः ॥

८ मुखनासिकावचनोऽनुनासिकः ॥८॥ मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् ॥ अभ्र आँ अपः (ऋ० सं०५।४८।१) । तन्मात्रम् ॥

## सवर्णसंज्ञाप्रकरणम् ।

९ तुल्यास्यप्रयत्नं सवर्णम् ॥ ९ ॥ कण्ठादि स्थानम् आभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् ॥

अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठौ[2] । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ॥

यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यः पञ्चधैव । स्पृष्टम्, ईषत्स्पृष्टम्, विवृतम्, विवृततरम्, विवृततमम्, संवृतं चेति ॥ तत्र कादिमावसानानां स्पृष्टम् । यणामीषत्स्पृष्टम् । शलामचां च विवृतम् । एङोर्विवृततरम् । ऐदौतोर्विवृततमम् । ह्रस्वाकारस्य संवृतमपि । ऋकारलृकारयोरीषत्स्पृष्टमपि ॥

१ 'यथोद्देशं संज्ञापरिभाषम्' 'कार्यकालं संज्ञापरिभाषम्' ॥

२ 'वकार ओष्ठसम्भूतो दन्ताग्रकरणं स्मृतः' इतिशिक्षान्तरम् ॥

सर्वनामसंज्ञः स्यात् ॥ वर्णाश्रमेतरे वर्णाश्रमेतराः ॥

३२ प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥ ३२ ॥ एते जसि सर्वनामसंज्ञका वा स्युः ॥ प्रथमे प्रथमाः । चरमे चरमाः । द्वितये द्वितयाः । अल्पे अल्पाः । अर्धे अर्धाः । कतिपये कतिपयाः । नेमे नेमाः ॥

३३ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥ ३३ ॥ एतेषां व्यवस्थायामसंज्ञायां गणसूत्रात् सर्वत्र प्राप्ता या सर्वनामसंज्ञा सा जसि वा स्यात् ॥ पूर्वे पूर्वाः । परे पराः । अवरे अवराः । दक्षिणे दक्षिणाः । उत्तरे उत्तराः । अपरे अपराः । अधरे अधराः ॥ व्यवस्थायां किम्? दक्षिणा गाथकाः ॥ असंज्ञायां किम्? उत्तराः कुरवः ॥

३४ स्वमज्ञातिधनाख्यायाम् ॥ ३४ ॥ ज्ञातिधनान्यवाचिनः स्वशब्दस्य गणसूत्रात् सर्वत्र प्राप्ता सर्वनामसंज्ञा जसि वा स्यात् ॥ स्वे स्वाः आत्मीया इत्यर्थः । आत्मान इति वा ॥ ज्ञातिधनवाचिनस्तु स्वा इत्येव ॥

३५ अन्तरं बहिर्योगोपसंव्यानयोः ॥ ३५ ॥ बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य गणसूत्रात् सर्वत्र प्राप्ता सर्वनामसंज्ञा जसि वा स्यात् । अन्तरे अन्तराः ॥

*अपुरीति च वक्तव्यम् । अन्तरायां पुरि ।

*विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम् । द्वितीयाय । द्वितीयस्मै ॥ तृतीयस्मात् तृतीयात् ॥

— ● —

## अव्ययसंज्ञाप्रकरणम् ।

३६ स्वरादिनिपातमव्ययम् ॥ ३६ ॥ स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः ॥ स्वः । च । प्र ॥

३७ तद्धितश्चासर्वविभक्तिः ॥ ३७ ॥ यस्मात् सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात् ॥ ततः । तत्र ॥ इह परिगणनं कर्तव्यम् । तसिलादयः प्राक् पाशपः, शस्प्रभृतयः प्राक् समासान्तेभ्यः, 'अम्' 'आम्' 'कृत्वोर्थाः' 'तसि-वती' "ना-नाञौ" इति । तेनेह न—पचतिकल्पम् ॥

३८ कृन्मेजन्तः ॥ ३८ ॥ कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् ॥ स्मारं स्मारम् । जीवसे । पिबध्यै ॥

३९ क्त्वातोसुन्कसुनः ॥ ३९ ॥ एतदन्तमव्ययं स्यात् ॥ कृत्वा प्रकृत्य । उदेतोः । विसृपः ॥

४० अव्ययीभावश्च ॥ ४० ॥ अव्ययीभावसमासोऽव्ययसंज्ञकः स्यात् ॥ अधिहरि ॥

— ● —

४१ शि सर्वनामस्थानम् ॥ ४१ ॥ शि सर्वनामस्थानसंज्ञं स्यात् ॥ ज्ञानानि वारीणि ॥

४२ सुडनपुंसकस्य ॥ ४२ ॥ स्वादि-पञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युः क्लीबस्य ॥ राजा, राजानौ, राजानः, राजानम्, राजानौ ॥

—*—

४३ न वेति विभाषा ॥ ४३ ॥ निषेध-विकल्पयोर्विभाषासंज्ञा स्यात् ॥ नेमेनेमा.॥

४४ इग्यणः संप्रसारणम् ॥ ४४ ॥ यणः स्थाने प्रयुज्यमान इक् संप्रसारणसंज्ञः स्यात् ॥ इयाज, उवाच, गृह्णाति ॥

४५ आद्यन्तौ टकितौ ॥ ४५ ॥ टित्-कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः ॥ षट्सन्तः सुगणट्पष्ठ. ॥

४६ मिदचोऽन्त्यात्परः ॥ ४६ ॥ अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् ॥ ज्ञानानि ॥

*अन्त्यात्पूर्वो मस्जेर्मिदनुषङ्गसंयोगादि-लोपार्थम् ॥ मग्नः, मङ्क्ता ॥

४७ एच इग्घ्रस्वादेशे ॥ ४७ ॥ आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात् ॥ ए–रिटिके, ओ–चित्रगुः, ऐ–अतिरि, औ–अतिनु ॥

४८ षष्ठी स्थानेयोगा ॥ ४८ ॥ अनिर्धारितसम्बन्धविशेषा षष्ठी स्थानेयोगा बोध्या ।

* निर्दिश्यमानस्यादेशा भवन्ति ॥ अस्तेर्भूः, भूत्वा । सुपदः ॥

४९ स्थानेऽन्तरतमः ॥ ४९ ॥ प्रसङ्गे सति सदृशतम आदेशः स्यात् ॥

* यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥ दध्यत्र । मध्वत्र । जेता । स्तोता ॥

५० उरण् रपरः ॥ ५० ॥ ऋवर्णस्य स्थाने प्रसज्यमानोऽण् रपर एव प्रवर्तते ॥ करोति ॥ गिरतः । पिपुरति ॥

*ऌकारस्य लपरत्वं वक्ष्यामि । इति सवर्णसंज्ञासूत्रे भाष्यम् ॥ तवल्कारः । उपाल्कारीयति ॥

५१ अलोऽन्त्यस्य ॥ ५१ ॥ यत्र कार्ये स्थानेयोगा षष्ठी निर्दिश्यते तत्कार्यं स्थान्यवयवान्त्यस्याल. स्यात् ॥ पञ्चाम् ॥

५२ ङिच्च ॥५२॥ अनन्त्यार्थङिदादेशो ऽन्त्यस्यैव स्यात्। सर्वस्येत्यस्यापवादः॥ गवाश्रम् । सखा ॥ अन्त्यार्थस्तु नान्त्यस्य, किन्तु सर्वस्यैव–भवतात् ॥

५३ आदेः परस्य ॥ ५३ ॥ परस्य यद्विहितं कार्यं तत्तस्यादेर्बोध्यम् । अन्त्य-स्येत्यस्यापवादः ॥ उत्थानम् ॥

५४ अनेकाल् शित् सर्वस्य ॥ ५४ ॥ अनेकालादेशः शिदादेशश्च स ैस्य स्थाने स्यात् ॥ 'अलोन्त्य' सूत्रस्य 'आदेः' इति सूत्रस्य चापवादः ॥ जरसौ, भवतात्, रामैः ॥

नानुबन्धकृतमनेकाल्त्वम् । अर्वन्तौ ॥ शित्—इतः । अष्टौ ॥

—*—

## स्थानिवत्प्रकरणम् ।

५५ स्थानिवदादेशोऽनल्विधौ ॥५५॥ आदेशः स्थानिवत्स्यात् ॥ रामाय ॥ न तु स्थान्यलाश्रयविधौ—व्यूढोरस्केन द्यौः पन्थाम् क इष्टः ॥

५६ अचः परस्मिन्पूर्वविधौ ॥ ५६ ॥ परनिमित्तोऽजादेशः स्थानिवत्स्यात्स्थानीभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये। कथयति ।

५७ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥५७॥ पदान्तविधौ द्विर्वचनादौ च कर्तव्ये परनिमित्तो ऽजादेशो न स्थानिवत् ॥ पदान्ते—कानि सन्ति । द्विर्वचने—दध्यत्र । वरे—यायावरः । यलोपे—याति । स्वरे चिकीर्षकः ॥ सवर्णे—शिण्ढि । अनुस्वारे—शिंषन्ति । दीर्घे—प्रतिदाम्नः । जशि—सग्धिश्च मे (वा० सं० १८।९) । चरि—जक्षतुः ॥

*स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत् । लोपाभावस्तु स्थानिवत्वेन नद्वः कियौः वाय्वोः ॥

* पूर्वत्रासिद्धे न स्थानिवत् । राज्ञः ।

* तस्य दोषः संयोगादिलोपलत्वणत्वेषु ॥ कास्यर्थम् । निपार्यते निपात्यते । माषवपनी ॥

* क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् ॥ अक्षमाक्षाण्यौ आमलकम् पारिखीयः, मतीमसृज दीप्ती परिवानकेन अर्थपतीः के अर्थः ॥

५८ द्विर्वचनेऽचि ॥ ५८ ॥ द्वित्वनिमित्तेऽचि अजादेशः स्थानिवद्भवति द्विर्वचन एव कर्तव्ये ॥ चक्रतुः ॥

५९ अदर्शनं लोपः ॥ ५९ ॥ प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् ॥ राम ॥

६० प्रत्ययस्य लुक्श्लुलुपः ॥ ६० ॥ लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात् तत्तत्संज्ञं स्यात् ॥ अत्ति । जुहोति । पञ्चालाः ॥

६१ प्रत्ययलोपे प्रत्ययलक्षणम् ॥६१॥ प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् ॥ राजा ॥

६२ न लुमताङ्गस्य ॥ ६२ ॥ लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् ॥ अत्ति ॥

६३ अचोऽन्त्यादि टि ॥ ६३ ॥ अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् ॥ पचः ॥

६४ अलोऽन्त्यात्पूर्व उपधा ॥ ६४ ॥ अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् ॥ चेतति ॥

६५ तस्मिन्निति निर्दिष्टे पूर्वस्य ॥६५॥ सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् ॥ सुध्युपास्यः ॥

६६ तस्मादित्युत्तरस्य ॥ ६६ ॥ पञ्चमी-

निर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य बोध्यम् ॥ सन्त्सः ॥

*उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ आसीन. ॥

६७ स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ ६७ ॥ स्वं रूपं निर्दिष्टानुपूर्वी स्वविशिष्टस्यैव शब्दस्य संज्ञा ग्राहिका, शब्दशास्त्रे या संज्ञा तां विना ॥ आग्नेयम् । सखायौ ॥ दाधा ध्वदाप् 'उपसर्गे घोः किः' विधिः सधिः ॥

* अर्थवद्ग्रहणे नानर्थकस्य ॥ प्रौढः । प्रोढवान् ॥

६८ अणुदित्सवर्णस्य चाप्रत्ययः ॥ ६८ ॥ अण् उदिच्च सवर्णस्य संज्ञा स्यात् ॥ अत्रैवाण् परेण णकारेण । 'परत्व' चयः,नयः ॥

* सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्

* भाव्यमानेन सवर्णानां ग्रहणं न । 'इदम इश्' इतः इह ॥

कुचुटुतुपु एते उदितः । 'कुहोश्चुः' जगाद ॥

६९ तपरस्तत्कालस्य ॥ ६९ ॥ तकारतकारौ परौ यस्मात्स,ताभ्या परश्चोच्चार्यमाणः समकालस्यैव संज्ञा स्यात् ॥ तरति, प्रजेश्वरः, कोढा ॥

७० आदिरन्त्येन सहेता ॥ ७० ॥ अन्त्येनेता सहित आदिर्मध्यगाना स्वस्य च संज्ञा स्यात् ॥ यथाऽणिति अ इ उ वर्णाना संज्ञा । 'उरण्रपरः' तरति किरति पिपुरति ॥

७१ येन विधिस्तदन्तस्य ॥ ७१ ॥ विशेषण तदन्तस्य संज्ञा स्यात् । स्वस्य च रूपस्य ॥ हरे । पः ॥

*समासप्रत्ययविधौ प्रतिषेधः ॥ कष्टं परमश्रितः । सात्रमाद्धिः ॥

*उगिद्वर्णग्रहणवर्जम् ॥ भवती । अतिभवती ॥ जय. ॥

*यस्मिन्विधिस्तदादावल्ग्रहणे ॥ श्रियम् ॥

७२ वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ ७२ ॥ यस्य समुदायस्याचा मध्ये आदिर्वृद्धिस्तद् वृद्धसंज्ञ स्यात् ॥ शालीयः ॥

* गोत्रान्ताद्वाऽसमस्तवत् ॥ ओदनपाणिनीयाः पैङ्गलकाण्वाः ॥

* जिह्वाकात्यहरितकात्यवर्जम् ॥ जैह्वाकाताः, हारितकाताः ॥

* 'वा नामधेयस्य' वृद्धसंज्ञा ॥ देवदत्तीयाः दैवदत्ता. ॥

७३ त्यदादीनि च ॥ ७३ ॥ त्यदादीनि वृद्धसंज्ञानि स्यु. ॥ तदीयः ॥

७४ एङ् प्राचां देशे ॥ ७४ ॥ एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद् देशाभिधाने ॥ एणीपचनीय । गोनर्दीय. ॥ ऐणीपचन. । गौनर्द ॥

इति पाणिनीयसूत्रवृत्त्या प्रथमाध्यायस्य प्रथमपाद. समाप्त. ॥

१ 'एव तर्हि तपरस्तत्कालस्येति दकारोऽपि चर्त्वभूतो निर्दिश्यते' इति "तित्स्वरितम्" इति सूत्रे भाष्यम् ॥

८९ यमो गन्धने ॥ १५ ॥ परदोष वि-चकरणे यमेस्तङ् सु सिच कित ॥ उदायत ॥

९० विभाषोपयमने ॥ १६ ॥ उपयमने यमः सिच् किद्वा ॥ रामः सीताम् उपायत । उपायंस्त वा ॥

९१ स्थाघ्वोरिच्च ॥ १७ ॥ स्थाधातो-र्घुसञ्ज्ञकाच्च परः सिच् कित् धातोरिकारो ऽन्तादेशश्च ॥ प्रास्थित । अदित अधित ॥

९२ न क्त्वा सेट् ॥ १८ ॥ इडागम-सहितः क्त्वाप्रत्ययः किन्न स्यात् ॥ शयित्वा ॥

९३ निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ॥ १९ ॥ शीङादिभ्यः परौ सेटौ क्तक्तवतू कितौ न स्तः ॥ शयितः शयितवान् । स्वेदितः स्वेदितवान् । मेदितः मेदितवान् । क्ष्वेदितः क्ष्वेदितवान् । धर्षितः धर्षितवान् ॥

९४ मृषस्तितिक्षायाम् ॥ २० ॥ मृषः परा सेड् निष्ठा किन्न स्यात्तितिक्षायाम् ॥ मर्षितः । मर्षितवान् ॥

९५ उदुपधाद् भावादिकर्मणोरन्यतरस्याम् ॥ २१ ॥ उदुपधात्परा भावे आदिकर्मणि च या सेड् निष्ठा सा वा किन्न स्यात् ॥ द्युतितम् द्योतितम् ॥ मुदितः मोदितः ॥

९६ पूङः क्त्वा च ॥ २२ ॥ पूङः परो सेटौ क्त्वानिष्ठाप्रत्ययौ कितौ न स्तः ॥ पवित्वा । पवितः । पवितवान् ॥

९७ नोपधात्थफान्ताद्वा ॥ २३ ॥ नकारोपधात् थकारफकारान्तात् परः सेट् क्त्वा किद्वा स्यात् ॥ श्रथित्वा । श्रन्थित्वा । गुफित्वा गुम्फित्वा ॥

९८ वञ्चिलुञ्च्यृतश्च ॥ २४ ॥ एभ्यः सेट् क्त्वा किद्वा स्यात् ॥ वचित्वा वञ्चित्वा । लुचित्वा लुञ्चित्वा । ऋतित्वा अर्तित्वा ॥

९९ तृषिमृषिकृशेः काश्यपस्य ॥ २५ ॥ एभ्यः सेट् क्त्वा किद्वा ॥ तृषित्वा तर्षित्वा । मृषित्वा मर्षित्वा । कृशित्वा कर्शित्वा ॥

१०० रलो व्युपधाद्धलादेः संश्च ॥ २६ ॥ इवर्णोवर्णोपधाद् हलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः ॥ लिखित्वा लेखित्वा । द्युतित्वा द्योतित्वा । लिलिखिषति लिलेखिषति । दिद्युतिषते । दिद्योतिषते ॥

—*—

१०१ ऊकालोऽज्झ्रस्वदीर्घप्लुतः ॥ २७ ॥ एकद्वित्रिमात्रोकाराणामुच्चारणकाल इवोच्चारणकालो यस्य सोऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् ॥ जगाधे जीयते । आगच्छ कृष्ण ३ अत्र गौश्चरति ॥

१ प्रथमःणवकारद्वयवानेव सूत्रपाठो ह्यवरट् सूत्रे भाष्ये दर्शित ।

सुब्रह्मण्योऽम्[1] (शत० ब्रा० ३।३।४।१७) ॥

* आकार आख्याते परादिश्च (उदात्तो भवति) । इन्द्र आगच्छ[2] (शत० ब्रा० ३।३।४।१८) ॥

* वाक्यादौ च द्वे द्वे (उदात्ते भवतः) । इन्द्र[3] आगच्छ ॥

* मघवन्वर्जम् । आगच्छ मघवन्[4] ॥ (लाट्यायनश्रौ०सू० १।३।१५) ॥

* सुत्यापराणामन्तः (उदात्तो भवति) ॥ द्व्यहे[5] सुत्याम् (शत० ब्रा० ३।३।४।१९) ॥

* असावित्यन्तः[6] ॥ प्रथमान्तस्यान्त उदात्तो भवति ॥ गार्ग्यो यजते ॥

* अमुष्येत्यन्तः । षष्ठ्यन्तस्यान्त उदात्तो भवति ॥ दाक्षेः[7] पिता यजते ॥

* स्यान्तस्योपोत्तममुदात्तं भवति अन्त्यश्च । गार्ग्यस्य पिता यजते ॥

* वा नामधेयस्य स्यान्तस्योपोत्तममुदात्तं भवति । देवदत्तस्य[8] पिता यजते ॥

११२ देवब्रह्मणोरनुदात्तः ॥ ३८ ॥

देव-ब्रह्मणोः स्वरितस्यानुदात्त आदेशः ॥ सुब्रह्मण्याम् ॥

---

१ इमानि नापूर्वविधायकानि किंतु सूत्रसिद्धार्थानुवादकानि ॥ सुब्रह्मणि साध्वीति यत्प्रत्यये स्वरित-शेषनिघाताभ्यां सुब्रह्मण्यशब्दात्स्वरितान्तादाप्प्रत्यये ऽनुदात्ते दीर्घैकादेशात्स्वरितत्वात् परे उदात्ते ओम्शब्दे परे 'ओमाङोश्च' इत्यनेन पररूपस्य स्वरितस्योकारस्य स्थाने अनेनोदात्ते जाते 'सुब्रह्मण्योम्' इति त्र्यनुदात्त उदात्तान्तं सम्पद्यते ॥

२ 'आगच्छ' इत्येवोदाहरणम् । आमन्त्रितस्योत्तरवार्तिकोदाहरणत्वेन वक्ष्यमाणत्वात् । आकारो निपातत्वेनोदात्त । तत परस्य तिङन्तस्य निघाते जाते उदात्तात् परत्वेन जातस्य गकाराकारस्य स्वरित-त्वेनोदात्ते कृते द्व्युदात्तो एकश्छकाराकारो ऽनुदात्त संपद्यते ॥

३ इन्द्र इत्यस्यामन्त्रितत्वेन षष्ठि आद्युदात्ते शेषनिघाते च कृते उदात्तात्परस्यानुदात्तस्य स्थाने जातस्य स्वरितस्यानेनोदात्तत्वे जाते इन्द्र इति द्वावप्यचौ उदात्तौ । शेष प्रश्लिष्टेति चत्वार उदात्ता , छकाराकारोऽनुदात्त संपद्यते ॥ ब्राह्मणे तु कृतप्रथमदीर्घे उपलभ्यते । तत्र त्रय प्रथमे उदात्ता ॥

४ 'आगच्छ मघवन्' इत्यत्र आद्युदात्ततया छकाराकारस्यानुदात्तत्वेन तत परस्यामन्त्रितनिघातेऽप्यु-दात्तात्परत्वाभावेन स्वरितादेशासम्भवेन नैवोदात्तप्राप्तिरिति प्रथमौ द्व्युदात्तौ । तत परे चत्वारोऽनुदात्ता सपन्ना ॥

५ 'श्व सुत्याम्' इति ब्राह्मणे पाठ । तत्र 'श्व ' इत्यस्य स्थाने 'द्व्यहे' 'त्र्यहे' इत्यूहः टचश्चित्त्वादन्तो-दात्तता ॥ एवमेवोहो लाट्यायनश्रौतसूत्रे 'एतावदहे' 'यावदहे' शब्दाभ्यां दर्शित ॥

६–८ अपूर्वो विधय । नित्यादाद्युदात्तत्वे प्राप्ते ऽन्तोदात्तविधानम् ॥

उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् ॥ चित्रगु ॥ अतिमालः ॥ निष्कौशाम्बिः । निष्कुदः ॥

* ईयसो बहुव्रीहेः प्रतिषेधो वक्तव्यः । बहुश्रेयसी ॥

१२३ लुक्तद्धितलुकि ॥ ४९ ॥ तद्धितलुकि सति उपसर्जनस्त्रीप्रत्ययस्य लुक् स्यात्॥पञ्च इन्द्राण्यो देवता अस्य पञ्चेन्द्रः॥

१२४ इद्गोण्याः ॥ ५० ॥ तद्धितलुकि सति गोण्या इदादेशो भवति ॥ पञ्चभिर्गोणीभिः क्रीतः पञ्चगोणिः ॥

१२५ लुपि युक्तवद् व्यक्तिवचने॥५१॥ लुपि सति प्रकृतिवल्लिङ्गवचने स्तः ॥ पञ्चालाना निवासो जनपदः पञ्चालाः ॥

१२६ विशेषणानां चाजातेः ॥ ५२ ॥ लुबर्थस्य विशेषणानामपि प्रकृतिवल्लिङ्गवचने स्तो जातिं वर्जयित्वा ॥ पञ्चाला रमणीयाः ॥

* हरीतक्यादिषु व्यक्तिः (भवति युक्तवद्भावेन) ॥ हरीतक्याः फलानि हरीतक्यः फलानि ॥

* खलतिकादिषु वचनम् (भवति युक्तवद्भावेन) ॥ खलतिकस्य पर्वतस्यादूरभवानि वनानि खलतिकं वनानि ॥

* मनुष्यलुपि प्रतिषेधः ॥ चञ्चाऽभिरूपः ॥

—∘—

१२७ तदशिष्यं संज्ञाप्रमाणत्वात् ॥५३॥ युक्तवद्भावलक्षणं न वक्तव्यं संज्ञानां प्रमाणत्वात्। संज्ञाशब्दा हि नानालिङ्गसंख्याः प्रमाणम् पञ्चाला वरणा इति च । नैते योगशब्दाः, किंतर्हि जनपदादीनां संज्ञा एताः, तत्र लिङ्गं वचनं च स्वभावसिद्धमेव, न यत्नप्रतिपाद्यम् । यथा आपो दारा इति।

१२८ लुब्योगाप्रख्यानात् ॥ ५४ ॥ लुबप्यशिष्यः, किं कारणम् ? योगाप्रख्यानात् । नहि पञ्चाला वरणा इति योगसम्बन्धः प्रख्यायते । नैतदुपलभामहे वृक्षयोगान्नगरे वरणा इति, किंतर्हि संज्ञा एताः । तस्मादत्र 'तस्य निवासः' 'अदूरभवश्च' इति तद्धितो नैवोत्पद्यते किं लुपो विधानेन ॥

१२९ योगप्रमाणे च तदभावेऽदर्शनं स्यात् ॥ ५५ ॥ 'पञ्चालादयः संज्ञाशब्दा न योगनिमित्ता'इत्युक्तम्,तच्चावश्यमेवाभ्युपगन्तव्यम् । योगप्रमाणे हि तदभावे ऽदर्शनं स्यात् । यदि पञ्चालादिशब्दो योगस्य प्रमाणं योगस्य वाचकः स्यात् ततस्तदभावेऽदर्शनमप्रयोगः स्यात् । दृश्यते च सम्प्रति विनैव क्षत्रियसम्बन्धेन जनपदेषु पञ्चालादिशब्दः, ततोऽवसीयते 'नायं योगनिमित्तकः, किं तर्हि, रूढिरूपेणैव तत्र प्रवृत्तः' इति ॥

१३० प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ॥ ५६ ॥ "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इति

१ विशेषणानामेवायं प्रतिषेधः । लुबर्थस्य तु भवति बोध्यम् ।

* एकार्थानामपि विरूपाणामेकशेषः ॥ वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ, कुटिलदण्डौ ॥

* स्वरभिन्नानां यस्योत्तरः स्वरविधिः ॥ अक्षश्च अक्षश्च = अक्षौ ॥

१३९ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥ ६५ ॥ युवप्रत्ययान्तेन सहोक्तौ गोत्रप्रत्ययान्तः शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात् ॥ गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ ॥

१४० स्त्री पुंवच्च ॥ ६६ ॥ यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत् ॥ गार्गी च गार्ग्यायणश्च गार्ग्यौ ॥ गार्गी च गार्ग्यायणौ च गर्गाः ॥

१४१ पुमान् स्त्रिया ॥ ६७ ॥ स्त्रिया सहोक्तौ पुमान् शिष्यते स्त्रीपुंलक्षण एव चेद्विशेषो भवति ॥ हंसी च हंसश्च हंसौ ।

१४२ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ६८ ॥ स्वसृ—दुहितृभ्यां सहोक्तौ भ्रातृ—पुत्रौ क्रमेण शिष्येते ॥ भ्राता च स्वसा च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ ॥

१४३ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ ६९ ॥ अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत् स्यात्, तल्लक्षण एव विशेषश्चेत् ॥ शुक्लः पटः शुक्ला शाटी शुक्लं वस्त्रम् तदिदं शुक्लम्, तानीमानि शुक्लानि ॥

१४४ पिता मात्रा ॥ ७० ॥ मात्रा सहोक्तौ पिता वा शिष्यते ॥ माता च पिता च पितरौ, मातापितरौ ॥

१४५ श्वशुरः श्वश्र्वा ॥ ७१ ॥ श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते ॥ श्वश्रूश्च श्वशुरश्च श्वशुरौ, श्वश्रूश्वशुरौ ॥

१४६ त्यदादीनि सर्वैर्नित्यम् ॥ ७२ ॥ सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते ॥ स च देवदत्तश्च तौ ॥

* त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि भवन्ति ॥ सा च देवदत्तश्च तौ ॥

* अद्वन्द्वतत्पुरुषविशेषणानाम् ॥ स (कुक्कुटः) च सा (मयूरी) च कुक्कुटमयूर्यौ ते ॥ तच्च सा च अर्धपिप्पल्यौ ते ॥

* त्यदादीनां मिथः सहोक्तौ परं शिष्यते ॥ स च यश्च यौ ॥

* पूर्वशेषदर्शनाच्च ॥ स च यश्च तौ ॥

१४७ ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ॥ ७३ ॥ एतेषु सहविवक्षायां स्त्री शिष्यते ॥ सौरसेयाश्च सारमेय्यश्च सारमेय्यः । गाव इमाः

* अनेकशफेष्विति वाच्यम् ॥ इह मा भूत् अश्वा इमे चरन्ति ॥ खराश्च खर्यश्च खराः ॥

॥ इति प्रथमाध्यायस्य द्वितीयः पादः ॥

—*—

## अथ प्रथमाध्यायस्य तृतीयः पादः

१४८ भूवादयो धातवः ॥ १ ॥ क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥ भवति एधते ॥

१ उत्तर –अध्याध्याघ्या पर. । यथा 'आवदात्तश्च' इत्यत्र, 'इत्यादि' इति ॥

* प्रतिषेधे हसादीनामुपसंख्यानम् ॥ व्यतिहसन्ति । व्यतिजल्पन्ति । व्यतिपठन्ति ॥

* हरतेरप्रतिषेधः ॥ सम्प्रहरन्ते राजानः ॥

१६३ इतरेतरान्योन्योपपदाच्च ॥ १६ ॥ इतरेतरोपपदादन्योन्योपपदाच्च कर्मव्यतिहारे आत्मनेपदं न स्यात् ॥ इतरेतरस्य व्यतिलुनन्ति । अन्योन्यस्य व्यतिलुनन्ति ॥

* परस्परोपपदाच्चेति वक्तव्यम् ॥ परस्परस्य व्यतिलुनन्ति ॥

१६४ नेर्विशः ॥ १७ ॥ निपूर्वाद्विशतेरात्मनेपदं स्यात् ॥ निविशते ॥

१६५ परिव्यवेभ्यः क्रियः ॥ १८ ॥ एभ्य उत्तरात्क्रीणातेरात्मनेपदं स्यात् ॥ परिक्रीणीते । विक्रीणीते । अवक्रीणीते ॥

१६६ विपराभ्यां जेः ॥ १९ ॥ विपरापूर्वाज्जयतेरात्मनेपदं स्यात् ॥ विजयते पराजयते ॥

१६७ आङो दोऽनास्यविहरणे ॥ २० ॥ आङ्पूर्वाद्ददातेरात्मनेपदं स्यात्,न त्वास्यविहरणे । विद्यामादत्ते ॥

* अस्यसंनक्रियस्येतिवाच्यम् ॥ पिपीलिका व्याददाते ॥

* स्वाङ्गकर्मकाच्चेति वक्तव्यम् ॥ इह मा भूत्—व्याददते पिपीलिकाः पतङ्गस्य मुखम् ॥

१६८ क्रीडोऽनुसंपरिभ्यश्च ॥ २१ ॥ अनुसंपरिपूर्वात् क्रीडतेरात्मनेपदं स्यात् ॥ अनुक्रीडते । सक्रीडते । परिक्रीडते ॥

* समोऽकूजने इति वक्तव्यम् ॥ संक्रीडन्ति शकटानि ॥

* आगमेः क्षमायाम् ॥ माणवक आगमयस्व तावत् ॥

* शिक्षेर्जिज्ञासायाम् ॥ विद्यासु शिक्षते ।

* किरतेर्हर्षजीविकाकुलायकरणेषु ॥ अपस्किरते वृषो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा आश्रयार्थी ॥

* हरतेर्गतताच्छील्ये ॥ पैतृकमश्वा अनुहरन्ते ॥

* आशिषि नाथः ॥ सर्पिषो नाथते ॥

* आङि नुप्रच्छयोः ॥ आनुते । आपृच्छते ॥

* शप उपलम्भने ॥ देवदत्ताय शपते ॥

१६९ समवप्रविभ्यः स्थः ॥ २२ ॥ समवप्रविपूर्वात्तिष्ठतेरात्मनेपदं स्यात् ॥ सन्तिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते

१ व्ययन विभागो विक्रमनमित्यर्थ इति कैयट ॥

२—नानार्थं तु 'नाथम किमु पतिं न भूभृताम्' इति कुमारे, 'दीन त्वामनु नाथते कुचयुग पत्रावृतं मा कृथाः' इति काव्यप्रकाशोदाहृते च तवर्गचतुर्थान्त एव पाठो ऽस्तीति दाधिमथा ॥

३—उपलम्भन प्रकाशनमिति कैयट ॥

* आङः स्थः प्रतिज्ञाने ॥ अस्तिं सकारादिमातिष्ठते ॥

१७० प्रकाशनस्थेयाख्ययोश्च ॥ २३ ॥ स्वाभिप्रायप्रकाशने स्थेयस्य निर्णेतरि च तिष्ठतेरात्मनेपदं स्यात् । तिष्ठते कन्या छात्रेभ्यः । संशय्य कर्णादिषु तिष्ठते यः (किरा ॥

१७१ उदोऽनूर्ध्वकर्मणि ॥ २४ ॥ उत्पूर्वात्तिष्ठतेरनूर्ध्वकर्मणि वर्तमानादात्मनेपदं स्यात् ॥ गेहे उत्तिष्ठते ॥

* उत ईहायामिति वक्तव्यम् ॥ इह मा भूत्—शतमुत्तिष्ठति ॥

१७२ उपान्मन्त्रकरणे ॥ २५ ॥ उपपूर्वात्तिष्ठतेर्मन्त्रकरणेऽर्थे वर्तमानादात्मनेपदं स्यात् ॥ आग्नेय्याग्नीध्रमुपतिष्ठते ॥

* उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वक्तव्यम् ॥ आदित्यमुपतिष्ठते । रथिकानुपतिष्ठते । महामात्रानुपतिष्ठते । अयं पन्थाः स्रुघ्नमुपतिष्ठते ॥

* वा लिप्सायामिति वक्तव्यम् ॥ भिक्षुको ब्राह्मणकुलमुपतिष्ठते उपतिष्ठति वा ॥

१७३ अकर्मकाच्च ॥ २६ ॥ उपपूर्वात्तिष्ठतेरकर्मकादात्मनेपदं स्यात् ॥ यावद्भुक्तमुपतिष्ठते ॥

१७४ उद्विभ्यां तपः ॥ २७ ॥ उद्-वि-पूर्वात्तपतेरकर्मकादात्मनेपदं स्यात् । उत्तपते । वितपते ।

* स्वाङ्गकर्मकाच्चेति वक्तव्यम् ॥ उत्तपते पाणिम् । वितपते पाणिम् ॥

१७५ आङो यमहनः ॥ २८ ॥ आङ्पूर्वाभ्यामकर्मकाभ्यां यमहनिभ्यामात्मनेपदं स्यात् । आयच्छते । आहते ।

* स्वाङ्गकर्मकाच्च ॥ आयच्छते पाणिम् । आहते शिरः ॥

१७६ समो गम्यृच्छिभ्याम् ॥ २९ ॥ संपूर्वाभ्यां गमिऋच्छिभ्यामात्मनेपदं स्यात् । संगच्छते । समृच्छते ॥

* समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानम् ॥ संवित्ते । संपृच्छते । संस्वरते ॥

* अर्तिश्रुदृशिभ्यश्च ॥ मा समृत । संशृणुते । संपश्यते ।

* उपसर्गादस्यत्यूह्योर्वावचनम् ॥ निरस्यति निरस्यते । समूहति । समूहते । अभ्यूहति । अभ्यूहते । अभ्यूहति । अभ्यूहते ॥

१७७ निसमुपविभ्यो ह्वः ॥ ३० ॥ एभ्योऽकर्मकात् ह्वयतेरात्मनेपदं स्यात् । निह्वयते । संह्वयते । उपह्वयते । विह्वयते ॥

१७८ स्पर्धायामाङः ॥ ३१ ॥ आङ्पूर्वात् ह्वयतेः स्पर्धायामात्मनेपदं स्यात् । आह्वयते छात्रश्छात्रम् ॥

१७९ गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ ३२ ॥ गन्धनादिष्वर्थेषु करोतेरात्मनेपदम् ॥ उत्कुरुते । श्येनो वर्तिकामुदाकुरुते । हरिमुपकुरुते । परदारान्प्रकुरुते । एधो दक-

स्योपस्कुरुते । गाथाः प्रकुरुते । शत प्रकुरुते ॥

१८० अधेः प्रसहने ॥ ३३ ॥ अधिपूर्वात्करोतेः प्रसहने आत्मनेपदं स्यात् ॥ अधिकुरुते ॥

१८१ वेः शब्दकर्मणः ॥ ३४ ॥ विपूर्वात्करोतेः शब्दकर्मण आत्मनेपदं स्यात् ॥ विकुरुते स्वरान् ॥

१८२ अकर्मकाच्च ॥ ३५ ॥ विपूर्वात्करोतेरकर्मकादात्मनेपदं स्यात् । विकुर्वते सैन्धवाः ॥

१८३ संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ ३६ ॥ समाननादिषु नयतेरात्मनेपदं स्यात् । पदार्थान्नयते । दण्डमुन्नयते । माणवकमुपनयते । तत्त्वं नयते । कर्मकरानुपनयते । करं विनयते । शतं विनयते ॥

१८४ कर्तृस्थे चाशरीरे कर्मणि ॥ ३७ ॥ नियः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्न एव स्यात् । क्रोधं विनयते ॥

१८५ वृत्तिसर्गतायनेषु क्रमः ॥ ३८ ॥ अप्रतिबन्धोत्साहस्फीतेषु क्रमेरात्मनेपदं स्यात् ॥ ऋचि क्रमते बुद्धिः । अध्ययनाय क्रमते । क्रमन्तेऽस्मिन्शास्त्राणि ॥

१८६ उपपराभ्याम् ॥ ३९ ॥ आभ्यां क्रमेरात्मनेपदं स्यात् ॥ उपक्रमते पराक्रमते ॥

१८७ आङ उद्गमने ॥ ४० ॥ आङ्पूर्वात्क्रमतेरुद्गमने आत्मनेपदं स्यात् । आदित्य आक्रमते ॥

* ज्योतिरुद्गमन इति वाच्यम् ॥ इह मा भूत्-आक्रामति धूमो हर्म्यतलात् ॥

१८८ वेः पादविहरणे ॥ ४१ ॥ विपूर्वात्क्रमतेः पादविहरणेऽर्थे आत्मनेपदं स्यात् । साधु विक्रमते ॥

१८९ प्रोपाभ्यां समर्थाभ्याम् ॥ ४२ ॥ प्रारम्भार्थाभ्यां प्रोपाभ्यां क्रमेरात्मनेपदं स्यात् ॥ प्रक्रमते भोक्तुम् । उपक्रमते भोक्तुम् ॥

१९० अनुपसर्गाद्वा ॥ ४३ ॥ उपसर्गवियुक्तात्क्रमतेरात्मनेपदं वा ॥ क्रमते क्रामति ।

१९१ अपह्नवे ज्ञः ॥ ४४ ॥ अपह्नवे वर्तमानाज्जानातेरात्मनेपदं स्यात् ॥ शतमपजानीते ॥

१९२ अकर्मकाच्च ॥ ४५ ॥ जानातेरकर्मकादात्मनेपदं स्यात् । सर्पिषो जानीते ॥

१९३ संप्रतिभ्यामनाध्याने ॥ ४६ ॥ समतिपूर्वाज्जानातेरनाध्याने आत्मनेपदं स्यात् । शतं प्रतिजानीते ॥

१९४ भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ ४७ ॥ भासनादिषु वदेरात्मनेपदं स्यात् ॥ वदते बुद्धिर्लोकायते कर्मकरानुपवदते । शास्त्रे देवो वदते । क्षेत्रे वदते । गेहे विवदन्ते । परदारानुपवदते ॥

१९५ व्यक्तवाचां समुच्चारणे ॥ ४८ ॥ मनुष्यादीनां सहोच्चारणे वदेरात्मनेपदं

स्यात् ॥ संप्रवदन्ते ब्राह्मणाः ॥

१९६ अनोरकर्मकात् ॥ ४९ ॥ वदधि यद्योऽनुपूर्वादकर्मकाद्वदेरात्मनेपदं स्यात् ॥ अनुवदते कठः कलापस्य ॥

१९७ विभाषा विप्रलापे ॥ ५० ॥ विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणे वदे रात्मनेपदं स्यात् । विप्रवदन्ते मौहूर्ताः । विप्रवदन्ति मौहूर्ताः ॥

१९८ अवाद्ग्रः ॥ ५१ ॥ अवाद्गिरते रात्मनेपदं स्यात् । अवगिरते ॥

१९९ समः प्रतिज्ञाने ॥ ५२ ॥ संपूर्वा द्गिरतेरात्मनेपदं स्यात्प्रतिज्ञाने ॥ नित्यं शब्दं संगिरन्ते ॥

२०० उदश्चरः सकर्मकात् ॥ ५३ ॥ उत्पूर्वात्सकर्मकाच्चरतेरात्मनेपदं स्यात् । गेहमुच्चरते ॥

२०१ समस्तृतीयायुक्तात् ॥ ५४ ॥ संपूर्वाच्चरतेस्तृतीयान्तेन युक्तादात्मनेपदं स्यात् । अश्वेन संचरते ।

२०२ दाणश्च सा चेच्चतुर्थ्यर्थे ॥५५॥ संपूर्वाद्दाणस्तृतीयान्तेन युक्तादात्मनेपदं स्यात् । सा तृतीया चतुर्थ्यर्थे चेत् ॥

* अशिष्टव्यवहारे दाणः प्रयोगे तृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम् ॥ दास्या संयच्छते कामी ॥

२०३ उपाद्यमः स्वकरणे ॥ ५६ ॥ उप पूर्वाद्यमः स्वकरणे आत्मनेपदं स्यात् ॥ भार्यामुपयच्छते ॥

२०४ ज्ञाश्रुस्मृदृशां सनः ॥ ५७ ॥ सन्नन्तेभ्य एभ्य आत्मनेपदं स्यात् । धर्मं जिज्ञासते । गुरुं शुश्रूषते । नष्टं सुस्मूर्षते । नृपं दिदृक्षते ॥

२०५ नानोर्ज्ञः ॥ ५८ ॥ अनुपूर्वात्सन्नन्ताज्जानातेरात्मनेपदं न स्यात् ॥ पुत्रमनु जिज्ञासति ॥

२०६ प्रत्याङ्भ्यां श्रुवः ॥ ५९ ॥ प्रत्याङ्पूर्वात्सन्नन्ताच्छ्रुवः आत्मनेपदं न स्यात् ॥ प्रतिशुश्रूषति आशुश्रूषति ॥

२०७ शदेः शितः ॥ ६० ॥ शित्संबन्धिनः शदेरात्मनेपदं स्यात् । शीयते शीयताम् अशीयत शीयेत ॥

२०८ म्रियतेर्लुङ्लिङोश्च ॥ ६१ ॥ लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङ आत्मनेपदं स्यात् । अमृत । मृषीष्ट । म्रियते । म्रियताम् । अम्रियत । म्रियेत ॥

२०९ पूर्ववत्सनः ॥ ६२ ॥ सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादात्मनेपदं स्यात् । शिशयिषते । निविविक्षते ॥

२१० आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ॥ ६३ ॥ अनुप्रयुज्यमानात् कृञ आम्प्रत्ययवत् तुल्यमेवात्मनेपदं स्यात् । एधांचक्रे ॥

२११ प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥६४॥ प्रउपपूर्वाद्युजेरयज्ञपात्रविषयादात्मनेपदं स्यात् । प्रयुङ्क्ते । उपयुङ्क्ते ॥

* स्वराद्यन्तोपसर्गादिति वक्तव्यम् ।

उद्युङ्क्ते नियुङ्क्ते । इह मा भूत्— सयुनक्ति ॥

२१२ समः क्ष्णुवः ॥ ६५ ॥ सपूर्वात् क्ष्णुव आत्मनेपदं स्यात् । संक्ष्णुते शस्त्रम् ॥

२१३ भुजोऽनवने ॥ ६६ ॥ अपालने भुज आत्मनेपदं स्यात् । ओदनं भुङ्क्ते ॥

२१४ णेरणौ यत्कर्म[1] णौ चेत्स कर्तानाध्याने ॥ ६७ ॥ ण्यन्तादात्मनेपदं स्यादणौ यत्कर्म णौ चेत् सैव क्रिया, स एव कर्ता स्यात् । आध्याने तु न ॥ आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयते[2] हस्ती स्वयमेव ॥ कर्तृस्थक्रिया[3] उदाहरणम् ॥

२१५ भीस्म्योर्हेतुभये ॥ ६८ ॥ बिभेतेः स्मयतेश्च ण्यन्तादात्मनेपदं स्यात् हेतोश्चेद्भयस्मयौ । जटिलो भीषयते । जटिलो विस्मापयते ॥

२१६ गृधिवञ्च्योः प्रलम्भने ॥ ६९ ॥ ण्यन्ताभ्यां गृधिवञ्चिभ्यामात्मनेपदं स्यात् प्रलम्भने । माणवकं गर्धयते । माणवकं वञ्चयते ॥

२१७ लियः संमाननशालीनीकरणयोश्च ॥ ७० ॥ संमानने न्यग्भावने प्रलम्भने च लिय आत्मनेपदं स्यात् । जटाभिर्लापयते । श्येनो वर्त्तिकामुल्लापयते । कस्त्वामुल्लापयते ॥

२१८ मिथ्योपपदात्कृञोऽभ्यासे ॥ ७१ ॥ ण्यन्तान्मिथ्योपपदात्करोतेरात्मनेपदं स्यादभ्यासे ॥ असकृत् पदं मिथ्या कारयते ॥

२१९ स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥ ७२ ॥ स्वरितेतो ञितश्च ये धातवस्तेभ्य आत्मनेपदं स्यात् । कर्तारं चेत्क्रियाफलम्[4] अभिप्रैति । पचते । सुनुते ॥

२२० अपाद्वदः ॥ ७३ ॥ अपपूर्वाद्वदतेरात्मनेपदं स्यात्कर्त्रभिप्राये क्रियाफले । धनकामो न्यायमपवदते ॥

२२१ णिचश्च ॥ ७४ ॥ कर्त्रभिप्राये क्रियाफले णिजन्तादात्मनेपदं स्यात् । कटं कारयते ॥

२२२ समुदाङ्भ्यो यमोऽग्रन्थे ॥ ७५ ॥ समुदाङ्पूर्वाद्यमेरात्मनेपदं स्यात् कर्त्रभिप्राये क्रियाफलेऽग्रन्थविषये । व्रीहीन्संयच्छते । भारमुद्यच्छते । वस्त्रमायच्छते ॥

२२३ अनुपसर्गाज्ज्ञः ॥ ७६ ॥ अनुपसर्गाज्जानातेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं स्यात् । गां जानीते ॥

१ कर्मपदं कर्त्रैण क्रिया कारकपरम् ॥

२ आरोहन्ति हस्तिनं हस्तिपकाः प्रथमकक्षा । आरोहति हस्ती द्वितीयकक्षा । आरोहयन्ति हस्तिनं हस्तिपकाः तृतीयकक्षा । आरोहयते हस्ती चतुर्थकक्षा ॥ एवमेव 'दर्शयते भव' इति कर्तृस्थभावकेपि बोध्यम् ॥

३ विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता । क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥

४ यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः । तत् प्रधानं फलं तासां न लाभादि प्रयोजनम् ॥

२२४ विभाषोपपदेन प्रतीयमाने ॥७७॥ स्वरितञित इति पञ्चभिः सूत्रैर्यदात्मनेपदं विहितं तत्समीपोच्चारितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात्। स्वं यज्ञं यजति स्वं यज्ञं यजते। स्वं कटं करोति स्वं कटं कुरुते। स्वं पुत्रमपवदति अपवदते स्वं पुत्रम्। स्वं यज्ञं कारयति स्वं यज्ञं कारयते। स्वान् व्रीहीन् संयच्छति स्वान् व्रीहीन् संयच्छते। स्वां गां जानाति स्वां गां जानीते ॥

---

## परस्मैपदप्रकरणम्—

२२५ शेषात्कर्तरि परस्मैपदम् ॥ ७८ ॥ आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात्। भवति ॥

२२६ अनुपराभ्यां कृञः ॥ ७९ ॥ अनुपरापूर्वात्करोतेः परस्मैपदं स्यात्। अनुकरोति। पराकरोति ॥

२२७ अभिप्रत्यतिभ्यः क्षिपः ॥ ८० ॥ अभिप्रतिअतिपूर्वात्क्षिपः परस्मैपदं स्यात्। अभिक्षिपति। प्रतिक्षिपति। अतिक्षिपति ॥

२२८ प्राद्वहः ॥ ८१ ॥ प्रपूर्वाद्वहेः परस्मैपदं स्यात्। प्रवहति ॥

२२९ परेर्मृषः ॥ ८२ ॥ परिपूर्वान्मृष्यतेः परस्मैपदं स्यात्। परिमृष्यति ॥

२३० व्याङ्परिभ्यो रमः ॥ ८३ ॥ विआङ्परिपूर्वाद्रमः परस्मैपदं स्यात्। विरमति। परिरमति आरमति ॥

२३१ उपाच्च ॥ ८४ ॥ उपपूर्वाद्रमतेः परस्मैपदं स्यात्। देवदत्तमुपरमति ॥

२३२ विभाषाऽकर्मकात् ॥ ८५ ॥ उपपूर्वाद्रमतेरकर्मकात्परस्मैपदं वा स्यात्। यावद्भुक्तमुपरमते। यावद्भुक्तमुपरमति ॥

२३३ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥८६॥ एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात्। बोधयति। योधयति। नाशयति। जनयति। अध्यापयति। प्रावयति। द्रावयति। स्रावयति ॥

२३४ निगरणचलनार्थेभ्यश्च ॥८७॥ भोजनार्थेभ्यश्चलनार्थेभ्यश्च ण्यन्तेभ्यः परस्मैपदं स्यात्। निगारयति। चलयति। *अदेः प्रतिषेधः ॥ आदयते देवदत्तेन ॥

२३५ अणावकर्मकाच्चित्तवत्कर्तृकात् ॥८८॥ अण्यन्तो यो धातुरकर्मकश्चित्तवत्कर्तृकश्च तस्माण्ण्यन्तात्परस्मैपदं स्यात्। आसयति देवदत्तम्। शाययति देवदत्तम् ॥

२३६ न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥ ९८ ॥ एभ्यो ण्यन्तेभ्यः परस्मैपदं न स्यात्। पाययते। दमयते। आयामयते। परिमोहयते। रोचयते। नर्तयते। वादयते। वासयते ॥ *धेट उपसंख्यानम् ॥ धापयेते शिशुमेकं समीची ॥

---

१ (२२४) (२२५) सूत्रमिदितयोर विधीयते । तेन (२२५) सूत्रेण विहितं तु भवत्येव— 'रमयन्ती कमलीमतागमयं' [illegible] प्रयुज्यते ॥

२३७ वा क्यपः ॥ ९० ॥ क्यपन्तात्परस्मैपदं वा स्यात् । लोहितायति लोहितायते ॥

२३८ द्युभ्यो लुङि ॥ ९१ ॥ द्युतादिभ्यो लुङि वा परस्मैपदं स्यात् । अद्योतिष्ट । अद्युतत् ॥

२३९ वृद्भ्यः स्यसनोः ॥ ९२ ॥ वृतु वृधु शृधु स्यन्दू एभ्यः स्ये सनि च परस्मैपदं वा स्यात् । वर्त्स्यति, अवर्त्स्यत् वर्तिष्यते अवर्तिष्यत । विवृत्सति, विवर्तिषते । वर्त्स्यति अवर्त्स्यत् वर्धिष्यते अवर्धिष्यत विवृत्सति विवर्धिषते । शर्त्स्यति अशर्त्स्यत् शर्धिष्यते अशर्धिष्यत । शिशृत्सति शिशर्धिषते । स्यन्त्स्यति अस्यन्त्स्यत् स्यन्त्स्यते स्यन्दिष्यते अस्यन्त्स्यत अस्यन्दिष्यत । सिस्यन्त्सति सिस्यन्दिषते सिसपन्त्सते ॥

२४० लुटि च क्लृपः ॥ ९३ ॥ लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा स्यात् । कल्प्तासि कल्प्तासे कल्पितासे । कल्प्स्यति कल्प्स्यते कल्पिष्यते अकल्प्स्यत अकल्पिष्यत अकल्प्स्यत । चिक्लृप्सति चिक्लृप्सते चिकल्पिषते ॥

इति प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

—०—

## अथ प्रथमाध्यायस्य चतुर्थः पादः

२४१ आ कडारादेका संज्ञा ॥ १ ॥ "कडाराः कर्मधारये" इत्यतः प्रागेकस्यैकैव संज्ञा । या पराऽनवकाशा च । स्वादिष्वसर्वनामस्थाने (१।४।१७) 'यचि भम्' (१।४।१८) इत्त. ॥

२४२ विप्रतिषेधे परं कार्यम् । २ ॥ तुल्यबलविरोधे परं कार्यं स्यात् । 'सुपि च (७।३।१०२)' 'बहुवचने झल्येत् (७।३।१०३)' रामेभ्यः ॥

२४३ यू स्त्र्याख्यौ नदी ॥ ३ ॥ ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । 'अम्बार्थनद्योर्ह्रस्वः' हे गौरि । हे ब्रह्मबन्धु ॥

२४४ नेयङुवङ्स्थानावस्त्री ॥ ४ ॥ इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तः स्त्रीशब्दं वर्जयित्वा । हे श्रीः। हे भ्रूः ॥

२४५ वामि ॥ ५ ॥ इयङुवङ्स्थानौ ईदूदन्तौ नदीसंज्ञौ वा स्त आमि ॥ 'ह्रस्वनद्यापो नुट्' श्रीणाम् । श्रियाम् । भ्रूणाम् । भ्रुवाम् ॥

२४६ ङिति ह्रस्वश्च ॥ ६ ॥ इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ, ह्रस्वौ च इउवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । 'आण्नद्याः' श्रियै । श्रिये । भ्रुवै । भ्रुवे । मत्यै मतये । धेन्वै । धेनवे ॥

२४७ शेषो घ्यसखि ॥७॥ अनदीसंज्ञौ ह्रस्वौ यावीदूतौ तदन्तं सखिवर्जं घिसंज्ञं स्यात् । 'घेर्ङिति' अग्नये । वायवे ॥

१ परस्परलब्धावकाशयोरेकत्र प्राप्तौ तुल्यबलविरोधो भवति ॥

२४८ पतिः समास एव ॥ ८ ॥ पतिशब्दः समास एव घिसंज्ञः स्यात्। भूपतये ॥

२४९ षष्ठीयुक्तश्छन्दसि वा ॥ ९ ॥ षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसंज्ञो वा स्यात्। कुलुञ्चानां पतये नमः। (वा० सं० १६।२२) ॥

२५० ह्रस्वं लघु ॥ १० ॥ ह्रस्वं लघुसंज्ञं स्यात्। दीर्घो लघोः अचोऽन्त्यस्य ॥

२५१ संयोगे गुरु ॥ ११ ॥ संयोगे ह्रस्वं गुरुसंज्ञं स्यात्। 'गुरोश्च हलः' कुण्डा ॥

२५२ दीर्घं च ॥ १२ ॥ दीर्घं गुरुसंज्ञं स्यात्। इजादेश्च गुरुमतोऽनृच्छः ईहाञ्चक्रे ॥

२५३ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ॥ १३ ॥ यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपं तस्मिन् प्रत्यये परेऽङ्गसंज्ञं स्यात्। '[illegible]' ब्राह्मणाय ॥ भविष्यामि ॥

२५४ सुप्तिङन्तं पदम् ॥ १४ ॥ सुबन्तं तिङन्तं च शब्दस्वरूपं पदसंज्ञं स्यात्। 'झलां जशोऽन्ते' ब्राह्मणाद्। पचेद् ॥

२५५ नः क्ये ॥ १५ ॥ क्यचि क्यङि क्यषि च नान्तमेव पदं स्यात्। 'न लोपः प्रातिपदिकान्तस्य' राजीयति। राजायते। चर्मायति चर्मायते ॥

२५६ सिति च ॥ १६ ॥ सिति प्रत्यये पूर्वं पदं स्यात्। 'झलां जशोऽन्ते' भवदीयः ॥

२५७ स्वादिष्वसर्वनामस्थाने ॥ १७ ॥ सर्वनामस्थानवर्जितेषु कप्प्रत्ययावधिषु स्वादिषु पूर्वं पदसंज्ञं स्यात्। 'न लोपः प्रातिपदिकान्तस्य' राजभिः ॥

२५८ यचि भम् ॥ १८ ॥ यकारादावजादौ च सर्वनामस्थानवर्जिते स्वादौ पूर्वं भसंज्ञं स्यात्। 'यस्येति च' गार्ग्यः। दाक्षिः ॥

* नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्[1]।

A1 नभस्वत् (ऋ० सं० १।१८५।५)। अङ्गिरस्वत् (ऋ० सं० १।३१।१७)। मनुष्वत् (ऋ० सं० १।३१।१७)।

* वृषण्वस्वश्वयोः। वृषण्वसू (ऋ० सं० १। १११। १) वृषणश्वस्य (ऋ० सं० २।४१।८)॥ वृषणश्व (ऋ० सं० १।५१।१३) ॥

२५९ तसौ मत्वर्थे ॥ १९ ॥ तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे। विद्युत्वान्। पयस्वी ॥

२६० अयस्मयादीनि छन्दसि ॥ २० ॥ एतानि छन्दसि साधूनि। अयस्मयं (ऋ० सं० ४।३०।१५) ॥

* उभयसंज्ञान्यपीति वक्तव्यम्। स सुष्टुभा स ऋक्वता गणेन (ऋ० सं० ४।५०।५)॥

A पर्यायक्रमस्य स्थाने पर्यायचतुर्थी सेनाप्रमादात ॥

१ अत्र वृत्तिः 'येन सुखम् इत्यादिमिति मता' ॥

२६१ बहुषु बहुवचनम् ॥ २१ ॥ बहुत्वविवक्षायां बहुवचनं स्यात् । ब्राह्मणाः पठन्ति ॥

२६२ द्व्येकयोर्द्विवचनैकवचने ॥ २२ ॥ द्वित्वैकत्वयोरर्थयोर्द्विवचनैकवचने भवतः । ब्राह्मणौ पठतः । ब्राह्मणः पठति ॥

## ॥ अथ कारकप्रकरणम् ॥

२६३ कारके ॥ २३ ॥ अयमधिक्रियते ॥

२६४ ध्रुवमपायेऽपादानम् ॥ २४ ॥ विभागे सति ध्रुवत्वेन विवक्षितं यत्तत् कारकसंज्ञं तदपादानसंज्ञं स्यात् । पर्वतादवरोहति ॥

* जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् । अधर्माज्जुगुप्सते । पापाद्विरमति । पापात्प्रमाद्यति ॥

२६५ भीत्रार्थानां भयहेतुः ॥ २५ ॥ भयार्थानां त्राणार्थानां च योगे भयहेतुः कारकसंज्ञं तदपादानसंज्ञं स्यात् । चौरेभ्यो बिभेति । चौरेभ्यस्त्रायते ॥

२६६ पराजेरसोढः ॥ २६ ॥ पराजेः प्रयोगेऽसह्योऽर्थोऽपादानसंज्ञः स्यात् । अध्ययनात्पराजयते ॥

२६७ वारणार्थानामीप्सितः ॥ २७ ॥ वारणार्थानां योगे ईप्सितोऽर्थोऽपादानसंज्ञः स्यात् ॥ यवेभ्यो गां वारयति ॥

२६८ अन्तर्धौ येनादर्शनमिच्छति ॥ २८ ॥ अन्तर्धिनिमित्तं येनादर्शनमात्मन इच्छति तत्कारकमपादानसंज्ञं स्यात् । उपाध्यायादन्तर्धत्ते ॥

२६९ आख्यातोपयोगे ॥ २९ ॥ नियमपूर्वकविद्यास्वीकारे वक्ता ऽपादानसंज्ञः स्यात् । उपाध्यायादधीते ॥

२७० जनिकर्तुः प्रकृतिः ॥ ३० ॥ जायमानस्य हेतुरपादानसंज्ञः स्यात् । गोमयाद्वृश्चिको जायते ॥

२७१ भुवः प्रभवः ॥ ३१ ॥ भूकर्तुः प्रभव उक्तसंज्ञः स्यात् । हिमवतो गङ्गा प्रभवति ॥

२७२ कर्मणा यमभिप्रैति स संप्रदानम् ॥ ३२ ॥ दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् । उपाध्यायाय गां ददाति ॥

* क्रियया यमभिप्रैति स संप्रदानम् । पत्ये शेते ॥

* कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा वक्तव्या । पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः ॥

२७३ रुच्यर्थानां प्रीयमाणः ॥ ३३ ॥ रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानसंज्ञः स्यात् । देवदत्ताय रोचते मोदकः ॥

२७४ श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ॥ ३४ ॥ एषां प्रयोगे बोधयितुमभिप्रेतः सम्प्रदानसंज्ञः स्यात् । हरये श्लाघते, हरये ह्नुते, हरये तिष्ठते, हरये शपते ॥

२७५ धारेरुत्तमर्णः ॥ ३५ ॥ धारयतेः प्रयोगे उत्तमर्णः सम्प्रदानसंज्ञः स्यात्। देवदत्ताय शतं धारयति ॥

२७६ स्पृहेरीप्सितः ॥ ३६ ॥ स्पृहयतेः प्रयोगे ईप्सितोऽर्थः सम्प्रदानसंज्ञः स्यात्। पुष्पेभ्यः स्पृहयति ॥

२७७ क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ॥ ३७ ॥ एषां प्रयोगे यं प्रति कोपस्तत्कारकं सम्प्रदानसंज्ञं स्यात्। देवदत्ताय क्रुध्यति। देवदत्ताय द्रुह्यति। देवदत्ताय ईर्ष्यति। देवदत्ताय असूयति ॥

२७८ क्रुधद्रुहोरुपसृष्टयोः कर्म ॥ ८ ॥ सोपसर्गयोरनयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यात्। देवदत्तमभिक्रुध्यति। देवदत्तमभिद्रुह्यति ॥

२७९ राधीक्ष्योर्यस्य विप्रश्नः ॥ ३९ ॥ राधीक्ष्योः प्रयोगे यस्य विप्रश्नः प्रश्नः तत्कारकं संप्रदानसंज्ञं स्यात्। कृष्णाय राध्यति। कृष्णाय ईक्षते ॥

२८० प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ४० प्रत्याङ्पूर्वस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनारूपस्य व्यापारस्य कर्ता संप्रदानसंज्ञः स्यात्। विप्राय गां प्रतिशृणोति आशृणोति। विप्रेण मह्यं देहीति प्रवर्तितस्तत्प्रतिजानीते इत्यर्थः ॥

२८१ अनुप्रतिगृणश्च ॥ ४१ ॥ आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतं संप्रदानं स्यात्। होत्रेऽनुगृणाति। होत्रे प्रतिगृणाति। होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः ॥

२८२ साधकतमं करणम् ॥ ४२ ॥ क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात्। दात्रेण लुनाति नावा गच्छति ॥

२८३ दिवः कर्म च ॥ ४३ ॥ दिवः साधकतमं कर्मसंज्ञं करणसंज्ञं च स्यात्। अक्षान्दीव्यति। अक्षैर्दीव्यति ॥

२८४ परिक्रयणे संप्रदानमन्यतरस्याम् ॥ ४४ ॥ नियतकालभृत्या स्वीकरणे साधकतमं संप्रदानं वा स्यात्। शताय परिक्रीतोऽनुब्रूहि। शतेन परिक्रीतोऽनुब्रूहि ॥

२८५ आधारोऽधिकरणम् ॥ ४५ ॥ कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात्। कटे आस्ते। स्थाल्यां पचति ॥

२८६ अधिशीङ्स्थासां कर्म ॥ ४६ ॥ अधिपूर्वाणामेषामाधारः कर्मसंज्ञः स्यात्। ग्राममधिशेते। ग्राममधितिष्ठति। ग्राममध्यास्ते ॥

२८७ अभिनिविशश्च ॥ ४७ ॥ अभिनि इति सङ्घातपूर्वस्य विशतेरधिकरणस्याधारः कर्मसंज्ञं स्यात्। ग्राममभिनिविशते ॥

२८८ उपान्वध्याङ्वसः ॥ ४८ ॥ उपादिपूर्वस्य वसतेराधारः कर्मसंज्ञः स्यात्। ग्राममुपवसति अनुवसति अधिवसति आवसति ॥

* वसेरश्यर्थस्य प्रतिषेधः । ग्राम उपवसति ॥

२८९ कर्तुरीप्सिततमं कर्म ॥ ४९ ॥ कर्तुः क्रियया यदाप्तुमिष्टतमं तत्कारकं कर्मसंज्ञं स्यात् । ग्रामं गच्छति ॥

२९० तथायुक्तं चानीप्सितम् ॥ ५० ॥ येन प्रकारेण कर्तुरीप्सिततमं क्रियया युज्यते तेनैव चेत्प्रकारेण यदनीप्सितं युक्तं तस्य कर्मसंज्ञा स्यात् । ग्रामं गच्छन् तृणं स्पृशति ॥

२९१ अकथितं च ॥ ५१ ॥ अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् । "दुहि-याचि-रुधि-प्रच्छि-भिक्षि-चिञा-मुपयोगनिमित्तमपूर्वविधौ । ब्रुवि-शासि-गुणेन च यत् सचते तदकीर्तितमाचरितं कविना ॥ १ ॥" गां दोग्धि पयः, बलिं याचते वसुधाम्, अजमवरुणद्धि व्रजम्, माणवकं पन्थानं पृच्छति, पौरवं गां भिक्षते, वृक्षमवचिनोति फलानि, माणवकं धर्मं ब्रूते, माणवकं धर्मं शास्ति ॥

* नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च । द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥" ग्राममजां नयति, ग्राममजां वहति, भारं हरति ग्रामम् ॥

* 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ॥[1] मासमास्ते, गोदोहमास्ते क्रोशमास्ते ॥

* देशश्च ॥ कुरून् स्वपिति ॥

२९२ गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ ॥ ५२ ॥ गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणां चाणौ यः कर्ता स णौ कर्मसंज्ञः स्यात् । गच्छति माणवको ग्रामम्, गमयति माणवकं ग्रामम् । बोधयति माणवकं धर्मम् । आशयति देवानमृतम् । वेदमध्यापयति देवदत्तम् । पृथिवीमासयति ॥

* दृशेः सर्वत्र । दर्शयति रूपतर्कं कार्षापणम् ॥

* 'अदिखादिनीवहीनां प्रतिषेधो वक्तव्यः' आदयते माणवकेनौदनम् । खादयति माणवकेन । नाययति भारं देवदत्तेन । वाहयति भारं देवदत्तेन ॥

* वहेरनियन्तृकर्तृकस्येति वक्तव्यम्[2] । वाहयति बलीवर्दान्यवान् वणिज्यारः ॥

* भक्षेरहिंसार्थस्य प्रतिषेधो वक्तव्यः । भक्षयति पिण्डीं देवदत्तेन ॥

२९३ हृक्रोरन्यतरस्याम् ॥ ५३ ॥ हरतेः करोतेश्चाण्यन्तयोर्यः कर्ता स ण्यन्तयोः कर्मसंज्ञो वा स्यात् ॥ हारयति भारं माणवकम् । हारयति भारं माणवकेन । कार-

१ 'मासकार्यो भूम' इत्यत्रैव निषुरयर्थो ऽथेशनः इति भोजननिवृत्तिवाचिनः स्वपे ॥

२ नियन्ता पशुप्रेरक ॥

३०१ अनुकरणं चानितिपरम् ॥ ६१ ॥ अनितिपरमनुकरणं क्रियायोगे गतिसंज्ञं स्यात् । खाट्कृत्य ॥

३०२ आदरानादरयोः सदसती॥६२॥ आदरानादरयोः सदसच्छब्दौ गतिसंज्ञौ स्तः । सत्कृत्य असत्कृत्य ॥

३०३ भूषणेऽलम् ॥ ६३ ॥ अलं भूषणे गतिसंज्ञं स्यात् । अलङ्कृत्य ॥

३०४ अन्तरपरिग्रहे ॥ ६४ ॥ अपरिग्रहेऽन्तःशब्दो गतिसंज्ञः स्यात् । अन्तर्हत्य॥

* अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञा वक्तव्या । अन्तर्धा । अन्तर्द्धिः । अन्तर्णयति ॥

३०५ कणेमनसी श्रद्धाप्रतीघाते ॥६५॥ कणेशब्दो मनश्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञौ स्तः । कणेहत्य पयः पिबति । मनोहत्य पयः पिबति ॥

३०६ पुरोऽव्ययम् ॥ ६६ ॥ अव्ययं पुरःशब्दो गतिसंज्ञः स्यात् । पुरस्कृत्य ॥

३०७ अस्तं च ॥ ६७ ॥ अव्ययमस्तशब्दो गतिसंज्ञः स्यात् । अस्तगत्य ॥

३०८ अच्छ गत्यर्थवदेषु ॥ ६८ ॥ अच्छशब्दो गत्यर्थे वदतौ च गतिसंज्ञः स्यात् । अच्छगत्य । अच्छोद्य ॥

३०९ अदोऽनुपदेशे ॥ ६९ ॥ अदःशब्दोऽनुपदेशे गतिसंज्ञः स्यात् । अदःकृत्य ॥

३१० तिरोऽन्तर्द्धौ ॥ ७० ॥ व्यवधाने तिरःशब्दो गतिसंज्ञः स्यात् । तिरोभूय ॥

३११ विभाषा कृञि ॥ ७१ ॥ तिरःशब्दः करोतौ वा गतिसंज्ञः । तिरस्कृत्य तिरः कृत्वा ॥

३१२ उपाजेऽन्वाजे ॥ ७२ ॥ उपाजेऽन्वाजे शब्दौ कृञि विभाषा गतिसंज्ञौ स्तः । उपाजेकृत्य । उपाजे कृत्वा । अन्वाजेकृत्य । अन्वाजे कृत्वा ॥

३१३ साक्षात्प्रभृतीनि च ॥ ७३ ॥ साक्षात्प्रभृतीनि कृञि वा गतिसंज्ञानि स्युः ।

* साक्षात्प्रभृतिषु च्व्यर्थवचनम् साक्षात्कृत्य । साक्षात्कृत्वा ॥

३१४ अनत्याधाने उरसिमनसी ॥७४॥ अनुपश्लेषे कृञि उरसि मनसि शब्दौ वा गतिसंज्ञौ स्तः । उरसिकृत्य उरसि कृत्वा । मनसिकृत्य । मनसि कृत्वा ॥

३१५ मध्ये पदे निवचने च ॥ ७५ ॥ एते शब्दाः कृञि वा गतिसंज्ञाः स्युः । मध्येकृत्य, मध्ये कृत्वा । पदेकृत्य, पदे कृत्वा । निवचनेकृत्य, निवचने कृत्वा ॥

३१६ नित्यं हस्ते पाणावुपयमने ॥७६॥ हस्ते पाणौ शब्दौ कृञि नित्यं गतिसंज्ञौ स्त उपयमने । हस्तेकृत्य । पाणौकृत्य ॥

३१७ प्राध्वं बन्धने ॥ ७७ ॥ प्राध्वंशब्दः कृञि नित्यं गतिसंज्ञः स्याद्बन्धने । प्राध्वंकृत्य ॥

३१८ जीविकोपनिषदावौपम्ये ॥७८॥ एतौ गतिसंज्ञौ स्त औपम्ये । जीविकाकृत्य । उपनिषत्कृत्य ॥

३३२ सुः पूजायाम् ॥ ९३ ॥ पूजायां सुः कर्मप्रवचनीयसंज्ञः स्यात् । सुसिक्तं भवता ॥

३३३ अतिरतिक्रमणे च॥९४॥अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयसंज्ञः स्यात् । अतिसिक्तमेव भवता। अतिस्तुतमेव भवता।

३३५ अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ॥ ९५ ॥ एष्वपिः कर्मप्रवचनीयसंज्ञः स्यात् । सर्पिषोऽपि स्यात् । अपि सिञ्चेन्मूलकसहस्रम् । अपि सिञ्च । अपि स्तुहि । धिग् जाल्मं देवदत्तमपि सिञ्चेत् पलाण्डुम् । अपि सिञ्च अपि स्तुहि ॥

३३६ अधिरीश्वरे ॥ ९६ ॥ ईश्वरेऽधिः कर्मप्रवचनीयः स्यात् । अधि ब्रह्मदत्ते पञ्चालाः । अधि पञ्चालेषु ब्रह्मदत्तः ॥

३३७ विभाषा कृञि ॥ ९७ ॥ अधिः कृञि वा कर्मप्रवचनीयः स्यात् । यदत्र मामधिकरिष्यति ॥

३३८ लः परस्मैपदम् ॥ ९८ ॥ लादेशाः परस्मैपदसंज्ञकाः स्युः । पचति । पचन् । पेचिवान् ॥

३३९ तङानावात्मनेपदम् ॥ ९९ ॥ तङ् शानच्कानचौ चात्मनेपदसंज्ञकाः स्युः । कुरुते । कुर्वाणः । चक्राणः ॥

३४० तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ १०० ॥ तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः । स भवति । देवदत्तः पचते । त्वं पचसि । त्वं पचसे । अहं पचामि । अहं पचे ॥

३४१ तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १०१ ॥ लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादिसंज्ञानि स्युः । स पचति । तौ पचतः । ते पचन्ति ॥

३४२ सुपः ॥ १०२ ॥ सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः । रामः । रामौ । रामाः ॥

३४३ विभक्तिश्च ॥ १०३ ॥ सुप्तिङौ विभक्तिसंज्ञौ स्तः । निर्जरसः । तिष्ठामः ॥

३४४ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १०४ ॥ तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः स्यात् । त्वं पचसि । पचथ ॥

३४५ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०५ ॥ प्रहासे गम्यमाने मन्योपपदे धातोर्मध्यमपुरुषो भवति, मन्यतेश्चोत्तमः, स चैकवद्भवति । एहि मन्ये ओदनं भोक्ष्यसे (इति,नहि भोक्ष्यसे) भुक्तः सोऽतिथिभिः ॥

३४६ अस्मद्युत्तमः ॥ १०६ ॥ अस्मद्युपपदे समानाधिकरणे प्रयुज्यमानेऽप्रयुज्यमानेऽप्युत्तमः स्यात् । अहं पचामि । पचे ॥

३४७ शेषे प्रथमः ॥ १०७ ॥ मध्यमोत्तमयोरविषये प्रथमः स्यात् । पचति । स पचति ॥

हिमम्। निद्रा संप्रति न युज्यत इत्यति निद्रम्। हरिशब्दस्य प्रकाश इतिहरि। विष्णोः पश्चादनुविष्णु। योग्यता वीप्सा-पदार्थानतिवृत्तिसादृश्यानि यथार्थाः। रूपस्य योग्यमनुरूपम्। अर्थं अर्थं प्रति प्रत्यर्थम्। शक्तिमनतिक्रम्य यथाशक्ति। हरेः सादृश्य सहरि। ज्येष्ठस्यानुपूर्व्येणे त्यनुज्येष्ठम्। चक्रेण युगपत् सचक्रम्। सदृशः सख्या ससखि। क्षत्राणा सम्पत्तिः सक्षत्रम्। तृणमप्यपरित्यज्य सतृणमत्ति। अग्निग्रन्थपर्यन्तमधीते साग्नि॥

३५६ यथाऽसादृश्ये ॥ ७॥ असादृश्ये एव यथाशब्दः समस्यते॥ यथाध्यापकम्। मा भूत्—यथा हरिस्तथा हर.॥

३५७ यावदवधारणे ॥ ८॥ अवधारणेऽर्थे यावच्छब्दः सुबन्तेन समर्थेन सह समस्यते। यावच्छ्लोकम्॥

३५८ सुप् प्रतिना मात्रार्थे ॥ ९॥ मात्रार्थ वर्तमानेन प्रतिना सह सुबन्त समस्यते सोऽव्ययी भावः॥ शाकप्रति॥

१५९ अक्षशलाकासंख्याः परिणा ॥१०॥ परिणा सह एते समस्यन्ते। कितवव्यवहारेऽय समास इष्यते। अक्षेण विपरीत वृत्तम् अक्षपरि। शलाकापरि। एकपरि॥

१६० विभाषा ॥ ११ ॥ अयमधिकार.

१६० अपपरिबहिरञ्चवः पञ्चम्या॥११ एते पञ्चम्यन्तेन सह वा समस्यन्ते॥ अप विष्णु, अप विष्णोः संसारः। परिविष्णु, परिविष्णोः। बहिर्वनम् बहिर्वनात्। प्राग्-वनम् प्राग् वनात्।

३६१ आङ् मर्यादाभिविध्योः ॥ १२॥ मर्यादायामभिविधौ चाङ् पञ्चम्यन्तेन सह वा समस्यते॥ आपाटलिपुत्र वृष्टो देवः-आ पाटलिपुत्रात्। आकुमार यशः पाणिनेः। आ कुमारेभ्य.॥

३६२ लक्षणेनाभिप्रती आभिमुख्ये॥१३॥ चिह्नवाचिना सुबन्तेन सहाभिप्रती आभिमुख्ये वर्तमानौ वा समस्येते॥ अभ्यग्नि शलभा. पतन्ति। अग्निमभि। प्रत्यग्नि। अग्नि प्रति॥

३६३ अनुर्यत्समया ॥ १४॥ अनुर्यस्य समीपवाची तेन लक्षणभूतेन सह वा समस्यते॥ अनुवनमशनिर्गत.। वनमनु॥

३६४ यस्य चायामः ॥१५॥ अनुर्यस्या यामवाची तेन लक्षणभूतेन सह वा समस्यते। अनुगङ्गम् मथुरा॥

३६५ तिष्ठद्गुप्रभृतीनि च ॥ १६॥ तिष्ठद्गुप्रभृतय. समुदाया एव निपात्यन्ते तेऽव्ययीभावसंज्ञकाः। तिष्ठन्ति गावो यस्मिन्काले स तिष्ठद्गु काल.॥

१ 'विभाषाऽपपरिबहिरञ्चवः पञ्चम्याः' इत्येकमेव पाणिनीय सूत्र विभक्त वार्तिककृता॥
२ अन्यत्र स्फाटिक दर्शनम्। अग्नि अनु॥
३ अन्यत्र स्फाटिक दर्शनम्। अग्नि अनु॥

१६६ पारे मध्ये षष्ठ्या वा ॥ १७ ॥ पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते एदन्तत्वं चानयोर्निपात्यते। पारं गङ्गायाः पारेगङ्गम्। मध्यं गङ्गायाः मध्येगङ्गम्। षष्ठीसमासपक्षे गङ्गापारम्। गङ्गामध्यम्। महाविभाषया वाक्यविकल्पः क्रियते।

१६७ संख्या वंश्येन ॥ १८ ॥ विद्यया जन्मना वा प्राणिनामेकलक्षणसन्तानो वंशस्तत्र भवो वंश्यस्तद्वाचिना सुबन्तेन सह संख्या वा समस्यते। द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरणस्य। यदा तु विद्यावद्भ्यामभेदविवक्षा तदा सामानाधिकरण्यम्–द्विमुनि व्याकरणम्।

१६८ नदीभिश्च ॥ १९ ॥ नदीवाचिभिः सह संख्या समस्यते। समाहारे चायमिष्यते। सप्तगङ्गम्। पञ्चनदम्। सप्तगोदावरम्।

१६९ अन्यपदार्थे च संज्ञायाम् ॥२१॥ नदीभिः संख्या समस्यते संज्ञायाम्। उन्मत्तगङ्गम् नाम देशः। इत्यव्ययीभावः।

१७० तत्पुरुषः ॥ २० ॥ अधिकारोऽयम्। प्राग् बहुव्रीहेः।

१७१ *द्विगुश्च* ॥ २१ ॥ द्विगुश्च तत्पुरुषसंज्ञः स्यात्। पञ्चराजी।

१७२ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २२ ॥ द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह समस्यते। कष्टं श्रितः कष्टश्रितः। कान्तारातीतः। नरकपतितः। ग्रामगतः। तरङ्गात्यस्तः। सुखप्राप्तः। सुखापन्नः।

*गम्यादीनामुपसंख्यानम्। ग्रामगमी ग्रामगामी। ओदनबुभुक्षुः।

१७३ स्वयं क्तेन ॥ २४ ॥ स्वयमित्येतद् क्तान्तप्रकृतिकसुबन्तेन सह समस्यते। स्वयंधौतौ पादौ।

१७४ खट्वा क्षेपे ॥ २५ ॥ द्वितीयान्तः खट्वाशब्दः क्तान्तप्रकृतिकसुबन्तेन सह समस्यते क्षेपे। खट्वारूढो जाल्मः।

१७५ सामि ॥ २ ॥ सामि क्तान्तप्रकृतिकसुबन्तेन सह समस्यते। सामिकृतम्।

१७६ कालाः ॥ २७ ॥ द्वितीयान्ताः कालवाचिनः क्तान्तप्रकृतिकसुबन्तेन सह समस्यन्ते। मासप्रमितः चन्द्रः।

१७७ अत्यन्तसंयोगे च ॥ २८ ॥ कालवाचिनो द्वितीयान्ताः सुपा सह समस्यन्ते अत्यन्तसंयोगे। मुहूर्तसुखम्।

१७८ तृतीया तत्कृतार्थेन गुणवचनेन ॥२९॥ तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थशब्देन च सह समस्यते। शङ्कुलाखण्डः। धान्यार्थः।

१७९ पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ ३० ॥ पूर्वादिभिः सह तृतीयान्तं समस्यते। अस्मादेव वचनात् पूर्वादियोगे तृतीया। मासपूर्वः। पितृसदृशः। मातृसमः। माषोनम्। माषविकलम्।

वाक्कलहः । आचारनिपुणः । गुडमिश्रः । आचारश्लक्ष्णः ॥

*अवरस्योपसंख्यानम् । मासावरः ॥

३८० कर्तृकरणे कृता बहुलम् ॥ ३१ ॥ कर्तरि करणे च या तृतीया तदन्तं कृदन्तेन सह समस्यते । सर्वोपाधिव्यभिचारार्थं बहुलग्रहणम् । हरिणा त्रातः हरित्रातः । नखैर्भिन्नो नखभिन्नः । नखनिर्भिन्नः । बहुलग्रहणान्न—दात्रेण लूनवान् ॥

*साधनं कृता । पादहारकः । गलेचोपकः ॥

३८१ कृत्यैरधिकार्थवचने ॥ ३२ ॥ स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनं तस्मिन्कर्तृकरणयोर्या तृतीया तदन्तं कृत्यैः सह समस्यते । काकपेया नदी । श्वलेह्यः कूपः । बाष्पच्छेद्यानि तृणानि । कण्टकसञ्चेय ओदनः ॥

३८२ अन्नेन व्यञ्जनम् ॥ ३३ ॥ व्यञ्जनवाचितृतीयान्तमन्नवाचिना सह समस्यते । दध्ना (उपसिक्त) ओदनः—दध्योदनः ॥

३८३ भक्ष्येण मिश्रीकरणम् ॥ ३४ ॥ मिश्रीकरणवाचि भक्ष्यवाचिना सह समस्यते । गुडेन (मिश्रा) धानाः—गुडधानाः ॥

३८४ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ ३५ ॥ चतुर्थ्यन्तार्थाय यत्तद्वाचिना अर्थादिभिश्च सह चतुर्थ्यन्तं समस्यते । यूपदारु । प्रकृतिविकृतिभाव एवायम् । अश्वघासादौ षष्ठीसमासः ॥ (partially legible: यूपदारु । मस्वादेन...चतुर्थी॥)

*अर्थेन नित्यसमासवचनं सर्वलिङ्गता च । द्विजार्थं पयः । द्विजार्था यवागूः । द्विजार्थः पटः । कुबेरबलिः । गोहितम् । गोसुखम् । गोरक्षितम् ॥

३८५ पञ्चमी भयेन ॥ ३६ ॥ पञ्चम्यन्तं भयेन सह समस्यते । चोरभयम् ॥

* भयभीतभीतिभीभिरिति वक्तव्यम् । वृकभीतः । वृकभीतिः । वृकभीः ॥

* भयनिर्गतजुगुप्सुभिरिति वक्तव्यम् । ग्रामनिर्गतः । अधर्मजुगुप्सुः ॥

३८६ अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥ ३७ ॥ एतैः सहाल्पं पञ्चम्यन्तं समस्यते । सुखापेतः । कल्पनापोढः । चक्रमुक्तः । स्वर्गपतितः । तरङ्गापत्रस्तः ॥

३८७ स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ ३८ ॥ पञ्चम्यन्तान्येतानि क्तान्तेन सह समस्यन्ते । स्तोकान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रादागतः ॥

३८८ सप्तमी शौण्डैः ॥ ३९ ॥ सप्तम्यन्तं शौण्डादिभिः समस्यते । अक्षशौण्डः ॥

३८९ सिद्धशुष्कपक्वबन्धैश्च ॥ ४० ॥ एतैः सह सप्तम्यन्तं समस्यते । साङ्काश्यसिद्धः । काम्पिल्यसिद्धः । आतपशुष्कः । स्थालीपक्वः । चक्रबन्धः ॥

३९० ध्वाङ्क्षेण क्षेपे ॥ ४१ ॥ सप्तम्यन्तं समस्यते । तीर्थध्वाङ्क्ष इव तीर्थध्वाङ्क्षः ॥

*ध्वाङ्क्षेणेत्यर्थग्रहणम् ॥ तीर्थकाकः । तीर्थवायसः ॥

३९१ कृत्यैर्ऋणे ॥ ४२ ॥ कृत्य (प्रत्य) प्रत्ययान्तैः सह सप्तम्यन्तं समस्यते नियोगे । मासदेयम् ऋणम् । पूर्वाह्णेगेयं साम ॥

३९२ संज्ञायाम् ॥ ४३ ॥ सप्तम्यन्तं सुपा सह समस्यते संज्ञायाम् । अरण्येतिलकाः ॥

३९३ क्तेनाहोरात्रावयवाः ॥ ४४ ॥ अहरवयवाः रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते । पूर्वाह्णकृतम् । अपररात्रकृतम् ॥

३९४ तत्र ॥ ४५ ॥ तत्रेत्येतत् क्तान्तेन सह समस्यते । तत्रभुक्तम् । तत्रकृतम् ॥

३९५ क्षेपे ॥ ४६ ॥ सप्तम्यन्तं क्तान्तेन सह समस्यते क्षेपे गम्यमाने । अवतप्तेनकुलस्थितं त एतत् ।

३९६ पात्रेसमितादयश्च ॥ ४७ ॥ समुदाया एव निपात्यन्ते । पात्रेसमिता इत्यत्र पुनः क्षेपे गम्यमाने । पात्रेसमिताः । अवधारणार्थः । तेन एषां समासान्तरे घटकतया प्रवेशो न । तेन परमाः पात्रेसमिता इति वाक्यमेव ॥

३९७ पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ ४८ ॥ एते समानाधिकरणेन सह समस्यन्ते । भिन्नप्रवृत्तिनिमित्तस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् । स्नातानुलिप्तः । एकभिक्षा । सर्वमनुष्याः । जरन्नैयायिकाः । पुराणान्नम् । नवान्नम् । केवलान्नम् ॥

३९८ दिक्संख्ये संज्ञायाम् ॥ ४९ ॥ समानाधिकरणेनेति आपादसमाप्तेरधिकारः । दिग्वाचिनः संख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते । पूर्वेषुकामशमी । सप्तर्षयः ॥

३९९ तद्धितार्थोत्तरपदसमाहारे च ॥ ५० ॥ तद्धितार्थे विषये उत्तरपदे च परतः समाहारे वाच्ये दिक्संख्ये समानाधिकरणेन सह समस्येते । पौर्वशालः । पूर्वशालाप्रियः । समाहारे दिक्संख्ये न समस्यते । पाञ्चनापितिः । पञ्चगवधनः । पञ्चपूली ॥

४०० संख्यापूर्वो द्विगुः ॥ ५१ ॥ तद्धितार्थोत्तरपदसमाहारे चेत्यत्र यः संख्यापूर्वः स द्विगुसंज्ञः स्यात् । पञ्चकपालः ॥

४०१ कुत्सितानि कुत्सनैः ॥ ५२ ॥ कुत्सितवाचीनि कुत्सनवचनैः सह समस्यन्ते । वैयाकरणखसूचिः ॥

४०२ पापाणके कुत्सितैः ॥ ५३ ॥ पापाणके कुत्सितवचनैः सह समस्येते । पापनापितः । अणककुलालः ॥

४०३ उपमानानि सामान्यवचनैः ॥ ५४ ॥ उपमानवाचीनि सामान्यवचनैः सह समस्यन्ते । शस्त्रीव श्यामा-शस्त्रीश्यामा ॥

४०४ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ ५५ ॥ उपमेयवाचि सुबन्तं व्याघ्रादिभिः सह समस्यते, न चेत्सामा

न्यवाची प्रयुज्यते ॥ व्याघ्र इव पुरुषः पुरुषव्याघ्र ॥

४०५ विशेषणं विशेष्येण बहुलम्॥५६॥ भेदक भेद्येन सामानाधिकरणेन सह समस्यते। नीलं च तद् उत्पलं च नीलोत्पलम्॥ बहुलवचन व्यवस्थार्थम् क्वचिन्नित्यसमास एव कृष्णसर्पः॥ क्वचिन्न भवत्येव रामो जामदग्न्यः । क्वचिद्विकल्पः–नीलमुत्पलम् । नीलोत्पलम् ।।

४०६ पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥ ५७ ॥ एते समानाधिकरणेन सह समस्यन्ते । पूर्वपुरुषः अपरपुरुषः । प्रथमपुरुष. । चरमपुरुष. । जघन्यपुरुषः । समानपुरुषः।मध्यपण्डितः। मध्यमपुरुषः । वीरपुरुषः ॥

४०७ श्रेण्यादयः कृतादिभिः ॥ ५८ ॥ श्रेण्यादय कृतादिभिः सह समस्यन्ते ।

*श्रेण्यादिषु च्व्यर्थवचनम् ॥ अश्रेणयः श्रेणयः कृता श्रेणिकृता. ।।

४०८ क्तेन नञ्विशिष्टेनानञ् ॥५९॥ नञ्विशिष्टेन क्तान्तेन सहानञ् क्तान्त समस्यते । कृतमकृतम् कृताकृतम् ॥

*समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानम् उत्तरपदलोपश्च ॥ शाकप्रधान पार्थिवः शाकपार्थिवः ॥

*कृतापकृतादीनामुपसंख्यानम् ॥ कृतापकृतम् ॥

*गतप्रत्यागतादीनामुपसंख्यानम् ॥ गतप्रत्यागतम् ॥

४०९ सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ ६० ॥ एते पूज्यमानैः सह समस्यन्ते सत्पुरुषः। महापुरुषः । परमपुरुष. । उत्तमपुरुष. । उत्कृष्टपुरुष. ॥

४१० वृन्दारकनागकुञ्जरैः पूज्यमानम्॥६१ एतै सह पूज्यमान समस्यते। गोवृन्दारकः। गोनागः । अश्वकुञ्जरः ॥

४११ कतरकतमौ जातिपरिप्रश्ने ॥६२॥ जातिपरिप्रश्ने वर्तमानौ कतरकतमौ सुबन्तेन सह समस्येते । कतरकठः । कतमकलापः ॥

४१२ किं क्षेपे ॥ ६३ ॥ किमित्येतत्क्षेपे सुपा सह समस्यते । किंगौः यो न वहति ।

४१३ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥ ६४ ॥ एतैः सह जातिः समस्यते । इभपोटा । इभयुवतिः । अग्निस्तोकः । उदश्वित्कतिपयम् । गोगृष्टिः । गोधेनुः । गोवशा । गोवेहत् । गोबष्कयणी । कठप्रवक्ता । कठश्रोत्रिय. । कठाध्यापकः । कठधूर्तः ॥

४१४ प्रशंसावचनैश्च ॥ ६५ ॥ एतैः सह जाति. समस्यते। गोप्रकाण्डम्।गोमल्लिका। गोमतल्लिका ॥

४१५युवा खलतिपलितवलिनजरतीभिः ॥ ६६ ॥ खलत्यादिभिः समानाधिकरणैः

*प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः। प्रपतित पर्णमस्य प्रपर्णः॥

*नञोऽस्त्यर्थानां वहुव्रीहिर्वा चोत्तरपदलोपश्च वक्तव्यः। अविद्यमान पुत्रो यस्य अपुत्रः॥

*सुबधिकारे अस्तिक्षीरादीनां बहुव्रीहिर्वक्तव्यः। अस्तिक्षीरा॥

४४५ संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ॥२५॥ संख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते॥ उपदशाः। आसन्नविंशाः। अदूरविंशाः। अधिकदशाः। द्वित्राः॥

४४६ दिङ्नामान्यन्तराले ॥ २६ ॥ दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते॥

*सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः॥ दक्षिणस्याः पूर्वस्याश्चान्तरालं दिक् दक्षिणपूर्वा॥ नामग्रहणं रूढ्यर्थम्। इह मा भूत् ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालम्॥

४४७ तत्र तेनेदमिति सरूपे ॥ २७ ॥ सप्तम्यन्ते प्रयुज्यमानक्रियाधिकरणविषये सरूपे पदे, तृतीयान्ते च प्रयुज्यमानक्रियाकरणविषये 'इदं कर्म प्रवृत्तमित्यर्थे समस्यते कर्मव्यतिहारे द्योत्ये, स बहुव्रीहिः। इतिशब्दस्य विशेषो लभ्यते। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि। मुष्टीमुष्टि॥

४४८ तेन सहेति तुल्ययोगे ॥ २८ ॥ तुल्ययोगे वर्तमानं सह इत्येतत्तृतीयान्तेन सह समस्यते॥ सह पुत्रेण आगतः सपुत्रः॥

इति बहुव्रीहिः॥

४४९ चार्थे द्वन्द्वः ॥ २९ ॥ अनेकं सुबन्तं चार्थे वर्तमानं समस्यते स द्वन्द्वः॥ समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्रेश्वरं गुरुं च भजस्वेति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वय समुच्चय भिक्षामट गां चानयेति अन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचय। अनयोरसामर्थ्यात्समासो न॥ धवखदिरौ छिन्धि इति मिलितानामन्वय इतरेतरयोगः। संज्ञा परिभाषम् इति समूहः समाहारः॥

इति द्वन्द्वः॥

४५० उपसर्जनं पूर्वम् ॥ ३० ॥ समासे उपसर्जनं पूर्वं प्रयोक्तव्यम्। कृष्णश्रितः।

४५१ राजदन्तादिषु परम् ॥ ३१ ॥ एषूपसर्जनं परं प्रयोक्तव्यम्। दन्तानां राजा राजदन्तः॥

४५२ द्वन्द्वे घि ॥ ३२ ॥ द्वन्द्वे समासे घ्यन्तं पूर्वं प्रयोक्तव्यम्। हरिहरौ। पटुगुप्तौ॥

* अनेकप्राप्तावेकस्य नियमः शेषे त्वनियमः। पटुमृदुशुक्लाः। पटुशुक्लमृदवः॥

४५३ अजाद्यदन्तम् ॥ ३३ ॥ अजाद्यदन्तं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्॥ ईशकृष्णौ॥

१ तेन कर्णेषु कर्णेषु कथयित्वा इदम् अथवा, मथितम् 'कर्णाकर्णि प्रथितमथवा' इत्यपि सिद्धम्॥

४२५ कालाः परिमाणिना ॥ ५ ॥ परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते । मासो जातस्य यस्य स मास जातः ॥

४२६ नञ् ॥ ६ ॥ नञ् सुबन्तेन सह समस्यते । न ब्राह्मण अब्राह्मण. ॥

४२७ ईषदकृता ॥ ७ ॥ ईषदित्यय शब्दो ऽकृदन्तेन सह समस्यते ॥

*ईषद्गुणवचनेनेति वक्तव्यम् । ईषत्कडारः । ईषत्पिङ्गल. ॥

४२८ षष्ठी ॥ ८ ॥ षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते ॥ ब्राह्मणकम्बल ॥

*कृद्योगा च षष्ठी समस्यत इति वक्तव्यम् । इध्मप्रव्रश्चन ॥

४२९ याजकादिभिश्च ॥ ९ ॥ याजकादिभिः सह षष्ठी समस्यते । ब्राह्मणयाजक. ।

*गुणात्तरेण तरलोपश्चेति वक्तव्यम् । सर्वेषा श्वेततर सर्वश्वेतः ॥

४३० न निर्द्धारणे ॥ १० ॥ निर्द्धारणे या षष्ठी सा न समस्यते । मनुष्याणा क्षत्रियः शूरतम. ॥

*प्रतिपदविधाना च षष्ठी न समस्यते इति वक्तव्यम् । सर्पिषो ज्ञानम् ॥

४३१ पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥ ११ ॥ एतै. सह षष्ठ्यन्तं न समस्यते । छात्राणां दशमः । बलाकाया. शौक्ल्यम् । फलाना सुहितः । ब्राह्मणस्य कुर्वन् । ब्राह्मणस्य कुर्वाणः । ब्राह्मणस्य कृत्वा । ब्राह्मणस्य कर्तव्यम् । राज्ञः पाटलिपुत्रकस्य ।

४३२ क्तेन च पूजायाम् ॥ १२ ॥ 'मतिबुद्धि' (३ । २ । १८८) इति सूत्रेण विहितो य. क्तस्तेन षष्ठी न समस्यते ॥ राज्ञा मतः । राज्ञा बुद्धः । राज्ञा पूजितः ॥

४३३ अधिकरणवाचिना च ॥ १३ ॥ अधिकरणवाचिना क्तान्तेन षष्ठी न समस्यते । इदमेषामासितम् ।

४३४ कर्मणि च ॥ १४ ॥ उभयप्राप्तौ कर्मणि (२ । ३ । ६६) इति विहिता या षष्ठी सा न समस्यते ॥ आश्चर्यो गवा दोहोऽगोपेन ॥

४३५ तृजकाभ्यां कर्तरि ॥ १५ ॥ कर्तरि च यौ तृजकौ ताभ्या सह षष्ठी न समस्यते । अपा स्रष्टा । ओदनस्य भोजक. ।

४३६ कर्तरि च ॥ १६ ॥ कर्तरि या षष्ठी सा ऽकेन सह न समस्यते ॥ भवतः शायिका । भवत आसिका ॥

४३७ नित्यं क्रीडाजीविकयोः ॥ १७ ॥ एतयोरर्थयोरकेन नित्य षष्ठी समस्यते ॥ उद्दालकपुष्पभञ्जिका । दन्तलेखकः ।

४३८ कुगतिप्रादयः ॥ १८ ॥ एते समर्थेन नित्य समस्यन्ते ॥ कुपुरुषः । उररीकृत्य । सुपुरुषः ॥

*प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः । प्रपतित पर्णं यस्य प्रपर्णः ॥

*नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च वक्तव्यः । अविद्यमान पुत्रो यस्य अपुत्रः ॥

*सुबधिकारे अस्तिक्षीरादीनां बहुव्रीहिर्वक्तव्यः । अस्तिक्षीरा ॥

४४५ संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ॥ २५ ॥ संख्येयार्थया संख्यया ऽव्ययादयः समस्यन्ते ॥ उपदशाः । आसन्नविंशाः । अदूरविंशाः । अधिकदशाः । द्वित्राः ॥

४४६ दिङ्नामान्यन्तराले ॥ २६ ॥ दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते ॥

*सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ॥ दक्षिणस्याः पूर्वस्याश्चान्तरालं दिक् दक्षिणपूर्वा ॥ नामग्रहणं रूढ्यर्थम् । इह मा भूत् ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालम् ॥

४४७ तत्र तेनेदमिति सरूपे ॥ २७ ॥ सप्तम्यन्ते प्रयुज्यमानक्रियाधिकरणविषये सरूपे पदे, तृतीयान्ते च प्रयुज्यमानक्रियाकरणविषये 'इद कर्म प्रवृत्तमित्यर्थे समस्यते कर्मव्यतिहारे द्योत्ये, स बहुव्रीहिः । इतिशब्दादयं विशेषो लभ्यते । केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि । मुष्टीमुष्टि ॥

४४८ तेन सहेति तुल्ययोगे ॥ २८ ॥ तुल्ययोगे वर्तमानं सह इत्येतत्तृतीयान्तेन सह समस्यते ॥ सह पुत्रेण आगतः सपुत्रः ॥

इति बहुव्रीहिः ॥

४४९ चार्थे द्वन्द्वः ॥ २९ ॥ अनेकं सुबन्तं चार्थे वर्तमानं समस्यते स द्वन्द्वः ॥ समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्रेश्वरं गुरुं च भजस्वेति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः । भिक्षामट गां चानयेति अन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः । अनयोरसामर्थ्यात्समासो न ॥ धवखदिरौ छिन्धि इति मिलितानामन्वय इतरेतरयोगः । संज्ञापरिभाषम् । इति समूहः समाहारः ॥

इति द्वन्द्वः ॥

४५० उपसर्जनं पूर्वम् ॥ ३० ॥ समासे उपसर्जनसंज्ञं पूर्वं प्रयोक्तव्यम् । कृष्णश्रितः

४५१ राजदन्तादिषु परम् ॥ ३१ ॥ एषूपसर्जनं परं प्रयोक्तव्यम् । दन्तानां राजा राजदन्तः ॥

४५२ द्वन्द्वे घि ॥ ३२ ॥ द्वन्द्वे समासे घ्यन्तं पूर्वं प्रयोक्तव्यम् । हरिहरौ । पटुगुप्तौ ॥

* अनेकप्राप्तावेकस्य नियमः शेषे त्वनियमः । पटुमृदुशुक्लाः पटुशुक्लमृदवः ॥

४५३ अजाद्यदन्तम् ॥ ३३ ॥ अजाद्यदन्तं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम् ॥ ईशकृष्णौ ॥

१ तेन कर्णेषु कर्णेषु कथयित्वा इदम् अभवत्, प्रथितम् 'कर्णाकर्णि प्रथितमभवत्' इत्यपि सिद्धम् ॥

*बहुष्वनियमः । अश्वरथेन्द्राः । इन्द्ररथाश्वाः ॥

*द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेन । इन्द्राग्नी ॥

४५४ अल्पाच्तरम् ॥ ३४ ॥ अल्पाच्तरं द्वन्द्वे पूर्वं प्रयोक्तव्यम् । प्लक्षन्यग्रोधौ । धवखदिरपलाशाः ॥

*ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण पूर्वनिपातो वक्तव्यः । हेमन्तशिशिरवसन्ताः । कृत्तिकारोहिण्यौ ॥

*लघ्वक्षरं पूर्वम् । कुशकाशम् ॥

*अभ्यर्हितं च पूर्वम् । मातापितरौ ॥

*वर्णानामानुपूर्व्येण पूर्वनिपातः ॥ ब्राह्मणक्षत्रियविट्शूद्राः ॥

*भ्रातुश्च ज्यायसः पूर्वनिपातः । युधिष्ठिरार्जुनौ ॥

*संख्याया अल्पीयस्याः पूर्वनिपातः । द्वित्राः । त्रिचतुराः । नवतिशतम् ॥

४५५ सप्तमीविशेषणे बहुव्रीहौ ॥३५॥ सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोक्तव्यम् । कण्ठेकालः । चित्रगुः ॥

*सर्वनामसंख्ययोरुपसंख्यानम् । सर्वश्वेतः । द्विशुक्लः ॥

*अनयोरेव मिथः सम्प्रधारणायां परत्वात्संख्यायाः पूर्वनिपातः । द्व्यन्यः ॥

*वा प्रियस्य पूर्वनिपातः । गुडप्रियः प्रियगुडः ।

*गड्वादिभ्यः सप्तम्यन्तं परम् । गडुकण्ठः ॥

४५६ निष्ठा ॥ ३६ ॥ निष्ठान्तं च बहुव्रीहौ पूर्वं प्रयोक्तव्यम् । कृतकृत्यः ॥

*निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम् । शार्ङ्गजग्धी । मासजातः । सुखजातः । दुःखजातः ॥

*प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ । अस्युद्यतः । दण्डपाणिः ॥

४५७ वाहिताग्न्यादिषु ॥ ३७ ॥ आहिताग्न्यादिषु निष्ठान्तं वा पूर्वं प्रयोक्तव्यम् । आहिताग्निः अग्न्याहितः । आकृतिगणोऽयम् ॥

४५८ कडाराः कर्मधारये ॥ ३८ ॥ कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः । कडारजैमिनिः । जैमिनिकडारः ॥

इति [illegible] पाणिनीयसूत्रवृत्तौ द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

## द्वितीयाध्यायस्य तृतीयः पादः ।

४५९ अनभिहिते ॥१॥ अनुक्ते अयमधिकारः ॥

४६० कर्मणि द्वितीया ॥ २ ॥ अनुक्ते कर्मणि द्वितीया स्यात् । ओदनं पचति ॥

*उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ।

उभयतो ग्रामम् । सर्वतो ग्रामम् । धिक् देवदत्तम् । उपर्युपरि ग्रामम् । अध्यधि ग्रामम् । अधोऽधो लोकम् ॥

*अभितः परितः--समया--निकषा--हा-प्रति- योगेषु च दृश्यते । अभितो ग्रामम् । परितो ग्रामम् । समया ग्रामम् । निकषा ग्रामम् । हा देवदत्तम् । बुभुक्षितं न प्रतिभाति किंचित् ॥

४६१ तृतीया च होश्छन्दसि ॥ ३ ॥ जुहोतेः कर्मणि तृतीया स्याद्द्वितीया च छन्दसि विषये ॥ यवाग्वाग्निहोत्रं जुहोति यवागूमग्निहोत्रं जुहोति ॥

४६२ अन्तरान्तरेण युक्ते ॥४॥ आभ्यां योगे द्वितीया स्यात् ॥ अन्तरा त्वां मां च कमण्डलुः । अन्तरेण त्वां मां च कमण्डलुः ॥

४६३ कालाध्वनोरत्यन्तसंयोगे ॥५॥ क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः सम्बन्धे कालाध्ववाचकाद्द्वितीया ॥ मास मधीते । मासं कल्याणी । मासं गुडधानाः । योजनमधीते । क्रोशं कुटिला नदी । क्रोशं पर्वतः ॥

४६४ अपवर्गे तृतीया ॥ ६ ॥ फलप्राप्तौ कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् ॥ मासेनानुवाकोऽधीतः ॥

४६५ सप्तमीपञ्चम्यौ कारकमध्ये ॥७॥ कारकशक्तिमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः । अद्य भुक्त्वा देवदत्तो द्व्यहे भोक्ता द्व्यहाद्वा । त्र्यहे त्र्यहाद्वा भोक्ता । इहस्थोऽयमिष्वासः क्रोशे लक्ष्यं विध्यति क्रोशाल्लक्ष्यं विध्यति ॥

४६६ कर्मप्रवचनीययुक्ते द्वितीया ॥८॥ कर्मप्रवचनीयैर्युक्ते द्वितीया स्यात् ॥ जप मनु प्रावर्षत् ॥

४६७ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ ९ ॥ यस्मादधिकं यस्य चेश्वरवचनं कर्मप्रवचनीययुक्ते तत्र सप्तमी स्यात् ॥ उप खार्यां द्रोणः ॥ स्वस्वामिनोः पर्यायेण सप्तमी । अधि ब्रह्मदत्ते पञ्चालाः अधि पञ्चालेषु ब्रह्मदत्तः ॥

४६८ पञ्चम्यपाङ्परिभिः ॥ १० ॥ कर्मप्रवचनीयैरेतैर्योगे पञ्चमी स्यात् । अप त्रिगर्तेभ्यो वृष्टो देवः । आ पाटलिपुत्राद्वृष्टो देवः । परि त्रिगर्तेभ्यो वृष्टो देवः ॥

४६९ प्रतिनिधिप्रतिदाने च यस्मात् ॥ ११ ॥ यस्मात्प्रतिनिधिर्यतश्च प्रतिदानं तत्र कर्मप्रवचनीययुक्ते पञ्चमी स्यात् ॥ अभिमन्युरर्जुनतः प्रति । तिलेभ्यः प्रतियच्छति माषान् ॥

४७० गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ १२ ॥ चेष्टाक्रियाणां गत्यर्थानामध्वभिन्ने कर्मणि द्वितीयाचतुर्थ्यौ स्तः ॥ ग्रामं गच्छति ग्रामाय गच्छति ॥

*आस्थितप्रतिषेधश्चायं विज्ञेयः । यत्रोत्पथेन पन्थानं गच्छति तत्र भवितव्यमेव चतुर्थ्या । उत्पथेन पथे गच्छति ॥

४७१ चतुर्थी संप्रदाने ॥ १३ ॥ सम्प्रदाने कारके चतुर्थी विभक्तिर्भवति ॥ उपाध्यायाय गां ददाति ॥

गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्याद्बद्धः जाड्येन बद्धः ॥

४८४ षष्ठी हेतुप्रयोगे ॥ २६ ॥ हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् ॥ अन्नस्य हेतोर्वसति ॥

४८५ सर्वनाम्नस्तृतीया च ॥ २७ ॥ सर्वनाम्नो हेतुशब्दप्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च॥कस्य हेतोर्वसति। केन हेतुना वसति ॥

* निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम् । किं निमित्तं वसति । केन निमित्तेन वसति । कस्मै निमित्ताय वसति । कस्मान्निमित्ताद्वसति । कस्य निमित्तस्य वसति । कस्मिन्निमित्ते वसति । किं कारणं वसति । केन हेतुना वसति इत्यादि उदाहार्यम् ॥

४८६ अपादाने पञ्चमी ॥२८॥ अपादाने पञ्चमी स्यात् ॥ पर्वतादवरोहति ॥

*पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम् । प्रासादात् प्रेक्षते प्रासादमारुह्य प्रेक्षते॥

*अधिकरणे च । आसनात्प्रेक्षते आसने उपविश्य प्रेक्षते ॥

*प्रश्नाख्यानयोश्च (पञ्चमी वक्तव्या) कुतो भवान् । पाटलिपुत्रात् ॥

यतश्चाध्वकालनिर्माणं (ततः पञ्चमी) गवीधुमतः साङ्काश्यं चत्वारि योजनानि ।

* तद्युक्तात्काले सप्तमी । कार्त्तिक्या आग्रहायणी मासे ॥

*अध्वनः प्रथमा (सप्तमी) च (वक्तव्या) । गवीधुमतः साङ्काश्यं चत्वारि योजनानि चतुर्षु योजनेषु वा ।

४८७ अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ॥ २९ ॥ अन्य आरात् इतर ऋते दिक्शब्द अञ्चूत्तरपद आच् आहि इत्येतैर्योगे पञ्चमी स्यात् । अन्यो देवदत्तात् । आराद् देवदत्तात् । इतरो देवदत्तात् । ऋते कृष्णात् । पूर्वो ग्रामात् ॥ दिग्ग्रहणं. शब्दो दिक्शब्दः अयमस्मात्पूर्वः कालः ॥प्राग्ग्रामात् । दक्षिणा ग्रामात् ॥ दक्षिणाहि ग्रामात् ॥

४८८ षष्ठ्यतसर्थप्रत्ययेन ॥ ३० ॥ अतसर्थेन प्रत्ययेन युक्ते षष्ठी स्यात् । दक्षिणतो ग्रामस्य । दक्षिणात् ग्रामस्य ॥

४८९ एनपा द्वितीया ॥ ३१ ॥ एनबन्तेन योगे द्वितीया स्यात् ॥ दक्षिणेन ग्रामम् ॥

४९० पृथग्विनानानाभिस्तृतीयान्यतरस्याम् ॥ ३२ ॥ एतैर्योगे तृतीया वा स्यात् पञ्चमी च । पृथग् देवदत्तेन पृथग् देवदत्तात् । विना देवदत्तेन, विना देवदत्तात् । नाना देवदत्तेन नाना देवदत्तात् ।

पृथक् विना नानाभिरिति योगविभागो द्वितीयार्थः । विना वातमित्यादि ॥

४९१ करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ॥ ३३ ॥

४९९ यतश्च निर्द्धारणम् ॥ ४१ ॥ जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः। मनुष्याणां क्षत्रियः शूरतमः, मनुष्येषु क्षत्रियः शूरतमः। गवां कृष्णा सम्पन्नक्षीरा, गोषु कृष्णा सम्पन्नक्षीरा। अध्वगानां धावन्तः शीघ्रतमाः, अध्वगेषु वा॥

५०० पञ्चमी विभक्ते ॥ ४२ ॥ यस्मिन्निर्द्धारणाश्रये विभक्तमस्ति ततः पञ्चमी स्यात्। माथुराः पाटलिपुत्रेभ्यः आढ्यतराः।

५०१ साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ ४३ ॥ साधुनिपुणाभ्यां योगेऽर्चायां गम्यमानायां सप्तमी, न तु प्रतेः प्रयोगे॥ मातरि साधुः। पितरि निपुणः॥

* अप्रत्यादिभिरिति वक्तव्यम् ॥ साधुर्देवदत्तो मातरं प्रति परि॥

५०२ प्रसितोत्सुकाभ्यां तृतीया च ॥ ४४ ॥ आभ्यां योगे तृतीया चात्सप्तमी॥ केशेषु प्रसितः, केशैः प्रसितः। केशेषु उत्सुकः, केशैरुत्सुकः॥

५०३ नक्षत्रे च लुपि ॥ ४५ ॥ लुबन्तान्नक्षत्रशब्दात्तृतीयासप्तम्यौ स्तोऽधिकरणे। पुष्येण पायसमश्नीयात्। पुष्ये पायसमश्नीयात्।

५०४ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ ४६ ॥ प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये वचनमात्रे च प्रथमा स्यात्। उच्चैः नीचैः। स्त्री पुमान् नपुंसकम्। तटः तटी तटम्। द्रोणः। खारी आढकम्। एकः द्वौ बहवः॥

५०५ संबोधने च ॥ ४७ ॥ संबोधने प्रथमा स्यात्। हे राम॥

५०६ सामन्त्रितम् ॥ ४८ ॥ संबोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात्। हे राम मां पाहि॥

५०७ एकवचनं संबुद्धिः ॥ ४९ ॥ आमन्त्रितप्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्। हे पटो॥

५०८ षष्ठी शेषे ॥ ५० ॥ कर्मादिभ्योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः, तत्र षष्ठी स्यात्॥ राज्ञः पुरुषः॥

५०९ ज्ञोऽविदर्थस्य करणे ॥ ५१ ॥ जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात्। सर्पिषो जानीते। प्रवर्तते इत्यर्थः।

५१० अधीगर्थदयेशां कर्मणि ॥ ५२ ॥ एषां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात्। मातुरध्येति। मातुः स्मरति। सर्पिषो दयते। सर्पिष ईष्टे॥

५११ कृञः प्रतियत्ने ॥ ५३ ॥ कृञः कर्मणि षष्ठी स्यात्, प्रतियत्ने गम्यमाने। एधो दकस्योपस्कुरुते॥

५१२ रुजार्थानां भाववचनानामज्वरेः ॥ ५४ ॥ रुजार्थानां भावकर्तृकाणां ज्व-

**५२४ उभयप्राप्तौ कर्मणि ॥ ६६ ॥** उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् ॥ आश्चर्यो गवां दोहोऽगोपेन ॥

*अकाकारयोः स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम् ॥ भेदिका देवदत्तस्य काष्ठानाम् । चिकीर्षा देवदत्तस्य काव्यस्य ॥

*शेषे विभाषा ॥ विचित्रा हि सूत्रस्य कृतिः पाणिनेः पाणिनिना वा ॥ केचिदविशेषेण विभाषामिच्छन्ति—शब्दानामनुशासनमाचार्येण आचार्यस्य वा ॥

**५२५ क्तस्य च वर्तमाने ॥ ६७ ॥** वर्तमानकालविहितस्य क्तस्य योगे षष्ठी स्यात् ॥ राज्ञां मतः । राज्ञां बुद्धः । राज्ञां पूजितः ॥

*नपुंसके भावे उपसंख्यानम् ॥ छात्रस्य हसितम् ॥

**५२६ अधिकरणवाचिनश्च ॥ ६८ ॥** अधिकरणवाचिनः क्तस्य योगे षष्ठी स्यात् ॥ इदमेषामासितम् ॥

**५२७ न लोकाव्ययनिष्ठाखलर्थतृनाम् ६९** ल उ उक अव्यय निष्ठा खलर्थ तृन् इत्येतेषां योगे षष्ठी न स्यात् ॥ ओदनं पचन् ओदनं पचमानः । ओदनं पेचानः । ओदनं पेचिवान् । पपिः सोमम् । ददिर्गाः । कटं चिकीर्षुः ॥

*इष्णुचोऽपि प्रयोगे निषेधः ॥ कन्यामलंकरिष्णुः ॥ आयामुक वाराणसीम् रक्ष आहुः ॥

* उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः ॥ दास्याः कामुकः ॥ कटं कृत्वा ॥

*अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः ॥ पुरा सूर्यस्योदेतोराधेयः । पुरा क्रूरस्य विसृपो विरप्शिन् (वा०स०१।२८) ॥ ओदनं भुक्तवान् । देवदत्तेन कृतम् । ईषत्करः कटो भवता । ईषत्पानः सोमो भवता । तृन्निति प्रत्याहारग्रहणम् ' लटः शतृशानचौ ३।२।१२४ इत्यारभ्य आ तृनो १३५ नकारात् । तेन शानन् चानश् शतृ तृनामपि प्रतिषेधो भवति । सोमं पवमानः नडमाघ्नानः । अधीयन् पारायणम् । कर्ता कटान् ॥

*द्विषः शतुर्वा वचनम् ॥ चौरं द्विषन् । चौरस्य द्विषन् ॥

**५२८ अकेनोर्भविष्यदाधमर्ण्ययोः ॥७०॥** भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात् । कटं कारको व्रजति । ग्रामं गमी । शतं दायी ॥

**५२९ कृत्यानां कर्तरि वा ॥ ७१ ॥** कृत्यानां योगे कर्तरि षष्ठी वा स्यात् ॥ भवता कटः कर्तव्यः । भवतः कटः कर्तव्यः ॥

*उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः ॥ नेतव्या ग्रामं शाखा देवदत्तेन नेतव्या ग्राममजा देवदत्तेन ॥

**५३० तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ॥ ७२ ॥** तुल्यार्थैर्योगे तृतीया

५४१ शूद्राणामनिरवसितानाम् ॥ १० ॥ पात्राद्बहिष्कृतानां शूद्राणां द्वन्द्व एकवत्स्यात् । तक्षायस्कारम् ॥ बहिष्कृतानां तु चाण्डालमृतपाः ॥

५४२ गवाश्वप्रभृतीनि च ॥ ११ ॥ गवाश्वप्रभृतीनि कृतैकवद्भावानि साधूनि॥ गवाश्वम् ॥

५४३ विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्॥ १२ ॥ एतेषां द्वन्द्व एकवत्स्याद्वा । प्लक्षन्यग्रोधम् । प्लक्षन्यग्रोधाः । रुरुपृषतम् । रुरुपृषताः । कुशकाशम् । कुशकाशाः । व्रीहियवम्, व्रीहियवाः । दधिघृतम् । दधिघृते गोमहिषम्, गोमहिषाः । तित्तिरिकपिञ्जलम् । तित्तिरिकपिञ्जलाः । अश्ववडवम् । अश्ववडवौ । पूर्वापरम् । पूर्वापरे । अधरोत्तरम् । अधरोत्तरे॥

* फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिर्द्वन्द्व एकवत्स्यात्, न द्विप्रकृतिः ॥ बदरामलके । रथिकाश्वारोहौ । प्लक्षन्यग्रोधौ । रुरुपृषतौ । हंसचक्रवाकौ । यूकालिक्षे । व्रीहियवौ । कुशकाशौ ॥

५४४ विप्रतिषिद्धं चानधिकरणवाचि ॥ १३ ॥ विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवद्वा स्यात् । शीतोष्णे । शीतोष्णम् ॥

५४५ न दधिपयआदीनि ॥ १४ ॥ एतानि नैकवत्स्युः । दधिपयसी ॥

५४६ अधिकरणैतावत्त्वे च ॥ १५ ॥ द्रव्यसंख्यावगमे एकवदेवेति नियमो न स्यात् । दश दन्तोष्ठाः ॥

५४७ विभाषा समीपे ॥ १६ ॥ अधिकरणैतावत्त्वस्य सामीप्ये द्वन्द्व एकवद्वा स्यात् ॥ उपदशाः दन्तोष्ठाः । उपदशं दन्तोष्ठम् ॥

५४८ स नपुंसकम् ॥ १७ ॥ यस्यायमेकवद्भावो विहितः स नपुंसकलिङ्गः स्यात् द्विगुर्द्वन्द्वश्च ॥ पञ्चगवम् । दशगवम् । पाणिपादम् ॥

५४९ अव्ययीभावश्च ॥ १८ ॥ अव्ययीभावश्च नपुंसकलिङ्गो भवति । अधिहरि ॥

५५० तत्पुरुषोऽनञ्कर्मधारयः ॥ १९ ॥ अधिकारोऽयम् । नञ्समासं कर्मधारयं च वर्जयित्वाऽन्यस्तत्पुरुषो नपुंसकलिङ्गः स्यात् । ब्राह्मणसेनम् ।

५५१ संज्ञायां कन्थोशीनरेषु ॥ २० ॥ संज्ञायां कन्थान्तस्तत्पुरुषो नपुंसकलिङ्गः स्यात् । सा चेत्कन्था उशीनरेषु भवति । सौशमिकन्थम् ॥

५५२ उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ॥ २१ ॥ उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकलिङ्गः स्यात्, उपज्ञायमानोपक्रम्यमाणयोरादेराचिख्यासायां गम्यमानायाम् । पाणिन्युपज्ञं व्याकरणम् । नन्दोपक्रमाणि मानानि ॥

५५३ छाया बाहुल्ये ॥ २२ ॥ छायान्तस्तत्पुरुषो नपुंसकः स्यात्पूर्वपदार्थबाहुल्ये । इक्षुच्छायम् ॥

*पात्रादिभ्यः प्रतिषेधो वक्तव्यः ॥ पञ्चपात्रम् ॥

५६२ अर्द्धर्चाः पुंसि च ॥ ३१ ॥ अर्द्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्द्धर्चम् अर्द्धर्चः ।

५६३ इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥३२॥ इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादि विभक्तौ ॥ किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरविधानाय पुनरुपादानमन्वादेशः। आभ्यां छात्राभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतम् ॥ अशादेशवत्त साकच्कार्थम् इमकाभ्यां छात्राभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतम् ॥

५६४ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ॥३३॥ एतदोऽन्वादेशविषयस्याशादेशो भवति अनुदात्तस्त्रतसोः परतः । तौ चापि त्रतसावनुदात्तौ स्तः । एतस्मिन्ग्रामे सुखं वसाम अथोऽत्र युक्ता अधीमहे । एतस्माच्छात्राच्छन्दोऽधीष्व अथो अतो व्याकरणमध्यधीष्व ॥

५६५ द्वितीयाटौस्स्वेनः ॥३४॥ द्वितीयाटा ओस् इत्येतेषु परत इदमेतदोरन्वादेशे एनादेशः स्यादनुदात्तः । एनम् । एनौ । एनान् । एनेन । एनयोः । एनयोः ॥

*एनदिति नपुंसकैकवचने वक्तव्यम् । इदं कुण्डम् आनय, प्रक्षालयैनत् परिवर्तयैनत् ॥

५६६ आर्द्धधातुके ॥ ३५॥ आर्द्धधातुकविवक्षायां वक्ष्यमाणकार्यम् । अधिकारोऽयम् । व्यक्षत्रियार्ष इति यावत् ॥

५६७ अदो जग्धिर्ल्यप्ति किति ॥ ३६ ॥ अदो जग्धिरादेशः स्यात् ल्यपि तादौ किति च । प्रजग्ध्य ॥ जग्धः जग्धवान् ।

५६८ लुङ्सनोर्घस्लृ ॥ ३७ ॥ लुङि सनि चादो घस्लृ स्यात् । अघसत् जिघत्सति ॥

*घस्लृभावेऽच्युपसंख्यानम् । प्रात्तीति प्रघसः ॥

५६९ घञपोश्च ॥ ३८ ॥ घञि अपि चादो घस्लृ स्यात् । घासः । प्रघसः ॥

५७० बहुलं छन्दसि ॥ ३९ ॥ छन्दसि अदो घस्लृ स्यात् । घस्तां नूनम् (वा०सं० २१।४३) । सग्धिश्च मे (वा० १८।६) ॥

५७१ लिट्यन्यतरस्याम् ॥ ४०॥ अदो घस्लृ वा स्याल्लिटि॥ जघास ।जक्षतु:,जक्षुः आद आदतु: आदु: ॥

५७२ वेञो वयिः ॥ ४१ ॥ वेञो वयिरादेशो वा स्याल्लिटि । उवाय ऊयतु:,ऊयुः पक्षे (ऊवतुः ऊवुः) ववौ ववतुः ववुः ॥

५७३ हनो वध लिङि ॥ ४२ ॥ हनो वधादेशः स्याल्लिङ्याऽऽर्धधातुके॥वध्यात् ।

५७४ लुङि च ॥ ४३ ॥ हनो वधादेशो लुङि आर्द्धधातुके । अवधीत् ।

५७५ आत्मनेपदेष्वन्यतरस्याम् ॥४४॥

५८८ वा यौ ॥ ५७ ॥ यौ परेऽजेर्वीर्वा स्यात् । प्रवयणः प्राजनः ॥

५८९ण्यक्षत्रियार्षञितो यूनि लुगणिञोः॥५८

ण्यन्तात्क्षत्रियगोत्रादार्षाद् ञितश्च परयोरणिञोर्यूनि लुक् स्यात् ॥ कौरव्यः पिता कौरव्यः पुत्रः । श्वाफल्कः पिता, श्वाफल्कः पुत्रः । वासिष्ठः पिता, वासिष्ठः पुत्र. । वैदः पिता, वैदः पुत्रः । तैकायनिः पिता, तैकायनिः पुत्रः ॥

*अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम् यौधिः पिता, यौधिः पुत्रः ॥

५९० पैलादिभ्यश्च ॥ ५९ ॥ पैलादिभ्यो युवप्रत्ययस्य लुक् स्यात् । पैलः पिता, पैल. पुत्र. ॥

५९१ इञः प्राचाम् ॥ ६० ॥ गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुक्। पान्नागारिः पिता, पान्नागारि. पुत्र. ॥

५९२ न तौल्वलिभ्यः ॥ ६१ ॥ तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य न लुक्॥ तौल्वलि पिता, तौल्वलायनः पुत्रः ॥

५९३ तद्राजस्य बहुषु तेनैवास्त्रियाम् । ॥ ६२ ॥ तद्राजसंज्ञकस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य लुक् तद्राजेन कृतं बहुत्वं चेत् ॥ अङ्गा. वङ्गाः कलिङ्गा॥स्त्रिया तु न लुक्–आङ्ग्य. वाङ्ग्य. ॥

५९४ यस्कादिभ्यो गोत्रे ॥ ६३ ॥ यस्कादिभ्य. परस्य गोत्रप्रत्ययस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य लुक् गोत्रप्रत्ययेन कृतं बहुत्वं चेत् ॥ यस्काः ॥

५९५ यञञोश्च ॥ ६४ ॥ यञोऽञश्च गोत्रप्रत्ययस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य लुक् ॥ गर्गाः,वत्साः, विदाः,उर्वाः ॥

*यञादीनामेकस्य द्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् । गार्ग्यस्य कुलम् गार्ग्यकुलम् गर्गकुलं वा । गार्ग्ययोः कुलम् गार्ग्यकुलम्, गर्गकुलं वा ॥ वैदस्य कुलम्–वैदकुलम्, विदकुलं वा ॥

५९६ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ॥ ६५ ॥ एभ्य. परस्य गोत्रप्रत्ययस्य बहुषु लुग् भवति । अत्रयः, भृगवः, कुत्साः, वसिष्ठाः, गोतमाः,अङ्गिरसः ॥

५९७ बह्वच इञः प्राच्यभरतेषु ॥६६॥ बह्वचो य इञ् प्राच्यगोत्रे भरतगोत्रे च तस्य बहुषु लुक् स्यात् । पन्नागाराः युधिष्ठिराः, अर्जुनाः ॥

५९८ न गोपवनादिभ्यः ॥ ६७ ॥ गोपवनादिभ्य. परस्य प्रत्ययस्य लुक् न स्यात् । गौपवनाः ।

५९९ तिककितवादिभ्यो द्वंद्वे ॥ ६८ ॥ तिकादिभ्यः कितवादिभ्यश्च द्वन्द्वे गोत्रप्रत्ययस्य बहुषु लुक् स्यात्, तैकायनाश्च कैतवायनाश्च तिककितवाः ।

६०० उपकादिभ्योऽन्यतरस्यामद्वन्द्वे॥६९ उपकादिभ्य. परस्य गोत्रप्रत्ययस्य बहुषु वा लुक् स्यात् ॥ द्वन्द्वे चाद्वन्द्वे च । उपकलमकाः । उपकाः । औपकायना. । लमकाः । लामकायना. ॥

६१३ अव्ययादाप्सुपः ॥ ८२ ॥ अव्ययात्परस्यापः सुपश्च लुक् ॥ तत्र शालायाम् । यत्र । कृत्वा ।

६१४ नाव्ययीभावादतोऽम्त्वपञ्चम्याः ॥ ८३ ॥ अदन्तादव्ययीभावात्सुपो न लुक् तस्य पञ्चमीं विनाऽमादेशः ॥ उपकुम्भम् ॥

६१५ तृतीयासप्तम्योर्बहुलम् ॥ ८४ ॥ अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलममभावः स्यात् । उपकुम्भेन उपकुम्भम् । उपकुम्भम् उपकुम्भे ॥

*सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यममिति वक्तव्यम् । सुमद्रम् उन्मत्तगङ्गम् । एकविंशतिभारद्वाजम् । बहुलवचनात्सिद्धम् ।

६१६ लुटः प्रथमस्य डारौरसः ॥८५॥ लुटः प्रथमपुरुषस्य डारौरसः इत्येते आदेशाः स्युः । भविता भवितारौ भवितारः । पचिता पचितारौ पचितारः ।

इति द्वितीयाध्यायस्य चतुर्थः पादः ।

समाप्तश्च द्वितीयाध्यायः ॥

इति श्री समस्तमहीमण्डलमण्डितरणराणावतान्वयावसमुद्रसमुद्भूतकामधेन्वा सवाई-जयपुरनगराधीशमहाराजाधिराजसवाईरामसिंहसहधर्मिण्या रूपकुमारीदेव्याः कारितायां माधुर्यात्तुर्वेदिकश्रीराजकुमारतनयजानकीलालविरचितायां राणावतीयपाणिनीयसूत्रवृत्तौ द्वितीयोऽध्यायः समाप्तः ॥

# तृतीयाध्यायस्य प्रथमः पादः

६१७ प्रत्ययः ॥ १ ॥ अधिकारोऽयम् आ पञ्चमाध्यायपरिसमाप्तेः। यानित ऊर्ध्वमनुक्रमिष्यामस्ते प्रत्ययसंज्ञकाः स्युः ॥

६१८ परश्च ॥ २ ॥ अयमप्यधिकारः । प्रत्ययसंज्ञकः पर एव स्यात् ॥ कर्तव्यम् ॥

६१९ आद्युदात्तश्च ॥ ३ ॥ अयमप्यधिकारः आद्युदात्तश्च स भवति यः प्रत्ययसंज्ञकः ॥ कर्तव्यम् ॥

६२० अनुदात्तौ सुप्पितौ ॥ ४ ॥ सुपः पितश्च प्रत्ययाः अनुदात्ताः स्युः ॥ दृषदौ दृषदः । पचति पठति ॥

६२१ गुप्तिज्किद्भ्यः सन् ॥ ५ ॥ एभ्यः सन् ॥ जुगुप्सते तितिक्षते चिकित्सति ॥

*निन्दा क्षमा व्याधिप्रतीकारेषु सन्निष्यते ॥ अन्यत्र यथा प्राप्तं प्रत्यया भवन्ति गोपायति । तेजयति । संकेतयति ॥

६२२ मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥६॥ एभ्यः सन्स्यात्, अभ्यासस्य (इकारस्य) दीर्घश्च ॥ मीमांसते । बीभत्सते । दीदांसते । शीशांसते ।

*मानेर्जिज्ञासायाम् ॥

*बधेर्वैरूप्ये ॥

*दानेरार्जवे ॥

६३१ कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥ १५ ॥ कर्मभ्यां रोमन्थतपोभ्यां वर्तिचरोरर्थयोः क्यङ् स्यात् ॥ रोमन्थं वर्तयति रोमन्थायते गौः ॥

*हनुचलने इति वक्तव्यम् । नेहामा भूत् कीटो रोमन्थं वर्तयति ॥

*तपसः परस्मैपदं च । तपश्चरति तपस्यति ॥

६३२ बाष्पोष्मभ्यामुद्वमने ॥ १६ ॥ कर्मभ्यां बाष्पोष्मभ्यामुद्वमने क्यङ् स्यात् बाष्पमुद्वमति बाष्पायते । ऊष्मायते ॥

*फेनाच्चेति वक्तव्यम् । फेनायते ॥

६३३ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ १७ ॥ एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते । वैरायते । कलहायते । अभ्रायते । कण्वायते । मेघायते ॥

*सुदिनदुर्दिननीहारेभ्यश्च । सुदिनायते । दुर्दिनायते । नीहारायते ॥

*अटाट्टाशीका कोटा पोटा सोटा कष्टा ग्रहणं कर्तव्यम् । अटायते । अट्टायते । शीकायते । कोटायते । पोटायते । सोटायते । कष्टायते ॥

६३४ सुखादिभ्यः कर्तृवेदनायाम् ॥१८॥ सुखादिभ्यः क्यङ् स्यात्कर्तृवेदनायाम् ॥ वेदयितुश्चेत्कर्तुः सम्बन्धीनि सुखादीनि स्युः । सुखं वेदयते सुखायते ॥

६३५ नमोवरिवश्चित्रङः क्यच् ॥१९॥ एभ्यो वा क्यच् करणे ॥

*नमसः पूजायाम् । नमस्यति देवान् ॥

*वरिवसः परिचर्यायाम् । वरिवस्यति गुरून् ॥

चित्रङः आश्चर्ये । चित्रीयते ॥

६३६ पुच्छभाण्डचीवराण्णिङ् ॥ २० ॥ एभ्यो णिङ् करणविशेषे ॥

*पुच्छादुदसने व्यसने पर्यसने च । उत्पुच्छयते । विपुच्छयते ॥ परिपुच्छयते ॥

*भाण्डात्समाचयने । सम्भाण्डयते ॥

*चीवरादर्जने परिधाने च । संचीवरयते भिक्षुः ॥

६३७ मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्र हलकलकृततूस्तेभ्यो णिच् ॥ २१ ॥ एभ्यः करणे णिच् । मुण्डं करोति मुण्डयति, मिश्रयति, श्लक्ष्णयति, लवणयति ॥

*व्रताद्भोजने तन्निवृत्तौ च । पयो व्रतयति, शूद्रान्नं व्रतयति ॥

*वस्त्रात्समाच्छादने । संवस्त्रयति ॥

हलिं गृह्णाति हलयति । कलिं गृह्णाति कलयति ॥

*हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम् । अजहलत् अचकलत् ॥ कृतं गृह्णाति कृतयति तूस्तानि विहन्ति वितूस्तयति ॥

६३८ धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ २२ ॥ पौनःपुन्ये भृशार्थे

धातुर्घृणायाम्। तत ईयङ् स्वार्थे॥ ऋतीयते॥

६४६ कमेर्णिङ् ॥ ३० ॥ कमेर्णिङ् स्यात्स्वार्थे॥ कामयते।

६४७ आयादय आर्द्धधातुके वा ॥३१॥ आर्द्धधातुकविवक्षायामायादयो वा स्युः॥ गोपायिता गोप्ता। ऋतीयिता अर्तिता। कामयिता कमिता॥

६४८ सनाद्यन्ता धातवः ॥ ३२ ॥ सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसञ्ज्ञकाः स्युः। चिकीर्षिता पुत्रीयति। कामयते।

६४९ स्यतासी ऌलुटोः ॥३३॥ धातोः स्यतासी प्रत्ययौ स्त ऌलुटो परयोः। करिष्यति करिष्यते। अकरिष्यत् अकरिष्यत। श्वः कर्ता कर्तारः।

६५० सिब्बहुलं लेटि ॥ ३४ ॥ धातोः सिप्प्रत्ययो भवति बहुलं लेटि परतः॥ जोषिषत् ऋ०सं०२।३५।१॥तारिषत् ऋ०सं० १।२५।१२॥मन्दिषत्॥ न च भवति पताति (ऋ०सं० ७।२५।१) च्यावयति ऋ०४।१७।५)

६५१ कास्प्रत्ययादाममन्त्रे लिटि॥ ५॥ कास्धातोः प्रत्ययान्तेभ्यश्चाम् स्याल्लिटि अमन्त्रविषये। कासाञ्चक्रे पिपठिषा चकार। पुत्रीया चकार। धनकाम्या चकार। श्येनायां चक्रे। लोहितायां चकार-चक्रे। अभ्रोञ्चकार मिश्रया चकार। लोलूया चक्रे। कण्डूया चकार। ऋतीयां चक्रे। कामया चक्रे॥

*कास्यनेकाच इति वक्तव्यम् चुलुम्पाद्यर्थम् चुलुम्पा चकार॥

६५२ इजादेश्च गुरुमतोऽनृच्छः ॥३६॥ इजादिर्यो धातुर्गुरुमान ऋच्छत्यन्यस्तत आम् स्याल्लिटि। ईहा चक्रे। ऊहां चक्रे।

*वाच्य ऊर्णोर्नुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्। आमश्च प्रतिषेधार्थमेकाच श्चेड्डुपग्रहात्॥ प्रोर्णनाव।

६५३ दयायासश्च ॥ ३७ ॥ एभ्य आम् स्याल्लिटि। दया चक्रे। अया चक्रे। आसा चक्रे।

६५४ उषविद जागृभ्योऽन्यतरस्याम् ॥ ३८ ॥ एभ्य आम् वा स्याल्लिटि। ओषा चकार उवोष॥

* विदेरदन्तत्वप्रतिज्ञानादामि न गुणः विदा चकार। विवेद। जागरा चकार। जजागर॥

६५५ भीह्रीभृहुवां श्लुवच्च ॥३९॥ एभ्यो लिट्याम् वा स्यादामि श्लाविव कार्यं च। बिभया चकार। बिभाय। बिभरां चकार। बभार। जिह्रया चकार जिह्राय। जुहवां चकार। जुहाव।

६५६ कृञ्चानुप्रयुज्यते लिटि ॥ ४० ॥ आमन्ताल्लिट् परा कृभ्वस्तयोऽनुप्रयुज्यन्ते॥ पाचयाञ्चकार पाचया बभूव पाचयामास॥

६५७ विदाङ्कुर्वन्त्वित्यन्यतरस्याम्॥४१॥ वेत्तेर्लोट्याम् गुणाभावो लोटो लुक् लोडन्तस्य कृञोऽनुप्रयोगश्च निपात्यते। विदां

६६९ लिपि-सिचि-ह्वश्च ॥ ५३ ॥ एभ्यश्च्लेरङ् । अलिपत् । असिचत् । अह्वत् ।

६७० आत्मनेपदेष्वन्यतरस्याम् ॥५४॥ लिपे. सिचेः ह्वयतेश्च च्लेरङ् वात्मनेपदेषु परतः । अलिपत । अलिप्त । असिचत । असिक्त । अह्वत । अह्वास्त ।

६७१ पुषादिद्युताद्यॢदितः परस्मैपदेषु ॥ ५५ ॥ श्यन्विकरणपुषादेर्द्युताद्यॢदितश्च परस्य च्लेरङ् परस्मैपदेषु ॥ अपुषत् । अद्युतत् । अगमत् ॥

६७२ सर्तिशास्त्यर्तिभ्यश्च ॥ ५६ ॥ एभ्यश्च्लेरङ् । असरत् । अशिषत् । आरत् ॥

६७३ इरितो वा ॥ ५७ ॥ इरितो धातोः परस्य च्लेरङ् वा परस्मैपदेषु । अभिदत् ॥

६७४ जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ५८ ॥ एभ्यश्च्लेरङ् वा । अजरत् । अजारीत् । अस्तभत् । अस्तम्भीत् अम्रुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् । अग्रुचत् । अग्रोचीत् । अग्लुचत् अग्लोचीत् । अग्लुचत् । अग्लुञ्चीत् । अश्वत् । अश्वयीत् । अशिश्वियत् ॥

६७५ कृमृदृरुहिभ्यश्छन्दसि ॥ ५९ ॥ एभ्यश्च्लेरङ् छन्दसि । शकलाङ्गुष्ठकोऽकरत् । अथोऽमरत् । अदरदर्थान् । पर्वतमारुहत् । लोके तु अकार्षीत्, अमृत, अदारीत्, अरुक्षत् ॥

६७६ चिण्ते पदः ॥ ६० ॥ पदश्च्लेश्चिण् तशब्दे परे । उदपादि ।

६७७ दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ॥ ६१ ॥ पदश्च्लेश्चिण् वा ते परे । अदीपि अदीपिष्ट । अजनि अजनिष्ट । अबोधि अबुद्ध । अपूरि अपूरिष्ट । अतायि अतायिष्ट । अप्यायि अप्यायिष्ट ।

६७८ अचः कर्मकर्तरि ॥ ६२ ॥ अजन्ताद्धातोः परस्य च्लेश्चिण् ते परे कर्मकर्तरि । अकारि कटः स्वयमेव । पक्षे—अकृत कटः स्वयमेव ।

६७९ दुहश्च ॥ ६३ ॥ दुहः परस्य च्लेश्चिण् वा कर्मकर्तरि । अदोहि गौः स्वयमेव । अदुग्ध गौः स्वयमेव ।

६८० न रुधः ॥६४॥ अस्मात् च्लेश्चिण् न कर्मकर्तरि । अन्ववारुद्ध गौः स्वयमेव ।

६८१ तपोऽनुतापे च ॥ ६५ ॥ अस्मात्परस्य च्लेश्चिण् न कर्मकर्तर्यनुतापे च ॥ अतप्त तपः । अन्वतप्त पापेन ।

६८२ चिण् भावकर्मणोः ॥ ६६ ॥ धातोः परस्य च्लेश्चिण् स्यात् भावे कर्मणि च ते परे । अशायि भवता । अकारि कटो देवदत्तेन ।

६८३ सार्वधातुके यक् ॥ ६७ ॥ भावकर्मवाचिनि सार्वधातुके धातोर्यक् स्यात् ॥ शय्यते भवता । भूयते बभूवे । क्रियते कटः ।

६८४ कर्तरि शप् ॥ ६८ ॥ कर्त्रर्था

चिनि सार्वधातुके धातोः शप् स्यात् । भवति ।

६८५ दिवादिभ्यः श्यन् ॥ ६९ ॥ कर्तृवाचिनि सार्वधातुके दिवादिभ्यः श्यन् स्यात् । दीव्यति ॥

६८६ वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ॥ ७० ॥ एभ्यः श्यन् वा । भ्राश्यते । भ्राशते । भ्लाश्यते । भ्लाशते । क्राम्यति । क्रामति । त्रस्यति । त्रसति । त्रुट्यति । त्रुटति । लष्यति । लषति ॥

६८७ यसोऽनुपसर्गात् ॥ ७१ ॥ अनुपसर्गाद्यसः श्यन् वा ॥ यस्यति यसति ॥

६८८ संयसश्च ॥ ७२ ॥ संपूर्वाद्यसेर्वा श्यन् । संयस्यति । संयसति ॥

६८९ स्वादिभ्यः श्नुः ॥ ७३ ॥ स्वादिभ्यः श्नुः स्यात् । शपोऽपवादः ॥ सुनोति सुनुते ॥

६९० श्रुवः शृ च ॥ ७४ ॥ श्रुवः शृ स्यात् श्नुश्च प्रत्ययः ॥ शृणोति ॥

६९१ अक्षोऽन्यतरस्याम् ॥ ७५ ॥ अक्षस्मात् श्नुर्वा स्यात् शपोऽपवादः ॥ अक्ष्णोति अक्षति ॥

६९२ तनूकरणे तक्षः ॥ ७६ ॥ तक्षस्मात् श्नुर्वा स्यात्तनूकरणे । शपोऽपवादः । तक्ष्णोति काष्ठम्, तक्षति ॥

६९३ तुदादिभ्यः शः ॥ ७७ ॥ तुदादिभ्यः शः स्यात् । शपोऽपवादः ॥ तुदति तुदते ॥

६९४ रुधादिभ्यः श्नम् ॥ ७८ ॥ रुधादिभ्यः श्नम् । शपोऽपवादः ॥ रुणद्धि रुन्धे ॥

६९५ तनादिकृञ्भ्य उः ॥ ७९ ॥ एभ्य उप्रत्ययः स्यात् । शपोऽपवादः । तनोति । करोति ॥

६९६ धिन्विकृण्व्योर च ॥ ८० ॥ अनयोरकारोऽन्तादेशः उप्रत्ययस्य च विषये ॥ धिनोति कृणोति ॥

६९७ क्र्यादिभ्यः श्ना ॥ ८१ ॥ एभ्यः श्ना स्यात् । शपोऽपवादः । क्रीणाति ॥

६९८ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥ ८२ ॥ एभ्यः श्नुः श्ना च । स्तभ्नोति स्तभ्नाति । स्तुभ्नोति स्तुभ्नाति स्कभ्नोति स्कभ्नाति स्कुभ्नोति स्कुभ्नाति चत्वारः सौत्राः ॥ स्कुनोति स्कुनुते स्कुनाति स्कुनीते ॥

६९९ हलः श्नः शानज्झौ ॥ ८३ ॥ हलः परस्य श्नः शानजादेशः स्याद्धौ । मुषाण । पुषाण ॥

७०० छन्दसि शायजपि ॥ ८४ ॥ छन्दसि श्नः शायजादेशः स्यात् शानजपि । गृभाय जिह्वया मधु (ऋ० ८।१७।५) । बधान (यजु० ११।२५) ॥

७०१ व्यत्ययो बहुलम् ॥ ८५ ॥
यथायथं विकरणा विहितास्तेषां छन्दसि बहुलं व्यत्ययः स्यात् । आण्डा शुष्णस्य भेदति(ऋ०सं०८।४०।११)भिनत्तीति प्राप्ते ॥ जरसा मरते पतिः (ऋ० सं०१०।८६।११) म्रियते इति प्राप्ते । 'इन्द्रो वस्तेन नेषतु ।' नयत्विति प्राप्ते । 'इन्द्रेण युजा तरुषेम वृत्रम्' (ऋ० सं० ७।४८।२) तीर्यास्मेति प्राप्ते ॥

बहुलग्रहणं सर्वविधिव्यभिचारार्थम्—
(सुप्तिङुपग्रहलिङ्गनराणां कालहलच्
स्वरकर्तृयङां च । व्यत्ययमिच्छति
शास्त्रकृदेषां सोऽपि च सिध्यति
बाहुलकेन ॥)

'धुरि दक्षिणायाः' (ऋ०सं०१। ६४।) दक्षिणस्यामिति प्राप्ते । 'चषालं ये अश्वयूपाय तक्षति' (ऋ० सं० १।१६२।६) तक्षन्तीति प्राप्ते । उपग्रहः परस्मैपदात्मनेपदे, 'ब्रह्मचारिणमिच्छते' (अथर्व० ११।७।१७) इच्छतीति प्राप्ते । 'प्रतीपमन्य ऊर्मिर्युध्यति' ( ) युध्यते इतिप्राप्ते।'मधोर्मदाय' (ऋ० सं०२।३४।५) मधुन इति प्राप्ते । नरः पुरुषः । अधा स वीरैर्दशभिर्वियूया' (ऋ० सं०७।१०४।१५) वियूयादिति प्राप्ते । कालः कालवाची प्रत्ययः 'श्वोऽग्नीनाधास्यमानेन' लुटो विषये लट् ॥ 'तमसो गा अदुक्षत्' (ऋ० सं० १।३३।१०) अधुक्षदिति प्राप्ते ॥ 'मित्रं वयं च सूरयः ।' (ऋ०सं०५।६६।६) मित्रा वयमिति प्राप्ते । 'भवामिव श्रियसे' (ऋ०सं० ५।५९।३) इत्यत्र 'तुमर्थे' इत्यनेन कृते नि कृते 'ञ्नित्यादीत्याद्युदात्ते प्राप्ते 'व्यत्ययेन मध्योदात्तता ॥ कर्तृशब्दः कारकमात्रपरः । तथा च तद्वाचिनां कृत्तद्धितानां व्यत्ययः । 'अन्नादाय' (अथ० ११।५५।५) अणिवषयेऽच् । यङो यशब्दादारभ्य लिङ्याशिष्यङिति ङकारेण 'यङ्' प्रत्याहारः तेषां व्यत्ययो भेदतीत्यादिरुक्त एव ॥

७०२ लिङ्याशिष्यङ् ॥ ८६ ॥
आशीर्लिङि परे धातोरङ् स्याच्छन्दसि । 'मन्त्रं वोचेमाग्नये ।'(ऋ० सं० १।७४।१) ॥

*दृशेरग्वक्तव्यः॥ 'पितरं च दृशेयं मातरं च' (ऋ०सं०१।२४।१) ॥

७०३ कर्मवत्कर्मणा तुल्यक्रियः ॥ ८७ ॥
कर्मस्थया क्रियया तुल्यक्रियः लकारवाच्य एव कर्ता कर्मवत्स्यात् । कार्यातिदेशोऽयम् । तेन यगात्मनेपदचिण्चिण्वदिटः स्युः । भिद्यते काष्ठं स्वयमेव । अभेदि काष्ठं स्वयमेव । कारिष्यते कटः स्वयमेव

७१६ गदमदचरयमश्चानुपसर्गे ॥१००॥ अनुपसर्गेभ्य एतेभ्य यत्स्यात्। गद्यम्। मद्यम्। चर्यम्। यम्यम्॥

* चरेराङि चागुरौ। आचर्यो देशः॥

७१७ अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु॥ १०१॥ एते निपात्यन्ते गर्ह्यादिषु। अवद्य पापम्। अनुद्यमन्यत्। पण्य कम्बलः। पाण्यमन्यत्। शतेन वर्याकन्या। वृत्यान्या।

७१८ वह्यं करणम्॥ १०२॥ वहेः करणे यत् निपात्यते। वहत्यनेनेति वह्यं शकटम्। वाह्यमन्यत्॥

७१९ अर्यः स्वामिवैश्ययोः॥ १०३॥ ऋधातोर्यत् निपात्यते एतयोरर्थयोः॥अर्य स्वामी। अर्यो वैश्य।

७२० उपसर्या काल्या प्रजने॥१०४॥ उपसर्येति निपात्यते काल्या चेत्प्रजनने भवति। प्राप्तकाला काल्या। प्रजनः गर्भग्रहणम्। गर्भग्रहणे प्राप्तकाला चेत्। उपसर्या गौः॥

७२१ अजर्यं संगतम्। १०५ अजर्यमिति निपात्यते संगत चेत्। न जीर्यती अजर्यमार्यसंगतम्।

७२२ वदः सुपि क्यप् च॥ १०६॥ अनुपसर्गे सुबन्ते उपपदे वदेः क्यप् स्यात्। चाद्यत्। ब्रह्मोद्य ब्रह्मवद्यम्॥

७२३ भुवो भावे॥१०७॥ अनुपसर्गे सुबन्तेऽभवतेः क्यप् स्याद्भावे। ब्रह्मभूयं गतः।

७२४ हनस्त च॥ १०८॥ सुबन्तेऽनुपसर्ग उपपदे हन्तेर्भावे क्यप् स्यात्तकारश्चान्तादेशः। ब्रह्महत्या॥

*स्त्रियां छन्दसि। 'अस्यै त्वा भ्रूणहत्यायै चतुर्थं प्रतिगृह्णाते। ता भ्रूणहत्या निगृह्यानुचरणम्। स्त्रियां किम्? 'आघ्नते दस्युहत्याय॥

७२५ एतिस्तुशास्वृदृजुषः क्यप्।१०९। एभ्यः क्यप्स्यात्। इत्यः, स्तुत्यः, शिष्यः, वृत्यः, आदृत्यः, जुष्यः॥

*शंसिदुहिगुहिभ्यो वा। शस्यम्, शंस्यम्, दुह्यम्, दोह्यम्, गुह्यम्, गोह्यम्।

*आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम् आज्यम् घृतम्॥

७२६ ऋदुपधाच्चाक्लृपिचृतेः॥११०॥ ऋकारोपधात्क्यप्स्यात् क्लृपिचृती वर्जयित्वा। वृत्यम् वृध्यम्॥

७२७ ई च खनः॥१११॥ खनेः क्यप्स्यात् ईकारश्चादेशः। खेयम्।

७२८ भृञोऽसंज्ञायाम्॥ ११२॥ भृञोऽसंज्ञायां क्यप्स्यात्॥ भृत्याः कर्मकराः।

*समश्च बहुलम् संभृत्याः। संभार्याः॥

७२९ मृजेर्विभाषा॥ ११३॥ मृजेर्वा क्यप्स्यात्। परिमृज्यः। परिमार्ग्यः॥

निपातितौ। ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः। ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥

७४० ऋहलोर्ण्यत् ॥ १२४ ॥ ऋवर्णान्ताद्धलन्ताच्च ण्यत् स्यात्। कार्यम्। हार्यम्। वाक्यम्। पाक्यम् ॥

(*पाणौ सृजेर्ण्यद्विधिः। पाणिसर्ग्या रज्जुः ॥ *समवपूर्वाच्च ॥ समवसर्ग्या रज्जुः ॥)

*लपिदभिभ्यां च ॥ अपलाप्यम्। अपदाभ्यम् ॥

७४१ ओरावश्यके ॥ १२५ ॥ उवर्णान्ताद्धातोर्ण्यत्स्यादावश्यके द्योत्ये ॥ लाव्यम्। पाव्यम् ॥

७४२ आसुयुवपिरपि[लपि]त्रपिचमश्च ॥ १२६ ॥ एभ्यो ण्यत्स्यात्। आसाव्यम्। याव्यम्। वाप्यम्। राप्यम्। [लाप्यम्] त्राप्यम्। आचाम्यम् ॥

७४३ आनाय्योऽनित्ये ॥ १२७ ॥ आनाय्य इति निपात्यतेऽनित्ये ॥ आनाय्यो दक्षिणाग्निः। अनित्यः सततमप्रज्वलनात् ॥

७४४ प्रणाय्योऽसंमतौ ॥ १२८ ॥ प्रणाय्य इति निपात्यतेऽसंमतौ। प्रणाय्यश्चोरः ॥

७४५ पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ १२९ ॥ पाय्यादयो निपात्यन्ते मानादिषु। पाय्यं मानम्। सांनाय्यं हविः। निकाय्यो निवासः। धाय्या सामिधेनी ॥ मेयम्, सन्नेयम्। निचेयम्, धेयम्, चान्यत्र ॥

७४६ क्रतौ कुण्डपाय्यसंचाय्यौ ॥ १३० ॥ एतौ निपात्येते क्रतावभिधेये। कुण्डेन[1] पीयतेऽस्मिन्सोमः इति कुण्डपाय्यः क्रतुः। सञ्चीयतेऽस्मिन्सोमः इति सञ्चाय्यः क्रतुः ॥

७४७ अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ १३१ ॥ एते निपात्यन्ते, अग्नावभिधेये ॥ परिचाय्यः। उपचाय्यः। समूह्यं चिन्वीत पशुकामः। अन्यत्र परिचेयम्। उपचेयम्। संवाह्यम् ॥

७४८ चित्याग्निचित्ये च ॥ १३२ ॥ एतौ निपात्येते। चीयतेऽसौ चित्योऽग्निः। अग्निचयनम् अग्निचित्या ॥

इति कृत्यप्रक्रिया ॥

७४९ ण्वुल्तृचौ ॥ १३३ ॥ धातोरेतौ स्तः ॥ कारकः। कर्ता ॥

७५ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ १३४ ॥ त्रिभ्यो गणेभ्य एते प्रत्ययाः क्रमात् स्युः ॥ नन्द्यादिभ्यो ल्युः। नन्दनः ॥ ग्रहादिभ्यो णिनिः। ग्राही। पचादेरच्। पचः ॥

*अजपि सर्वधातुभ्यः ॥ भवः, सवः ॥

1 भाष्ये त्विमे वार्तिके पठिते ॥ काशिकायां तु ७२६ सूत्रे ॥

७५१ इगुपधज्ञाप्रीकिरः कः ॥ १३५ ॥ एभ्यः कः स्यात्। विक्षिपः। बुधः। कृशः। ज्ञः। प्रीणातीति प्रियः॥

७५२ आतश्चोपसर्गे ॥ १३६ ॥ उपसर्गे उपपदे आदन्तेभ्यः कः स्यात्। प्रस्थः। सुग्लः॥

७५३ पाघ्राध्माधेट्दृशः शः ॥ १३७ ॥ एभ्यः शः स्यात्। विपिबः। उज्जिघ्रः। विधमः। विधयः। पश्यः॥

* जिघ्रतेः संज्ञायां प्रतिषेधः। व्याघ्रः॥

७५४ अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥ १३८ ॥ अनुपसर्गेभ्य एभ्यः शः स्यात्। लिम्पतीति लिम्पः। विन्दः। धारयः। पारयः। वेदयः। उदेजयः। चेतयः। सातिः सौत्रः। सातयः। साहयः॥

* नौ लिम्पेरिति वक्तव्यम्॥ निलिम्पाः देवाः॥

* गवादिषु विन्देः संज्ञायाम्। गोविन्दः। अरविन्दः॥

७५५ ददातिदधात्योर्विभाषा ॥ १३९ ॥ आभ्यां वा शः स्यात्। ददः। दायः। दधः। धायः॥

७५ ज्वलितिकसन्तेभ्यो णः ॥ १४० ॥ ज्वलादिभ्यः कसपर्यन्तेभ्यो वा णः स्यात्। ज्वालः ज्वलः॥

* तनोतेर्णे उपसंख्यानम्। अवतनोतीति अवतानः॥

७५७ श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च ॥ १४१ ॥ एभ्यो णः स्यात्। अवश्यायः। प्रतिश्यायः। दायः धायः। व्याधः। आस्रावः। संस्रावः। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः॥

७५८ दुन्योरनुपसर्गे ॥ १४२ ॥ अनुपसर्गाभ्यामाभ्यां णः स्यात्। दुनोतीति दावः। नयतीति नायः॥

७५९ विभाषा ग्रहः ॥ १४३ ॥ ग्रहेर्वा णः स्यात्। ग्राहः ग्रहः॥

* भवतेश्चेति वक्तव्यम्। भवतीति भावः॥

७६० गेहे कः ॥ १४४ ॥ गेहे कर्तरि ग्रहेः कः स्यात्। गृहं वेश्म॥

७६१ शिल्पिनि ष्वुन् ॥ १४५ ॥ धातोः ष्वुन्स्याच्छिल्पिनि कर्तरि॥ परिगणनं कर्तव्यम्॥

* नृतिखनिरञ्जिभ्य एव। नर्तकः। खनकः। रजकः॥

७६२ गस्थकन् ॥ १४६ ॥ गायतेस्थकन्स्याच्छिल्पिनि कर्तरि। गाथकः॥

७६३ ण्युट् च ॥ १४७ ॥ गायतेर्ण्युट् स्यात्। गायनः॥

१ वे एन्मे इति लिम्पः = अलिम्प एव आलिम्पः ॥

७६४ दृश्च व्रीहिकालयोः ॥ १४८ ॥
जहातेर्जहीतेश्च युच् स्यात् व्रीहौ काले च कर्तरि । हायना नाम व्रीहयः जहात्युदकमिति कृत्वा हायनः संवत्सरः जहाति भावानिति वा ॥

७६५ प्रुसृल्वः समभिहारे वुन् १४९ ॥
एभ्यः समभिहारे वुन् स्यात् । प्रवकः । सरकः । लवकः ॥

७६६ आशिषि च ॥ १५० ॥ आशिषि वुन् स्यात् । आशीः प्रार्थनाविशेषः । जीवतात् जीवकः नन्दकः ॥

इति तृतीयाध्यायस्य प्रथमः पादः ॥

—०—

# अथ तृतीयाध्यायस्य द्वितीयःपादः

७६७ कर्मण्यण् ॥ १ ॥ कर्मण्युपपदे धातोरण् स्यात् । कुम्भकारः ॥ ग्रामं गच्छति आदित्यं पश्यति हिमवन्तं शृणोतीत्यादावनभिधानान्न ॥

*शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । मांसशीला। मांसकामा, मांसभक्षा, कल्याणाचारा ॥

* ईक्षिक्षमिभ्यां चेति वक्तव्यम् । सुखप्रतीक्षा । बहुक्षमा ॥

७६८ ह्वावामश्च ॥ २ ॥ एभ्योऽण् स्यात् । कायवायः ॥ स्वर्गह्वायः तन्तुवायः धान्यमायः ॥

७६९ आतोऽनुपसर्गे कः ॥ ३ ॥ अनुपसर्गेभ्य आदन्तेभ्यः कर्मण्युपपदे कः स्यात् । गोदः कम्बलदः ॥

७७० सुपि स्थः ॥ ४ ॥ अत्र योगविभागः । 'सुपि' सुबन्ते आकारान्तेभ्यः कः स्यात् । द्वाभ्यां पिबतीति द्विपः पादपः कच्छपः ॥

ततः 'स्थः' सुपि तिष्ठतेः कः स्यात् । समस्थः ॥ [illegible] आखूत्थः आखूत्थानमाखूत्थः । [illegible] उत्तरे कर्मणि सुपि चेति द्वयमनुवर्तते ॥

७७१ तुन्दशोकयोः परिमृजापनुदोः ॥५॥
तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदोर्धात्वोः कः स्यात् ॥

* आलस्यसुखाहरणयोरिति वक्तव्यम् । तुन्दं परिमार्ष्टि तुन्दपरिमृजः = अलसः । शोकमपनुदति शोकापनुदः पुत्रः ॥

* कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् । मूलानि विभुजतीति मूलविभुजो रथः । महीध्रः, कुध्रः ॥

७७२ प्रे दाज्ञः ॥ ॥ प्रोपसृष्टाद्दातेर्जानातेश्च कः स्यात् । सर्वप्रदः । पथिप्रज्ञः ॥

७७३ समि ख्यः ॥ ७ ॥ संपूर्वात्ख्यातेः कः स्यात् । गोसंख्यः ॥

७७४ गापोष्टक् ॥ ८ ॥ कर्मण्युपपदे

७८६ कृञो हेतुताच्छील्यानुलोम्येषु ॥ २० ॥ हेत्वादिषु द्योत्येषु कृञष्टः स्यात् । यशस्करी विद्या । श्राद्धकरः । वचनकरः ।

७८७ दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ॥ २१ ॥ दिवादिषूपपदेषु करोतेष्टः स्यात् । दिवाकरः, विभाकरः, निशाकरः, प्रभाकरः, भास्करः, कारकरः, अन्तकरः, अनन्तकरः, आदिकरः, बहुकरः, नान्दीकरः, किंकरः, लिपिकरः, लिबिकरः, बलिकरः, भक्तिकरः, कर्तृकरः, चित्रकरः, क्षेत्रकरः, एककरः, द्विकरः, जङ्घाकरः, बाहुकरः, अहस्करः, यत्करः, तत्करः, धनुष्करः, अरुष्करः ॥

* किंयत्तद्बहुषु कृञोऽज्विधानम् । किंकरा, यत्करा, तत्करा, बहुकरा ॥

७८८ कर्मणि भृतौ ॥ २२ ॥ कर्मशब्दे उपपदे करोतेष्टः स्यात् भृतौ गम्यमानायाम् ॥ कर्मकरो भृतकः ॥

७८९ न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ २३ ॥ एषु करोतेष्टो न स्यात् । शब्दकारः, श्लोककारः, कलहकारः, गाथाकारः, वैरकारः, चाटुकारः, सूत्रकारः, मन्त्रकारः, पदकारः ॥

७९० स्तम्बशकृतोरिन् ॥ २४ ॥ अनयोः कर्मणोः करोतेरिन् ॥

*व्रीहिवत्सयोरिति वक्तव्यम् । स्तम्बकरिः व्रीहिः । शकृत्करिः वत्सः ॥

७९१ हरतेर्दृतिनाथयोः पशौ ॥ २५ ॥ दृतिनाथयोः कर्मणोर्हरतेरिन् स्यात्पशौ कर्तरि ॥ दृतिं हरति दृतिहरिः पशुः । नाथहरिः पशुः ॥

७९२ फलेग्रहिरात्मम्भरिश्च ॥ २६ ॥ एतौ निपात्येते ॥ फलानि गृह्णाति फलेग्रहिः वृक्षः । आत्मानं बिभर्ति आत्मम्भरिः ॥

*कुक्षिम्भरिश्च ॥ कुक्षिम्भरिः ॥

चान्द्रमते उदरम्भरि अपि ॥

७९३ छन्दसि वनसनरक्षिमथाम् ॥ २७ ॥ कर्मण्युपपदे एभ्य इन् स्यात् ॥

ब्र॒ह्म॒वनिं॑ त्वा क्षत्र॒वनि॑म् (शुक्ल य० स० १।१७)

गो॒षणि॑म् (ऋ० सं० ६।५३।१०) ॥

ये प॒थां प॑थि॒रक्ष॑यः (शुक्लयजु० स० १६।६०)

ह॒वि॒र्मथी॑नाम् (ऋ० स० ७।१०४।२१) ॥

७९४ एजेः खश् ॥ २८ ॥ ण्यन्तादेजेः खश् । अङ्गमेजयति अङ्गमेजयः ॥

*खश्प्रत्यये वातशुनीतिलशर्धेष्वजधेट्तुदजहातीनामुपसंख्यानम् । वातमजा मृगाः । शुनिंधयः । तिलंतुदः । शर्धंजहाः माषाः ।

७९५ नासिकास्तनयोर्ध्माधेटोः ॥ २९ ॥ नासिकास्तनयोः कर्मणोः ध्माधेटोश्च खश् स्यात् ।

*यथासंख्यमत्र नेष्यते । स्तनंधयः, नासिकंधयः । धेटष्टित्वात् स्तनंधयी कन्या ॥

एषु कर्मसु कृञः खच् स्यात् ॥ मेघकरः, भ्रातिकरः भयकरः ॥

*उपपदविधौ भयादिग्रहणं तदन्तविधिं प्रयोजयति । अभयकरः ॥

८१० क्षेमप्रियमद्रेऽण् च ॥४४॥ एषु कर्मसु कृञोऽण् स्यात् । चात् खच् ॥ क्षेमकारः । क्षेमंकरः । प्रियकारः । प्रियंकरः । मद्रकारः मद्रंकरः ॥

८११ आशिते भुवः करणभावयोः ।४५॥ आशितशब्दे उपपदे भवतेः करणे भावेऽर्थे खच् स्यात् ॥ आशितो भवत्यनेन आशितंभव ओदनः । आशितस्य भवनम् आशितंभवम् ।

८१२ संज्ञायां भृतॄवृजि धारि सहि तपि दमः ॥ ४६ ॥ एभ्यः संज्ञायां खच् ॥ विश्वंभरा, वसुंधरा, रथंतरम् साम, पतिंवरा कन्या, शत्रुंजयो हस्ती । युगंधरः पर्वतः । शत्रुंसहः । शत्रुंतपः । अरिंदमः ॥

८१३ गमश्च ॥ ४७ ॥ सुप्युपपदे संज्ञायां गमेः खच् ॥ सुतंगमः ॥

८१४ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ॥ ४८ ॥ एषु कर्मसु गमेर्डः स्यात् । अन्तगः, अत्यन्तगः, अध्वगः, दूरगः, पारगः, सर्वगः, अनन्तगः ।

*डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम् । [1]सर्वत्रगः, पन्नगः ।

*उरसो लोपश्च । उरसा गच्छति उरगः

*सुदुरोरधिकरणे । सुखेन गच्छति अस्मिन्सुगः । दुर्गः ॥

*निरो देशे । निर्गो देशः ।

*डप्रकरणेऽन्येष्वपि दृश्यते इति स्त्र्यगारगः । ग्रामगः । गुरुतल्पगः ।

८१५ आशिषि हनः ॥ ४९ ॥ आशिषि गम्यायां हन्तेः कर्मण्युपपदे ड स्यात् । तिमिं वध्यात्तिमिहः । शत्रुहः ॥

*दारावाहनोऽणन्तस्य च टः संज्ञायाम् दारु आहन्ति दार्वाघाटः ॥

*चारौ वा । चार्वाघाटः चार्वाघातः ॥

*कर्मणि समि च । वर्णान्संहन्ति वर्णसंघाट(त)ः । पदानि संहन्ति पदसंघाटः(तः) ।

८१६ अपे क्लेशतमसोः ॥ ५० ॥ अपपूर्वाद्धन्तेः क्लेशतमसोः कर्मणोर्डः स्यात् । क्लेशापहः पुत्रः, तमोपहः सूर्यः ।

८१७ कुमारशीर्षयोर्णिनिः । ५१ ॥ अनयोर्हन्तेर्णिनिः स्यात् । कुमारघाती शीर्षघाती । निपातनाच्छिरसः शीर्षभावः ॥

८१८ लक्षणे जायापत्योष्टक् ॥ ५२ ॥ जायापत्योः कर्मणोर्हन्तेष्टक् स्यात् लक्षणवति कर्तरि । जायाघ्नो ब्राह्मणः । पतिघ्नी वृषली ।

८१९ अमनुष्यकर्तृके च ॥ ५३ ॥

---

[1] काशिकायामेवं पाठः भाष्ये तु 'सर्वत्र' इत्युपलभ्यते ॥

सुबन्ते उपपदेऽपि सदादिभ्य क्विप्स्यात् । सत्, शुचिषत्, अण्डसुः, प्रसूः, मित्रद्विट्, मित्रध्रुक् । गोधुक् । अश्वयुक् प्रयुक्, वेदवित् प्रवित् ब्रह्मवित्, काष्ठभित्, रज्जुछित्, शत्रुजित्, नीः, सेनानी, प्रणी, राट्, विराट् ॥

८२८ भजो ण्विः ॥ ६२ ॥ भजेर्ण्विः स्यात् । अर्द्धं भजते अर्द्धभाक् प्रभाक् ॥

८२९ छन्दसि सहः ॥ ६३ ॥ छन्दसि सहेर्ण्विः स्यात् । तुराषाट् (ऋ० स० ३।४८।४) ॥

८३० वहश्च ॥ ६४ । छन्दसि वहेर्ण्विः स्यात् । दित्यवाट् (शु० य० स० १४।१०) ॥

८३१ कव्यपुरीष पुरीष्येषु ञ्युट् ॥६५॥ एषु वहेर्ञ्युट् स्यात् । 'कव्यवाहन' (शु०य० स० १।६५)' 'पुरीषवाहन' (शु०य० ११।४४)' पुरीष्यवाहन' ॥

८३२ हव्येऽनन्तःपादम् ॥ ६६ ॥ हव्यशब्दे छन्दसि वहेर्ञ्युट् स्यादनन्तःपादं चेद्वहिर्वर्तते । वहिरसि हव्यवाहनः (य०५।३१) ॥

८३३ जनसनखनक्रमगमो विट् ॥ ६७ ॥ जनादिभ्यो विट् स्यात् । अब्जा, गोजाः (य०१०।२४) गोषा इन्द्रो नृषा असि (ऋ० ९२।१०) 'बिसखाः' दधिक्रा' (ऋ०४।३८।१) अग्रेगाः (शु०य०२७।३१) ॥

८३४ अदोऽनन्ने ॥ ६८ ॥ अनन्ने सुप्युपपदेऽदेर्विट् स्यात् । आममत्ति आमात् (दम्) शु०य० १।१७ ॥

८३५ क्रव्ये च ॥ ६९ ॥ क्रव्येऽदेर्विट् स्यात् । क्रव्यमत्ति क्रव्यात् (दम्) शु० य० १। १७) ॥

८३६ दुहः कप्घश्च ॥ ७० ॥ सुप्युपपदे दुहेः कप् घकारश्चान्तादेश ॥ कामदुघा (शु०य० १२।३) धेनु ॥

८३७ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ ७१ ॥ एभ्यो ण्विन् स्यान्मन्त्रे । धातुपदसमुदाया निपात्यन्ते । अत्राश्च णित्कार्यसिद्ध्यर्थम् । प्रत्ययस्तु विधी यत एव ॥ श्वेता एनं वहन्ति श्वेतवा इन्द्रः । उक्थानि शंसति उक्थशा (सः) ऋ०सं०४।२।१६) यजमानः । पुरो दाशन्त एनं पुरोडा० (शा) ऋ०सं०३।२८।२) ॥

*श्वेतवहादीनां डस्पदस्येति वक्तव्यम् । श्वेतवोभ्याम् । अन्यत्र श्वेतवाहौ ॥

८३८ अवे यजः ॥ ७२ ॥ अवे उपपदे यजेर्ण्विन् स्यात् । 'या तेषामवया दुरिष्टिः' (अथ०२।३५।१ ॥

८३९ विजुपे छन्दसि ॥ ७३ ॥ उप उपपदे यजेश्छन्दसि विच् ॥ 'उपयड्भिः ऊर्ध्वं वहन्ति' ।

८४० आतो मनिन् क्वनिब्वनिपश्च ॥७४॥ सुप्युपपदे छन्दसि आदन्तेभ्यो मनिन् क्वनिप् वनिप् विच् एते प्रत्ययाः स्युः । सुदामा (मन्) (ऋ० सं० ६।२०।७) सुधीवा 'भूरिदावा' (ऋ० सं० १।८०।४) 'कीलालपाः' (वि) (ऋ०सं० १०।९१।१४) ॥

८४१ अन्येभ्योऽपि दृश्यन्ते ॥ ७५ ॥ अन्येभ्योऽपि धातुभ्यो मनिन् क्वनिप् वनिप् विच् इत्येते प्रत्यया दृश्यन्ते । सुशर्मा (मन्) (ऋ० सं० १०।७८।२) प्रातरित्वा (ऋ० सं० १।१२५।१) 'विजावा' (ऋ०सं० १।१।२३) । 'रेडसि पर्णं नये' ॥

८४२ क्विप् च ॥ ७६ ॥ धातुभ्यः क्विप् स्यात् । उखायाः स्रंसते उखास्रत् । पर्णध्वत् । वाहाद् भ्रश्यति वाहभ्रट् ॥

८४३ स्थः क च ॥ ७७ ॥ सुप्युपपदे स्थः कः स्यात् क्विप् च । शंस्थः शंस्थाः ॥

८४४ सुप्यजातौ णिनिस्ताच्छील्ये ॥ ७८ ॥ अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्णभोजी शीतभोजी ॥

*उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानम् । उदासारिण्यः प्रत्यासारिण्यः ॥

* साधुकारिणि च । साधुकारी साधुदायी ॥

*ब्रह्मणि वदः । ब्रह्मवादिनो वदन्ति ।

८४५ कर्तर्युपमाने ॥ ७९ ॥ कर्तृवाचिन्युपमानोपपदे धातोर्णिनिः स्यात् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी ध्वाङ्क्षरावी ॥

८४६ व्रते ॥ ८० ॥ व्रते गम्यमाने सुबन्ते धातोर्णिनिः स्यात् । स्थण्डिलशायी । श्राद्धे न भुङ्क्ते अश्राद्धभोजी ॥

८४७ बहुलमाभीक्ष्ण्ये ॥ ८१ ॥ आभीक्ष्ण्ये गम्यमाने धातोर्बहुलं णिनिः स्यात् । कषायपायिणो गान्धाराः । क्षीरपायिण उशीनराः ॥

८४८ मनः ॥ ८२ ॥ सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ।

८४९ आत्ममाने खश्च ॥ ८३ ॥ सुप्युपपदे स्वकर्मके मनने वर्तमानान्मन्यतेः खश् स्यात् । चाण्णिनिः । आत्मानं दर्शनीयं मन्यते दर्शनीयंमन्यः दर्शनीयमानी । पण्डितंमन्यः पण्डितमानी ॥

८५० भूते ॥ ८४ ॥ भूते इत्यधिकारो 'वर्तमाने लट्' इति यावत् । वक्ष्यमाणाः प्रत्ययाः भूते वेदितव्याः । अग्निष्टोमेनेष्टवान् अग्निष्टोमयाजी ॥

८५१ करणे यजः ॥ ८५ ॥ करणे उपपदे भूतार्थवृत्तेर्यजतेर्णिनिः स्यात् । सोमेनेष्टवान् सोमयाजी ।

८५२ कर्मणि हनः ॥ ८६ ॥ कर्मण्युपपदे हन्तेर्णिनिः स्यात् भूते काले ॥ पितृव्यघाती मातुलघाती ॥

१ ऋग्वेदे नव दश वारेषु प्रयुक्तः ॥

*कुत्सितग्रहणं कर्तव्यम् । इह मा भूत्—चोरं हतवान् ॥

८५३ ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ८७ ॥ ब्रह्मादिषु कर्मसूपपदेषु हन्तेः क्विप्भूते । 'ब्रह्महा' 'भ्रूणहा' 'वृत्रहा' ॥

८५४ बहुलं छन्दसि ॥ ८८ ॥ छन्दसि उपपदान्तरेऽपि हन्तेर्बहुलं क्विप् स्यात् ॥ मातृहा सप्तमं नरकं प्रविशेत् 'पितृहा' ॥ न च भवति—मातृघातः पितृघातः ॥

८५५ सुकर्मपापमन्त्रपुण्येषु कृञः ॥ ८९ ॥ एषु करोतेः क्विप्स्यात् ॥ सुकृत्, कर्मकृत्, पापकृत्, मन्त्रकृत्, पुण्यकृत् ॥

८५६ सोमे सुञः ॥ ९० ॥ सोमे कर्मण्युपपदे सुनोतेः क्विप् स्यात् ॥ सोमसुत् ॥

८५७ अग्नौ चेः ॥ ९१ ॥ अग्नौ कर्मण्युपपदे चिनोतेः क्विप्स्यात् । अग्निं चितवान् अग्निचित् ॥

८५८ कर्मण्यग्न्याख्यायाम् ॥ ९२ ॥ कर्मण्युपपदे चिनोतेः क्विप्स्यादग्न्याख्यायाम् श्येन इव चीयते स्म श्येनचित् ॥

८५९ कर्मणीनिविक्रियः ॥ ९३ ॥ कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः स्यात् । सोमविक्रयी घृतविक्रयी । पुनः कर्मग्रहणात्कर्तुं कुत्सानिमित्ते कर्मणि यथा स्यात् । इह माभूत्—धान्यविक्रयः ।

८६० दृशेः क्वनिप् ॥ ९४ ॥ कर्मण्युपपदे दृशेः क्वनिप् ॥ परलोकं दृष्टवान् परलोकदृश्वा ॥

८६१ राजनि युधि कृञः ॥ ९५ ॥ राजनि कर्मण्युपपदे युध्यतेः करोतेश्च क्वनिप्स्यात् ॥ अन्तर्भावितण्यर्थः सकर्मको युधिः । राजानं योधितवान् राजयुध्वा, राजकृत्वा ॥

८६२ सहे च ॥ ९६ ॥ सहशब्दे चोपपदे युधिकृञ्भ्यां क्वनिप्स्यात् ॥ सहयुध्वा सहकृत्वा ॥

८६३ सप्तम्यां जनेर्डः ॥ ९७ ॥ सप्तम्यन्ते उपपदे जनेर्डः स्यात् । सरसि जातं सरसिजम् ॥

८६४ पञ्चम्यामजातौ ॥ ९८ ॥ जातिवर्जिते पञ्चम्यन्ते उपपदे जनेर्डः स्यात् । बुद्धिजः ॥

८६५ उपसर्गे च संज्ञायाम् ॥ ९९ ॥ उपसर्गे चोपपदे जनेर्डः स्यात्संज्ञायाम् । 'प्रजेमा मानवीः प्रजाः' ।

८६६ अनौ कर्मणि ॥ १०० ॥ अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात् । पुमांसमनुजातः पुमनुजः, स्त्र्यनुजः ॥

८६७ अन्येष्वपि दृश्यते ॥ १०१ ॥ अन्येष्वप्युपपदेषु जनेर्डः स्यात् । न जायते इत्यजः । द्विर्जाताः द्विजाः ॥

अपि शब्दात्कारकान्तरेष्वपि—परितः खाता परिखा ॥

८६८ निष्ठा ॥ १०२ ॥ निष्ठासंज्ञकः भूते स्यात् । कृतम् । कृतवान् । भुक्तम् । भुक्तवान् । जातम् ॥

८८४ लट् स्मे ॥ ११८ ॥ स्मशब्द उपपदे भूतानद्यतने परोक्षे लट् ॥ यजति स्म युधिष्ठिरः ॥

८८५ अपरोक्षे च ॥ ११९ ॥ अपरोक्षे भूतानद्यतनेऽर्थे स्म उपपदे धातोर्लट् स्यात् । एवम् पिता ब्रवीति ॥

८८६ ननौ पृष्टप्रतिवचने ॥ १२० ॥ ननुशब्दे उपपदे प्रश्नपूर्वके प्रतिवचने भूतेऽर्थे लट् स्यात् लुङोऽपवादः । अकार्षीः कटं देवदत्त, 'ननु करोमि भोः' ॥

८८७ नन्वोर्विभाषा ॥ १२१ ॥ न शब्दे नुशब्दे चोपपदे पृष्टप्रतिवचने विभाषा लट् भूते । अकार्षीः कटं देवदत्त, 'न करोमि भो,' 'नाकार्षम्' 'अहं नु' 'करोमि' 'अहन्न्व कार्षम्' ॥

८८८ पुरि लुङ् चास्मे ॥ १२२ ॥ स्मवर्जिते पुराशब्दे उपपदे भूतानद्यतनेऽर्थे वा लुङ् स्याल्लट् च । ताभ्यां मुक्ते पक्षे यथाविषयमन्येऽपि प्रत्यया भवन्ति । वसन्तीह पुरा छात्राः । अवात्सुरिह पुरा छात्राः । ऊषुरिह पुरा छात्राः ॥

इति भूताधिकारप्रत्ययाः ॥

८८९ वर्तमाने लट् ॥ १२३ ॥ आरब्धोऽपरिसमाप्तश्च वर्तमानः । तस्मिन्नर्थे वर्तमानाद्धातोर्लट् स्यात् । पचति पठति ॥

८९० लटः शतृशानचावप्रथमासमानाधिकरणे ॥ १२४ ॥ लटः शतृशानचावादेशौ स्तोऽप्रथमान्तेन चेत्सामानाधिकरण्यं भवति ॥ पचन्तं देवदत्तं पश्य । पचमानं देवदत्तं पश्य । लडिति वर्तमाने पुनर्लड्ग्रहणात्क्वचित्प्रथमासामानाधिकरण्येऽपि स्यात् 'सन् ब्राह्मणः' । अस्ति ब्राह्मणः ॥

* माङ्याक्रोशे ॥ मा पचन् ।

८९१ संबोधने च ॥ १२५ ॥ संबोधने च विषये लटः शतृशानचौ स्तः । हे पचन् हे पचमान ॥

८९२ लक्षणहेत्वोः क्रियायाः ॥ १२६ ॥ क्रियायाः परिचायके हेतौ चार्थे वर्तमानाद्धातोः परस्य लटः शतृशानचौ स्तः । शयाना भुञ्जते यवनाः । अर्जयन्वसति ॥

८९३ तौ सत् ॥ १२७ ॥ शतृशानचौ सत्संज्ञौ स्तः । ब्राह्मणस्य कुर्वन् ब्राह्मणस्य कुर्वाणः । ब्राह्मणस्य करिष्यन् ब्राह्मणस्य करिष्यमाणः ॥

८९४ पूङ्यजोः शानन् ॥ १२८ ॥ पूङो यजेश्च शानन् स्यात् । पवमानः यजमानः ॥

८९५ ताच्छील्यवयोवचनशक्तिषु चानश् ॥ १२९ ॥ ताच्छील्यादिषु धातोश्चानश् । कतीह भूषयमाणाः । कतीह शिखण्डं वहमानाः । कतीह निघ्नानाः ॥

८९६ इङ्धार्योः शत्रकृच्छ्रिणि ॥ १३० ॥ इङो धारेश्च शतृ प्रत्ययः स्यादकृच्छ्रिणि कर्तरि ॥ अधीयन्पारायणम् । धारयन्नुपनिषदम् ॥

विविचत्यजरजभजातिचरापचराप्रुषाभ्याहनश्च ॥ १४२ ॥ पञ्भ्यो घिनुण् स्यात्तच्छीलादिषु ॥ संपर्की । अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी परिदेवी । सञ्ज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी अभ्याघाती ॥

९०९ वौ कषलसकत्थस्रम्भः ॥१४३॥ विशब्दे उपपदे पञ्भ्यो घिनुण् ॥ विकाषी । विलासी । विकत्थी । विस्रम्भी ॥

९१० अपे च लषः ॥ १४४ ॥ अपे वौ च लषेर्घिनुण् । अपलाषी विलाषी ॥

९११ प्रे लपसृद्रुमथवदवसः ॥ १४५ ॥ प्रोपपदे लपादिभ्यो घिनुण् स्यात् ॥ प्रलापी प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । प्रवासी ॥

९१२ निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ॥ १४६ ॥ पञ्भ्यो वुञ् स्यात् । निन्दकः, हिंसकः । क्लेशकः । खादकः । विनाशकः, परिक्षेपकः । परिराटकः । परिवादकः । व्याभाषकः । असूयकः ॥

९१३ देविक्रुशोश्चोपसर्गे ॥ १४७ ॥ उपसर्गउपपदे देवयतेः क्रुशेश्च वुञ् स्यात् ॥ आदेवकः । आक्रोशकः ॥

९१४ चलनशब्दार्थादकर्मकाद्युच् ॥१४८॥ अकर्मकेभ्यः चलनशब्दार्थेभ्यश्चलनार्थेभ्यः शब्दार्थेभ्यश्च युच् स्यात् ॥ चलनः । चोपनः । शब्दनः । रवणः ॥

९१५ अनुदात्तेतश्च हलादेः ॥१४९॥ अनुदात्तेतो हलादेरकर्मकाद्युच्स्यात् ॥ वर्तनः । वर्धनः ॥

९१६ जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ॥ १५० ॥ युच् स्यात् ॥ जु इति सौत्रो धातुः ॥ जवनः । चङ्क्रमणः । दन्द्रमणः । सरणः । गर्धनः । ज्वलनः । शोचनः । लषणः । पतनः । पदनः ॥

९१७ क्रुधमण्डार्थेभ्यश्च ॥ १५१ ॥ एतदर्थेभ्यो युच्स्यात् । क्रोधनः । रोषणः । मण्डनः । भूषणः ॥

९१८ न यः ॥ १५२ ॥ यकारान्ताद्युच् न स्यात् । क्नूयिता । क्ष्मायिता ॥

९१९ सूददीपदीक्षश्च ॥१५३॥ एभ्यो युच् न स्यात् । सूदिता । दीपिता । दीक्षिता ॥

९२० लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ॥ १५४ ॥ एभ्यो उकञ् । अपलाषुकम् प्रपातुकम्, उपपादुकम्, उपस्थायुकाः, प्रभावुकम् । प्रवर्षुकाः, आघातुकम् । कामुकाः, आगामुकम् । किंशारुकम् ॥

९२१ जल्पभिक्षकुट्टलुण्टवृङः षाकन् ॥ १५५ ॥ एभ्यस्तच्छीलादिषु कर्तृषु

नृ[illegible]र्गाः। मित्रवरुणौ नतुर्भिः दूरमध्वा जगुरि.। जगुर्यूवा। जगिवृंश्रम्। जघ्निर्बीजम्॥

*किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शनात्। सेदि.। नेमिः॥

*भाष धाधाञ्कृञ्सृजनि गमिनमिभ्यः किकिनौ वक्तव्यौ। दाधः। चक्रिः। सस्रिः, जज्ञिः, जग्मिः, नेमिः॥

* सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ। सासहिः वावहिः चाचलिः पापतिः॥

९३८ स्वपितृषोर्नजिङ् ॥ १७२ ॥ आभ्यां नजिङ् स्यात्। स्वप्नक्, तृष्णक्।

*धृषेश्चेति वक्तव्यम्। धृष्णक्॥

९३९ शृवन्द्योरारुः ॥ १७३ ॥ आभ्यामारुः स्यात्। शरारुः। वन्दारुः॥

९४० भियः क्रुक्लुकनौ ॥ १७४ ॥ भिय एतौ स्तः। भीरुः। भीलुकः॥

*क्रुकन्नपि वक्तव्यः। भीरुकः॥

९४१ स्थेशभासपिसकसो वरच् ॥१७५॥ एभ्यो वरच्स्यात्। स्थावरः। ईश्वरः। पेस्वरः। विकस्वरः॥

९४२ यश्च यङः ॥ १७६ ॥ यङन्ताद्यातेर्वरच्स्यात्। यायावरः॥

९४३ भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् ॥ १७७ ॥ एभ्यस्तच्छीलादिषु कर्तृषु क्विप् स्यात्। विभ्राट्। भाः। भासौ। धूः। विद्युत्। ऊर्क्। पूः।

*जवतेर्दीर्घश्च निपात्यते जूः। ग्रावस्तुत्॥

९४४ अन्येभ्योऽपि दृश्यते ॥ १७८ ॥ अन्येभ्योऽपि धातुभ्यस्तच्छीलादिषु कर्तृषु क्विप् दृश्यते। दृशिग्रहणात् क्वचिद्दीर्घः क्वचिद्द्विर्वचनम्। क्वचित्सम्प्रसारणम् क्वचिदसम्प्रसारणम्। वाक् शब्दप्राट्। चिच्छुत्, जगत्, स्रुहः॥

ध्यायते इन्धस्य ह्रस्वश्च द्वेच। दद्रुत्॥

* ध्यायतेः संप्रसारणं च॥ धीः

९४५ भुवः संज्ञान्तरयोः ॥ १७९ ॥ भुवः संज्ञायामन्तरे च क्विप् स्यात्। विभूर्नाम कश्चित्। धनिकाधमर्णयोरन्तरे प्रतिभूः॥

९४६ विप्रसंभ्यो द्वसंज्ञायाम् ॥१८०॥ विप्रसपूर्वाद्भवतेर्डुः स्यादसंज्ञायाम्। विभुः प्रभुः सम्भुः॥

*डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम्। मितद्रुः। शम्भुः॥

९४७ धः कर्मणि ष्ट्रन् ॥१८१॥ धयतेर्दधातेश्च कर्मणि ष्ट्रन्स्यात्। धयन्ति तां धात्री दधाति वा॥

९४८ दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ॥१८२॥ दाबादेः ष्ट्रन्स्यात्करणेऽर्थे। दात्यनेन दात्रम्। नेत्रम्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तो-

कदा मोक्ष्यते । कर्हि भुङ्क्ते कर्हि मोक्ष्यते ॥

९६० किंवृत्ते लिप्सायाम् ॥ ६ ॥ किंवृत्ते लिप्सायां भविष्यति काले लट् वा । कं भवन्तो भोजयन्ति कं भवन्तो भोजयिष्यन्ति । कतरो भिक्षां दास्यति ददाति दाता वा । कतमो भिक्षां ददाति दास्यति दाता वा ॥

९६१ लिप्स्यमानसिद्धौ च ॥७॥ लिप्स्यमानसिद्धौ गम्यायां भविष्यति वा लट् ॥ यो भक्तं ददाति स स्वर्गं गच्छति । यो भक्तं दास्यति दाता वा स स्वर्गं यास्यति याता वा ॥

९६२ लोडर्थलक्षणे च ॥८॥ लोडर्थः प्रैषादिर्लक्ष्यते येन स तत्र वर्तमानाद्भविष्यति काले लट् । उपाध्यायश्चेदागच्छति आगमिष्यति आगन्ता वा अथ त्वं छन्दोऽधीष्व ॥

९६३ लिङ् चोर्ध्वमौहूर्तिके ॥९॥ ऊर्ध्वमौहूर्तिके भविष्यति लोडर्थलक्षणे वर्तमानाद्धातोर्वा लिङ्, चाल्लट् । ऊर्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छेत् आगच्छति आगमिष्यति आगन्ता वा अथ त्वं छन्दोऽधीष्व ॥

९६४ तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ॥ १० ॥ क्रियार्थायां क्रियायामुपपदे भविष्यति तुमुन्ण्वुलौ स्तः । भोक्तुं व्रजति । भोजको व्रजति ॥

९६५ भाववचनाश्च ॥११॥ भाव इति प्रकृत्य ये घञादयो विहितास्ते भविष्यति क्रियार्थायां क्रियायामुपपदे स्युः ॥ पाकाय व्रजति । भूतये व्रजति । पुष्टये व्रजति ॥

९६६ अण् कर्मणि च ॥१२॥ कर्मण्युपपदे क्रियार्थायां क्रियायां भविष्यति धातोरण् । काण्डलावो व्रजति ॥

९६७ लृट् शेषे च ॥१३॥ भविष्यति लृट् क्रियार्थायां क्रियायां सत्यामसत्यां वा ॥ हरिष्यामीति व्रजति ॥ करिष्यति हरिष्यति ॥

९६८ लृटः सद्वा ॥१४॥ लृटः सत्संज्ञौ शतृशानचौ वा स्तः ॥ करिष्यन्तं देवदत्तं पश्य करिष्यमाणं देवदत्तं पश्य, हे करिष्यन् हे करिष्यमाण, अर्जयिष्यमाणो वसति ॥

९६९ अनद्यतने लुट् ॥१५॥ भविष्यदनद्यतनेऽर्थे वर्तमानाद्धातोर्लुट् स्यात् । श्वः कर्ता ।

परिदेवने श्वस्तनी भविष्यदर्थे वक्तव्या* । इयं नु कदा गन्ता यैवं पादौ निदधाति ॥

९७० पदरुजविशस्पृशो घञ् ॥ १६ ॥ एभ्यो घञ् । पद्यतेऽसौ पादः । रोगः । वेशः ॥

*स्पृश उपताप इति वक्तव्यम् । स्पर्शः ॥

९७१ सृ स्थिरे ॥ १७ ॥ सर्तेः स्थिरे कर्तरि घञ् ॥ चन्दनसारः ॥

* व्याधिमत्स्यबलेष्विति वक्तव्यम् । अतिसारो व्याधिः । विसारो मत्स्यः । सारो बलम् ॥

९७२ भावे ॥ १८ । भावे वाच्ये धातोर्घञ् स्यात् ॥ पाकः । त्यागः । रागः ॥

९७३ अकर्तरि च कारके संज्ञायाम् ॥१९॥ कर्तृभिन्ने कारके संज्ञायां घञ् स्यात् ॥ प्रासयन्ति तं प्रासः प्रवेशः । आहरन्ति तस्माद्रसमित्याहारः ॥

इत उत्तरं भावे अकर्तरि च कारके इति द्वयमनुवर्तते ।

९७४ परिमाणाख्यायां सर्वेभ्यः ॥२०॥ परिमाणाख्यायां गम्यमानायां सर्वेभ्यो धातुभ्यो घञ् स्यात् ॥ एकस्तण्डुलनिश्चायः । द्वौ शूर्पनिष्पावौ । द्वौ कारौ ॥

*दारजारौ कर्तरि णिलुक् च । दारयन्तीति दाराः । जारयन्तीति जारः ॥

९७५ इङश्च ॥२१॥ इङो घञ् स्यात् । अध्यायः । उपेत्यास्मादधीते उपाध्यायः ॥

*अपादाने स्त्रियामुपसंख्यानम् तदन्ताच्च ङीष् । उपाध्याया उपाध्यायी ।

*शॄ वायुवर्णनिवृतेषु शारो वायुः । शारो वर्णः । शारो निवृतम् ॥

९७६ उपसर्गे रुवः ॥ २२ ॥ उपसर्गे उपपदे रौतेर्घञ् स्यात् ॥ संरावः । उपरावः ॥

९७७ समि युद्रुदुवः ॥ २३ ॥ सम्युपपदे एभ्यो घञ् स्यात् । संयावः । संद्रावः । संदावः ॥

९७८ श्रिणीभुवोऽनुपसर्गे ॥ २४ ॥ अनुपसर्गेभ्य एभ्यो घञ् स्यात् ॥ श्रायः । नायः । भावः ॥

९७९ वौ क्षुश्रुवः ॥२५॥ व्युपपदे आभ्यां घञ् स्यात् । विक्षावः । विश्रावः ॥

९८० अवोदोर्नियः ॥ २६ ॥ अव उदुपपदयोर्नयतेर्घञ् स्यात् ॥ अवनायः । उन्नायः ॥

९८१ प्रे द्रुस्तुस्रुवः ॥ २७ ॥ प्रशब्दे उपपदे एभ्यो घञ् । प्रद्रावः । प्रस्तावः । प्रस्रावः ॥

९८२ निरभ्योः पूल्वोः ॥ २८ ॥ निरभिपूर्वयोः पूल्वोर्घञ् ॥ निष्पावः । अभिलावः ॥

९८३ उन्न्योर्ग्रः ॥ २९ ॥ उन्न्योरुपपदयोः ग्रस्मात् घञ् स्यात् ॥ उद्गारः । निगारः ॥

९८४ कॄ धान्ये ॥ ३० ॥ उन्न्योरुपपदयोः कॄ इत्यस्माद्धान्यविषयकाद् घञ् । उत्कारो धान्यस्य ॥

९८५ यज्ञे समि स्तुवः ॥३१॥ यज्ञविषये संपूर्वात् स्तौतेर्घञ् स्यात् । संस्तावश्छन्दोगानाम् ॥

९८६ प्रे स्त्रोऽयज्ञे ॥ ३२ ॥ प्रपूर्वात् स्तृणो घञ् स्यात् अयज्ञे ॥ शङ्खप्रस्तारः ॥

९८७ प्रथने वावशब्दे ॥ ३३ ॥ अशब्दविषये प्रथने विपूर्वात्स्तृणो घञ् स्यात् ॥ पटस्य विस्तारः ॥

९८८ छन्दोनाम्नि च । ३४ ॥ विपूर्वात्स्तृणो घञ् स्याच्छन्दोनाम्नि । विष्टारः पङ्क्तिश्छन्दः ॥

९८९ उदि ग्रहः॥ ३५॥ उत्पूर्वाद्ग्रहेर्घञ् स्यात्। उद्ग्राहः।

*छन्दसि निपूर्वादपीष्यते स्रुगुद्यमनः निपातयो र्हकारस्य भकारः ॥ उद्ग्राभं च निग्राभं च ब्रह्मदेवा अवीवृधन्।

९९० समि मुष्टौ ॥ ३६ ॥ सम्पूर्वाद्ग्रहेर्घञ् स्यात् मुष्टिविषये॥ मल्लस्य सङ्ग्राहः॥

९९० परिन्योर्नीणोर्द्यूताभ्रेषयोः॥ ३७ ॥ परिशब्दे निशब्दे चोपपदे नियः इणश्च घञ्स्यात् फलेऽभ्रेषे च॥ परिणायेन शारान्हन्ति। न्यायः॥

९९२ परावनुपात्यय इणः ॥ ३८ ॥ परावुपपदे इणो घञ् स्यात् अनुपात्यये ॥ तव पर्यायः ॥

९९३ व्युपयोः शेतेः पर्याये ॥ ३९ ॥ वि उप इत्येतयोरुपपदयोः शेतेर्घञ्स्यात्पर्याये गम्यमाने॥ तव विशायः। तव राजोपशायः।

९९४ हस्तादाने चेरस्तेये ॥ ४० ॥ हस्तादाने गम्यमाने चिनोतेर्घञ्स्यादस्तेये। पुष्पप्रचायः॥

९९५ निवासचितिशरीरोपसमाधानेष्वादेश्च कः॥४१॥ एष्वर्थेषु चिनोतेर्घञ्स्यादादेश्च कः॥ काशीनिकायः। आकायमग्निं चिन्वीत। अनित्यः कायः। गोमयनिकायः॥

९९६ सङ्घे चानौत्तराधर्ये ॥ ४२ ॥ अनौत्तराधर्ये सङ्घे वाच्ये चिनोतेर्घञ्स्यादादेश्च कः॥ भिक्षुकनिकायः॥

९९७ कर्मव्यतिहारे णच् स्त्रियाम्॥४३॥ कर्मव्यतिहारे गम्यमाने धातोर्णच्स्यात्स्त्रियाम्॥ व्यावक्रोशी॥

९९८ अभिविधौ भाव इनुण् ॥ ४४ ॥ अभिव्याप्तौ गम्यमानायां भावे धातोरिनुण् स्यात्॥ साङ्कूटिनं वर्तते।

९९९ आक्रोशेऽवन्योर्ग्रहः ॥ ४५ ॥ अव नि इत्येतयोरुपपदयोर्ग्रहेर्घञ्स्यादाक्रोशे॥ अवग्राहो,निग्राहो वा हन्त ते वृषल भूयात्॥

१००० प्रे लिप्सायाम् ॥ ४६ ॥ प्रशब्दे उपपदे ग्रहेर्घञ् लिप्सायाम्। पात्रप्रग्राहेण चरति भिक्षुः पिण्डार्थी॥

१००१ परौ यज्ञे ॥ ४७ ॥ परौ उपपदे ग्रहेर्घञ्स्याद्यज्ञविषये ॥ उत्तरपरिग्रहः। अधरपरिग्रहः॥

१००२ नौ वृ धान्ये ॥४८॥ नावुपपदे धान्यविषयकाद् वृधातोर्घञ्स्यात् ॥ नीवाराः नाम व्रीहयः॥

१००३ उदि श्रयति यौति पू द्रुवः॥४९॥ उत्पूर्वेभ्य एभ्यो घञ्॥ उच्छ्रायः। उद्यावः। उत्पावः। उद्द्रावः॥

१००४ विभाषाङि रुप्लुवोः ॥ ५० ॥ आङि उपपदे रौतेः प्लवतेश्च वा घञ्स्यात्॥ आरावः। आरवः। आप्लावः। आप्लवः॥

१००५ अवे ग्रहो वर्षप्रतिबन्धे ॥५१॥ वर्षप्रतिबन्धेऽवे उपपदे ग्रहेर्घञ् वा। अवग्राहो देवस्य अवग्रहो देवस्य॥

१००६ प्रे वणिजाम् ॥५२॥ प्रपूर्वाद् ग्रहेर्वा घञ् वणिजां सम्बन्धी चेत्प्रत्ययान्त-

समजः पशूनाम् । उदजः पशूनाम् प्रेरण मित्यर्थः ॥

१०२४ अक्षेषु ग्लहः । ७० । अक्षविषये ग्लहः इति निपात्यते अक्षस्य ग्लहः ॥

१०२५ प्रजने सर्तेः ॥ ७१ ॥ प्रथम गर्भग्रहणे सर्तेरप् ॥ गवामुपसर. ॥

१०२६ ह्वः संप्रसारणं च न्यभ्युपविषु ॥ ७२ ॥ एषु ह्वयतेरप्संप्रसारण च ॥ निहवः । उपहवः । विहव. ॥

१०२७ आङि युद्धे ॥ ७३ ॥ आङि ह्वयतेरप्संप्रसारण च । आहूयन्तेऽस्मि न्नाहवः ॥

१०२८ निपानमाहावः ॥७४॥ आहाव इति निपात्यते निपान चेदभिधेयम् ॥ निपिबन्त्यस्मिन्निति निपानम् ।

१०२९ भावेऽनुपसर्गस्य ॥७५॥ अनुप सर्गस्य ह्वयतेः सम्प्रसारणमप् च भावे ॥ 'हवे हवे सुहव शूरमिन्द्रम्' ॥

१०३० हनश्च वधः ॥७६॥ हन्तेर्भावेऽप् वधचादेश. ॥ वधश्चोराणाम् ॥

१०३१ मूर्तौ घनः ॥ ७७ ॥ काठिन्ये हन्तेरप् घनश्चादेश. ॥ अभ्रघनः। दधिघनः॥

१०३२ अन्तर्घनो देशे ७८ ॥ अन्त. पूर्वाद्धन्तेरप् घनश्चादेशः देशे ॥ अन्तर्घन.

१०३३ अगारैकदेशे प्रघणः प्रघाणश्च ॥ ७९ ॥ अगारैकदेशे प्रघण प्रघाण इत्येतौ निपात्येते ॥ प्रघण. प्रघाण. द्वार. कोष्ठो बाह्य उच्यते ॥

१०३४ उद्घनोऽत्याधानम् ॥ ८० ॥ उत्पूर्वस्य हन्तेरुद्धन इति निपात्यतेऽत्याधान चेद्भवति॥ यस्मिन् काष्ठेऽन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तदुद्धनः ॥

१०३५ अपघनोऽङ्गम् ॥ ८१ ॥ अपपूर्वस्य हन्तेरपघन इति निपात्यतेऽङ्गं चेद्भवति । अपघन. अङ्गम् ॥

१०३६ करणेऽयोविद्रुषु ॥ ८२ ॥ एषु हन्तेरप् घनश्चादेशः करणे ॥ अयो हन्यतेऽनेन इति अयोघन. । विघन. । द्रुघणः ॥

१०३७ स्तम्बे क च ॥ ८३ ॥ स्तम्बे उपपदे करणे हन्तेः कः स्यादप् तत्र घनश्चादेश.॥स्तम्बघनः । स्त्रिया स्तम्बघ्ना, स्तम्बहेतिः स्तम्बहननी इति इष्यते ।

१०३८ परौ घः ॥ ८४ ॥ परावुपपदे हन्तेरप् करणे घश्चादेशः ॥ परिहन्यतेऽनेनेति परिघ. (पलिघः) ॥

१०३९ उपघ्न आश्रये ॥८५॥ उपपूर्वस्य हन्तेरुपधालोपश्च निपात्यते आश्रये ॥ पर्वतोपघ्नः ॥

१०४० संघोद्घौ गणप्रशंसयोः ॥८६॥ समुदोरुपपदयोर्हन्तेरप टिलोपो घत्वं च निपात्यते गणप्रशंसयोः ॥ सङ्घः पशूनाम् । उद्घो मनुष्यः ॥

१०४१ निघो निमित्तम् ॥८७॥ निपूर्वा द्धन्तेरप् टिलोपो घत्वं च निपात्यते निमित्तं चेद्भवति ॥ निघा वृक्षाः । निघाः शालयः ॥

१०५४ कृञः श च ॥ १०० ॥ कृञः स्त्रियां शः स्याच्चात्क्यबुदात्तः ॥ क्रिया ॥ कृत्या॥ कृञ इति योगविभागात् क्तिन्नपि। कृतिः ॥

१०५५ इच्छा ॥ १०१॥ इषेः शो यग भावश्च निपात्यते । इच्छा ॥

*परिचर्या परिसर्या मृगयाटाट्यानामुपसंख्यानम् ॥ परिचर्या । परिसर्या । अटाट्या ॥

* जागर्तेरकारो वा॥ जागर्या । जागरा ॥

१०५६ अ प्रत्ययात्॥१०२। प्रत्ययान्तेभ्यः स्त्रियामकारः स्यात् ॥ चिकीर्षा । जिहीर्षा । पुत्रीया ॥ पुत्रकाम्या ॥

१०५७ गुरोश्च हलः ॥१०३॥ गुरुमतो हलन्तात्स्त्रियामः स्यात् ॥ कुण्डा । ईहा ॥

१०५८ षिद्भिदादिभ्योऽङ ॥ १०४ ॥ षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् ॥ जरा । त्रपा । भिदा । छिदा ॥

१०५९ चिन्तिपूजिकथिकुम्बिचर्चश्च ॥ १०५ ॥ एभ्यः स्त्रियामङ् चाद्युच् । चिन्ता॥ पूजा।कथा।कुम्बा।चर्चा ।।चिन्तना॥

१०६० आतश्चोपसर्गे ॥ १०६॥ उपसर्गे उपपदे आकारान्तेभ्यः स्त्रियामङ् स्यात् । प्रदा । उपदा ॥

* श्रदन्तरोरुपसर्गवद्वृत्तिः । श्रद्धा । अन्तर्द्धा ॥

१०६१ ण्यासश्रन्थो युच् ॥ १०७ ॥ ण्यन्त-आस श्रन्थेभ्यो युच् स्त्रियाम् । कारणा । हारणा । आसना । श्रन्थना ॥

* घट्टिवन्दिविदिभ्य उपसंख्यानम् ॥ घट्टना । वन्दना । वेदना ॥

* इषेरनिच्छार्थस्य युच् वक्तव्यः ॥ अध्येषणा अन्वेषणा ॥

*परेर्वा ॥ पर्येषणा । परीष्टिः ॥

१०६२ रोगाख्यायां ण्वुल् बहुलम् ॥ १०८ ॥ रोगाख्यायां बहुलं ण्वुल्स्यात् प्रच्छर्दिका । प्रवाहिका । न च भवति शिरोर्तिः ॥

*धात्वर्थनिर्देशे ण्वुल्वक्तव्यः। आसिका। शायिका ॥

*इक्श्तिपौ धातुनिर्देशे ॥ भिदिः। छिदिः पठतिः ॥

* वर्णात्कारः । अकारः । ककारः ।

* रादिफः । रेफः ॥

*मत्वर्थाच्छः अकारलोपश्च॥ मत्वर्थीयः।

*इञ् वपादिभ्यः । वापिः । वासिः ॥

* इणजादिभ्यः आजिः । आतिः । आदिः ॥

* इक् कृष्यादिभ्यः । कृषिः। किटिः ॥

१०६३ संज्ञायाम् ॥ १०९ ॥ संज्ञायां धातोर्ण्वुल् ॥ उद्दालकपुष्पभञ्जिका ॥

१ एवमेव स्तारि , स्तारि , आस्तारिः । ङीपि दीर्घान्ता अपि ॥

१०६४ विभाषाऽऽख्यानपरिप्रश्नयोरिञ् च ॥ ११० ॥ परिप्रश्ने आख्याने च धातोरिञ् स्यात् चात् ण्वुल्। विभाषाग्रहणादन्येऽपि। कां त्वं कारिम् अकार्षीः। कां कारिकामकार्षीः। कां क्रियामकार्षीः। कां कृत्यामकार्षीः। कां कृतिमकार्षीः। सर्वां कारिं कारिकां क्रियां कृत्यां कृतिं वा अकार्षम्।

१०६५ पर्यायार्हर्णोत्पत्तिषु ण्वुच् १११ पर्यायादिषु द्योत्येषु धातोर्ण्वुच् स्यात्। भवतः शायिका। भवानिक्षुभक्षिकामर्हति। इक्षुभक्षिकां मे धारयति। इक्षुभक्षिका मे उदपादि।

१०६६ आक्रोशे नञ्यनिः ॥ ११२ ॥ आक्रोशे नञ्युपपदे धातोरनिः स्यात्। अकरणिस्ते वृषल भूयात्।

१०६७ कृत्यल्युटो बहुलम् ॥ ११३ ॥ भावे अकर्तरि च कारके इति निवृत्तम्। कृत्यसंज्ञकाः ल्युट् च बहुलमर्थेषु स्युः। स्नात्यनेन स्नानीयं चूर्णम्। दीयतेऽस्मै दानीयो विप्रः। राज्ञो भुज्यन्ते राजभोजनाः शालयः। प्रस्कन्दनम्। प्रपतनम्। बहुलग्रहणादन्येऽपि कृतो व्यभिचरन्ति। पादाभ्यां ह्रियते पादहारकः। गले चोप्यते गलेचोपकः।

१०६८ नपुंसके भावे क्तः ॥ ११४ ॥ नपुंसकलिङ्गे भावे क्तः स्यात्। हसितम्।

१०६९ ल्युट् च ॥ ११५ ॥ नपुंसकलिङ्गे भावे ल्युट् स्यात्। हसनं छात्रस्य।

१०७० कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् ॥ ११६ ॥ येन कर्मणा संस्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन्कर्मण्युपपदे धातोर्नपुंसकलिङ्गे भावे ल्युट् स्यात्। पयःपानं सुखम्।

१०७१ करणाधिकरणयोश्च ॥ ११७ ॥ धातोर्ल्युट् स्यात् करणेऽधिकरणे च। इध्मप्रव्रश्चनः। गोदोहनी पात्री।

१०७२ पुंसि संज्ञायां घः प्रायेण ११८ पुंल्लिङ्गयोः करणाधिकरणयोरभिधेययोर्धातोर्घः स्यात्संज्ञायाम्। दन्तच्छदः। एत्य तस्मिन्कुर्वन्ति इत्याकरः। आलयः।

१०७३ गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ ११९ ॥ घान्ता निपात्यन्ते। गावश्चरन्ति अस्मिन्निति गोचरः। संचरन्तेऽनेनेति संचरः। वहन्ति अनेनेति वहः। व्रजन्ति अस्मिन्निति व्रजः। व्यजन्ति अनेन व्यजः। एत्य अस्मिन्नापणन्ते इत्यापणः। निगच्छन्ति तस्मिन्निति निगमः।

१०७४ अवे तॄस्त्रोर्घञ् ॥ १२० ॥ अवोपपदे तरतेः स्तृणातेश्च करणाधिकरणयोः संज्ञायां घञ्। अवतारः। अवस्तारः।

१०७५ हलश्च ॥ १२१ ॥ हलन्ताद्धातोर्घञ् स्यात्। लेखः। वेदः। बन्धः। मार्गः। रामः।

* अवहाराधारावायानामुपसंख्यानम्। अवह्रियन्तेऽस्मिन्नवहारः। आध्रियन्तेऽस्मिन्नाधारः। एत्यास्मिन् वयन्ति आवायः।

१ एवमेव कां कां स्तारिम् अकार्षीः। सर्वां स्तारिम् अकार्षम्

१०७६ अध्यायन्यायोद्यावसंहाराश्च ॥१२२॥ एते निपात्यन्ते ॥ अधीयन्तेऽस्मिन्नित्यध्यायः । नीयतेऽनेनेति न्यायः । उद्युवन्ति अस्मिन्नित्युद्यावः संह्रियन्तेऽनेनेति संहारः । आध्रियतेऽस्मिन्नित्याधारः॥

१०७७ उदङ्कोऽनुदके ॥१२३॥ उदङ्क इति निपात्यते अनुदकविषये ॥ तैलोदङ्कः॥

१०७८ जालमानायः ॥१२४॥ आनाय इति निपात्यते जालं चेद्भवति ॥ आनायो मत्स्यानाम् ॥

१०७९ खनो घ च ॥१२५॥ खनतेर्घः स्याच्चाद् घञ् ॥ आखनः । आखानः ॥

* डो वक्तव्यः ॥ आखः ॥

* डरो वक्तव्यः । आखरः ॥

* इको वक्तव्यः । आखनिकः ॥

* इकवको वक्तव्यः । आखनिकवकः ॥

१०८० ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥१२६॥ दुःखसुखार्थेषु धातोः खल् । ईषत्करो भवता कटः । दुष्करः । सुकरः । ईषद्भोजः । दुर्भोजः । सुभोजः ॥

१०८१ कर्तृकर्मणोश्च भूकृञोः ॥१२७॥ कर्तृकर्मणोरुपपदयोरीषदादिषु च भवतेः करोतेश्च खल् स्यात् ॥ ईषदाढ्यंभव भवता । दुराढ्यंभवम् । स्वाढ्यंकरः ।

* कर्तृकर्मणोश्च्व्यर्थयोरिति वक्तव्यम् । इह माभूत्—स्वाढ्येन भूयते ॥

१०८२ आतो युच् ॥ १२८ ॥ कृच्छ्राकृच्छ्रार्थेषु ईषदादिषूपपदेषु आकारान्तेभ्यो युच् स्यात् ॥ ईषत्पानः सोमो भवता, दुष्पानः सुपानः ॥

१०८३ छन्दसि गत्यर्थेभ्यः ॥१२९॥ कृच्छ्राकृच्छ्रार्थेषु ईषदादिषूपपदेषु छन्दसि गत्यर्थेभ्यो युच् ॥ सूपसदनोऽग्निः । सूपसदनमन्तरिक्षम् ॥

१०८४ अन्येभ्योऽपि दृश्यते ॥१३०॥ अन्येभ्योऽपि धातुभ्यो गत्यर्थेभ्यश्छन्दसि युच् दृश्यते ॥ 'सुदोहनामकृणोद्ब्रह्मणे गाम्' । 'सुवेदनामकृणोद्ब्रह्मणे गाम्' ॥

* भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज् वक्तव्यः ॥ दुःशासनः । दुर्योधनः । दुर्दर्शनः । दुर्धर्षणः । दुर्मर्षणः ॥

१०८५ वर्तमानसामीप्ये वर्तमानवद्वा ॥१३१॥ वर्तमानसमीपे भूते भविष्यति च वर्तमानवद्वा स्यात् ॥ कदा आगतोऽसि? अयमागच्छामि, अयमागमं वा । कदा गमिष्यसि, एष गच्छामि, गमिष्यामि वा ॥

१०८६ आशंसायां भूतवच्च ॥१३२॥ आशंसायां गम्यमानायां धातोर्भूतवत्प्रत्यया वा स्युः चाद्वर्तमानवत् ॥ उपाध्यायश्चेदागमत्, आगतः, आगच्छति आगमिष्यति एते व्याकरणमध्यगीष्महि । एते व्याकरणमधीतवन्तः । अधीमहे अध्येष्यामहे ॥

१०८७ क्षिप्रवचने लृट् ॥१३३॥ क्षिप्रवचने उपपदे आशंसायां धातोर्लृट् स्यात्॥ उपाध्यायश्चेत् क्षिप्रमागमिष्यति क्षिप्र

क्षये ॥ अपि तत्रभवान्वृषलं याजयति । जातु तत्र भवान् वृषलं याजयति ॥

१०९७ विभाषा कथमि लिङ् च ॥१४३॥ कथंशब्दे उपपदे गर्हायां धातोर्लिङ् वा । चाल्लट् । कथं नाम तत्रभवान् वृषलं याजयेत्, याजयति, याजयिष्यति, याजयिता, अयाजयत्, याजयां चकार । अत्र लिङ्निमित्तमस्तीति भूतविवक्षायां क्रियातिपत्तौ लङ् । भविष्यद्विवक्षायां सर्वत्र नित्यैव लङा भवितव्यम् ॥

१०९८ किंवृत्ते लिङ्लृटौ ॥ १४४ ॥ किंवृत्ते उपपदे गर्हायां लिङ्लृटौ स्तः । को नाम वृषलो यं तत्र भवान्याजयेत् यं तत्र भवान् वृषलं याजयिष्यति । कतरो नाम कतमो नाम यं तत्र भवान् वृषलं याजयेत् याजयिष्यति । भूते वा लङ् । भविष्यति तु नित्यम् । को नाम वृषलोऽयं तत्र भवान् अयाजयिष्यत् ॥

१०९९ अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ॥१४५॥ किंवृत्तेऽकिंवृत्ते चोपपदेऽसंभावनायामक्षमायां च लिङ्लृटौ स्तः । नावकल्पयामि न संभावयामि न श्रद्धे तत्र भवान्नाम वृषलं याजयेत् तत्र भवान्नाम वृषलं याजयिष्यति । को नाम वृषलो यं तत्र भवान् वृषलं याजयेत् को नाम तत्र भवान् वृषलं याजयिष्यति । न मर्षयामि तत्र भवान्वृषलं याजयेत् याजयिष्यति को नाम वृषलोऽयं तत्र भवान् याजयेत् याजयिष्यति । अत्र भूते वा लङ् ॥ भविष्यति नित्यम्—नावकल्पयामि तत्र भवान्नाम वृषलमयाजयिष्यत् ॥

११०० किं किलास्त्यर्थेषु लृट् ॥१४६॥ किं किलास्त्यर्थेषूपपदेषु अनवक्लृप्त्यमर्षयोर्लृट् स्यात् । किं किल नाम तत्र भवान्वृषलं याजयिष्यति । अस्ति भवति विद्यते वा नाम तत्र भवान् वृषलं याजयिष्यति न श्रद्धे न मर्षयामि वा ॥

११०१ जातुयदोर्लिङ् ॥१४७॥ जातु-यदित्येतयोरुपपदयोरनवक्लृप्त्यमर्षयोर्लिङ् जातु तत्र भवान् वृषलं याजयेत् । यन्नाम तत्र भवान्वृषलं याजयेत् न श्रद्धे न मर्षयामि ॥

* जातुयदोर्लिङ्विधाने यदायद्योरुपसंख्यानम् । यदा भवाद्विधः क्षत्रियं याजयेत् यदि भवद्विधः क्षत्रियं याजयेत् न श्रद्धे न मर्षयामि ॥ भूते वा लङ्, भविष्यति नित्यम् ॥

११०२ यच्चयत्रयोः ॥१४८॥ यच्च यत्र इत्येतयोरुपपदयोरनवक्लृप्त्यमर्षयोर्लिङ् ॥ यच्च तत्र भवान्वृषलं याजयेत् यत्र तत्र भवान् वृषलं याजयेत् । क्रियातिपत्तौ यथायथं लङ् भवति ।

११०३ गर्हायां च ॥१४९॥ यच्च यत्र इत्येतयोरुपपदयोर्लिङ् गर्हायाम् ॥ यच्च तत्र भवान् वृषलं याजयेत् । यत्र तत्र भवान् वृषलं याजयेत् अस्मो वृद्धः सन् ब्राह्मणः गर्हामहे अहोऽन्याय्यमेतत् ॥ क्रियातिपत्तौ यथायथं लङ् ॥

११०४ चित्रीकरणे च ॥ १५० ॥ यच्च यत्रयोरुपपदयोराश्चर्ये लिङ् ॥ यच्च तत्र भवान् वृषलं याजयेत् तत्र तत्र भवा

११२७ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥१६३॥ एष्वर्थेषु धातोः कृत्यसंज्ञा स्युः लोट् च ॥ भवता कटः करणीयः कर्तव्यः कृत्यः कार्यः । करोतु कट भवानिह प्रेषितः ॥

१११८ लिङ् चोर्ध्वमौहूर्तिके ॥१६४॥ प्रैषादिषु ऊर्ध्वमौहूर्तिके वर्तमानाल्लिङ् चाद्यथाप्राप्तम् । ऊर्ध्वं मुहूर्तादुपरि मुहूर्तस्य भवता खलु कटः कर्तव्यः करणीयः कार्यः । भवान्खलु कटं कुर्यात् । भवान्खलु करोतु ॥

१११९ स्मे लोट् ॥१६५॥ स्म शब्दे उपपदे प्रैषादिषु गम्यमानेषूर्ध्वमौहूर्तिकेऽर्थे लोट् स्यात् ॥ ऊर्ध्वं मुहूर्ताद्भवान्कटं करोतु स्म । ग्रामं गच्छतु स्म । माणवकमध्यापयतु स्म ॥

११२ अधीष्टे च ॥१६६॥ अधीष्टे गम्ये स्मशब्द उपपदे लोट् स्यात् । अङ्ग स्म राजन्माणवकमध्यापय ॥

११२१ कालसमय वेलासु तुमुन् १६७ एषूपपदेषु तुमुन् । कालो भोक्तुम् । समयो भोक्तुम् । वेला भोक्तुम् ॥

११२२ लिङ् यदि ॥१६७॥ यच्छब्दे उपपदे कालादिषु लिङ् ॥ कालो यद्भुञ्जीत भवान्, समयो यद्भुञ्जीत भवान् । वेला यद्भुञ्जीत भवान् ॥

११२३ अर्हे कृत्यतृचश्च ॥ १६९ ॥ अर्हे वाच्ये गम्यमाने वा धातो कृत्यतृचः स्युः । चाल्लिङ् ॥ भवता खलु कन्या वोढव्या वाह्या वहनीया । भवान् कन्याया वोढा । भवान्खलु कन्या वहेत् ॥

११२४ आवश्यकाधमर्ण्ययोर्णिनिः १७० एतयोरर्थयोर्धातोर्णिनिः स्यात् ॥ अवश्यं कारी, शतं दायी ॥

११२५ कृत्याश्च ॥१७१॥ आवश्यकाधमर्ण्ययो. कृत्यसंज्ञका. स्यु. । भवश्य कटः कर्तव्यः । अवश्य करणीय. । अवश्यं कार्यः अवश्य कृत्यः । शत दातव्यम् । सहस्र देयम् ॥

११२६ शकि लिङ् च ॥१७२॥ शक्यार्थे लिङ् कृत्याश्च स्यु. ॥ त्वमुमारो वोढव्यः वहनीयः वाह्यः । भारंवहेत् भवानिह शक्तः ॥

११२७ आशिषि लिङ्लोटौ ॥१७३॥ आशिषि लिङ् लोटौ स्तः ॥ चिरंजीयात् भवान् । चिरं जीवतु भवान् ॥

११२८ क्तिच्क्तौ च संज्ञायाम् ॥१७४॥ आशिषि विषये संज्ञायां क्तिच्क्तौ स्तः । तनुतात् तन्तिः । सातिः । देवा एनं देयासुर्देवदत्तः ॥

११२९माङि लुङ् ॥१७५॥ माङ्युपपदे लुङ् । सर्वलकारापवादः ॥ मा कार्षीत् ॥

११३० स्मोत्तरे लङ् च ॥ १७६ ॥ स्मशब्दोत्तरे माङ्युपपदे लङ् चाल्लुङ् । मास्म करोत् मा स्म कार्षीत् ॥

इति तृतीयाध्यायस्य तृतीयः पादः ३ ॥

एते प्रत्ययाः स्युः । वक्षे रायः । ता वामेषे रथानाम् । क्रत्वे दक्षाय जीवसे क्रत्वे दक्षाय जीवसे । स्वरे विशेषः । प्रये भगाय प्रियसे। कर्मण्युपाचरध्ये कर्मण्युपाचरध्यै, स्वर विशेष. । इन्द्राग्नी आहुवध्यै आहुवध्यं पिवध्यै सहमादयध्यै सोममिन्द्राय पातवे 'दशमे मासि सूतवे' 'स्वर्देवेषु गन्तवे । कर्तवे । हर्तवे ॥

११४० प्रयै रोहिष्यै अव्यथिष्यै॥१०॥ एते निपात्यन्ते 'प्रयै देवेभ्य.' प्रयातुम् । 'अपामोषधीना रोहिष्यै' रोहणाय । 'अव्यथिष्यै' अव्यथनाय ।

११४१ दृशेविख्ये च ॥ ११ ॥ एतौ निपात्येते ॥ 'दृशे विश्वाय सूर्यम्' द्रष्टुम् । 'विख्ये त्वा हरामि' विख्यातुम् ॥

११४२ शकि णमुल्कमुलौ ॥ १२ ॥ शक्नोतावुपपदे छन्दसि तुमर्थे णमुल्कमुलौ स्तः ॥ 'अग्निं वै देवा विभाजं नाशक्नुवन्' विभक्तुमित्यर्थः । 'अपलुपं नाशक्नुवन्' अपलोप्तुमित्यर्थ. ॥

११४३ ईश्वरे तोसुन्कसुनौ ॥ १३ ॥ ईश्वरोपपदे छन्दसि तुमर्थे तोसुन्कसुनौ स्तः ॥ 'ईश्वरोऽभिचरितो.' अभिचरितुमित्यर्थः । 'ईश्वरो विलिखः' विलिखितुमित्यर्थः ॥

११४४ कृत्यार्थे तवैकेन्केन्यत्वनः॥१४॥ कृत्यार्थे छन्दसि एते प्रत्ययास्स्यु. ॥ 'अन्वेतवै' अन्वेतव्यम् । 'परिधातवै' परिधातव्यम् केन् 'नावगाहे' नावगाहितव्यम् । केन्य 'दिदृक्षेण्यः' 'शुश्रूषेण्यः' दिदृक्षितव्यम् । शुश्रूषितव्यम् । 'कर्त्वं हविः' कर्तव्यम् ॥

११४५ अवचक्षे च ॥१५॥ एष निपात्यते ॥ 'नावचक्षे' नावख्यातव्यमित्यर्थः ।

११४६ भावलक्षणेस्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ॥ १६ ॥ भावलक्षणे स्थादिभ्यस्तोसुन् छन्दसि ॥ 'आसंस्थातोः वेद्यां सीदन्ति' असमाप्तेः सीदन्तीत्यर्थः । 'पुरा सूर्यस्योदेतोराधेयः' 'पुरा वत्सानामपाकर्तोः' 'पुरा प्रवदितोरग्नौ प्रहोतव्यम्' । 'पुराप्रचरितोराग्नीध्रे होतव्यम्' 'आहोतोरप्रमत्तस्तिष्ठति' । 'आतमितोरासीत' 'आविजनितोः संभवामेति ।

११४७ सृपितृदोः कसुन् ॥ १७ ॥ भावलक्षणे सृपितृदो. कसुन्स्यात् । 'पुरा क्रूरस्य विसृपो विरप्शिन्' (ता०सं० १।२८) 'पुरा जत्रुभ्य आतृदः' (ऋ०सं० ८।१।१२)

११४८ अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ॥ १८ ॥ प्रतिषेधार्थयोरलंखल्वोः क्त्वा वा स्यात् । अलं कृत्वा । खलुकृत्वा ॥

११४९ उदीचां माङो व्यतिहारे॥१९॥ व्यतिहारे माङः क्त्वा वा स्यात् ॥ अपमित्य याचते । याचित्वा अपमयते ॥

११५० परावरयोगे च ॥ २० ॥ परेण पूर्वस्य अवरेण परस्य च योगे क्त्वा स्यात् । अप्राप्यनदीं पर्वतः स्थितः । अतिक्रम्य पर्वत नदी स्थिता ।

११५१ समानकर्तृकयोः पूर्वकाले॥२१॥ समानकर्तृकयोर्धात्वर्थयोस्तत्र पूर्वकालेध

११६५ शुष्कचूर्णरूक्षेषु पिषः ॥३५॥ एषु कर्मसु पिषेर्णमुलस्यात् । शुष्कपेषं पिनष्टि रूक्षपेषं पिनष्टि ॥

११६६ समूलाकृतजीवेषु हन्कृञ्ग्रहः ॥३६॥ एषु कर्मसु हनादिभ्यो णमुल् । समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति ॥

११६७ करणे हनः ॥३७॥ करणे उपपदे हन्तेर्णमुल् । पाणिघातं वेदिं हन्ति पादघातं भूमिं हन्ति ।

११६८ स्नेहने पिषः ॥३८॥ स्नेहवाचि करणे उपपदे पिषेर्णमुल् । उदपेषं पिनष्टि। तैलपेषं पिनष्टि ।

११६९ हस्ते वर्तिग्रहोः ॥ ३९ ॥ हस्तवाचिनि करणे उपपदे वर्तिग्रहोर्णमुल् । हस्तवर्तं वर्तयति,हस्तग्राहं गृह्णाति,करग्राहं पाणिग्राहम् ।

११७० स्वे पुषः ॥ ४० ॥ स्ववाचिनि करणे उपपदे पुषेर्णमुल । स्वपोषं पुष्णाति आत्मपोषं गोपोषं पितृपोषं धनपोषम् ॥

११७१ अधिकरणे बन्धः ॥ ४१ ॥ अधिकरणवाचिन्युपपदे बध्नातेर्णमुल् । चक्रबन्धं बध्नाति । कूटबन्धम् । मुष्टिबन्धम् ।

११७२ संज्ञायाम् ॥ ४२ ॥ संज्ञायां बध्नातेर्णमुल् । मयूरिकाबन्धं बध्नाति ।

११७३ कर्त्रोर्जीवपुरुषयोर्नशिवहोः॥४३॥ कर्तृवाचिनोर्जीवपुरुषयोर्नशिवहोर्णमुलस्यात् जीवनाशं नश्यति । पुरुषवाहं वहति ।

११७४ ऊर्ध्वे शुषिपूरोः ॥ ४४ ॥ कर्तृवाचिन्यूर्ध्वे शुषिपूरोर्णमुलस्यात् । ऊर्ध्वशोषं शुष्यति ऊर्ध्वपूरं पूर्यते ।

११७५ उपमाने कर्मणि च ॥ ४५ ॥ उपमाने कर्मणि कर्तरि चोपपदे णमुलस्यात् घृतनिधायं निहितः । अजनाशं नष्टः ।

११७६ कषादिषु यथाविध्यनुप्रयोगः ॥ ४६ ॥ कषादिषु यस्माण्णमुलुक्तः स एवानुप्रयोक्तव्यः । निमूलकाषं कषति इत्यादि दाहान्तम् ।

११७७ उपदंशस्तृतीयायाम् ॥ ४७ ॥ तृतीयान्ते उपपदे उपपूर्वाद्दंशेर्णमुल् । मूलकोपदंशं भुङ्क्ते मूलकेनोपदंशं मूलकेनोपदंश्य भुङ्क्ते । वासकपविधिना क्त्वापि ॥

११७८ हिंसार्थानां च समानकर्मकाणाम् ॥ ४८ ॥ अनुप्रयोगधातुना समानकर्मकाणां हिंसार्थानां तृतीयान्ते उपपदे णमुलस्यात् । दण्डोपघातं गाः कालयति । दण्डेनोपघातम् । दण्डेन ताडम् दण्डताडम् ॥

११७९ सप्तम्यां चोपपीडरुधकर्षः ॥४९॥ सप्तम्यन्ते तृतीयान्ते चोपपदे उपपूर्वेभ्यः पीडादिभ्यो णमुल् । पार्श्वोपपीडं शेते पार्श्वयोरुपपीडम् । पार्श्वाभ्यामुपपीडम् । व्रजोपरोधं गाः स्थापयति व्रजे उपरोधम् व्रजेनोपरोधम् । पाण्युपकर्षं धानाः संगृह्णाति पाणावुपकर्षम् पाणिनोपकर्षम् ।

११८० समासत्तौ ॥ ५० ॥ सन्निकर्षे गम्यमाने तृतीयासप्तम्योरुपपदयोर्धातो-

पृष्ठतःकृत्य गतः। पृष्ठतः कृत्वा गतः। पृष्ठतःकारं गतः। मुखतोभूय तिष्ठति। मुखतो भूत्वा मुखतो भावम्।

१११२ नाधार्थप्रत्यये च्व्यर्थे॥ ६२॥ नाधार्थप्रत्यये शब्दे च्व्यर्थे उपपदे कृभ्वोः क्त्वाणमुलौ स्तः॥ अनाना नाना कृत्वा गतः नानाकृत्य गतः। नाना कृत्वा गतः। नानाकारं गतः। विनाकृत्य गतः। विनाकृत्वा गतः। विनाकारम्। नानाभूय गतः नाना भूत्वा नानाभावम्। द्विधाकृत्य गतः।द्विधाकृत्वा, द्विधाकारं,द्विधाभूय गतः। द्विधा भूत्वा द्विधा भावम्॥

११९३ तूष्णीमि भुवः॥ ६३॥ तूष्णीं शब्दे उपपदे भवतेः क्त्वाणमुलौ स्तः। तूष्णींभूय,तूष्णीं, भूत्वा तूष्णीं भावम्॥

११९४ अन्वच्यानुलोम्ये॥ ६४॥ अन्वक्शब्दे उपपदे भवतेरानुलोम्ये क्त्वाणमुलौ स्तः॥ अन्वग्भूयास्ते। अन्वग् भूत्वा स्ते। अन्वग्भावमास्ते॥

११९५शक धृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्॥६५॥ शकादिषूपपदेषु अस्त्यर्थेषु वा धातुमात्रात्तुमुन्स्यात्। शक्नोति भोक्तुम्।धृष्णोति भोक्तुम्। जानाति भोक्तुम्।ग्लायति भोक्तुम्। घटते भोक्तुम्। आरभते। भोक्तुम्। लभते भोक्तुम्। प्रक्रमते भोक्तुम्। सहते भोक्तुम्। अर्हति भोक्तुम्। अस्ति भोक्तुम्। विद्यते भोक्तुम्॥

११९६ पर्याप्तिवचनेष्वलमर्थेषु॥६६॥ पर्याप्तिवचनेष्वलमर्थेषूपपदेषु तुमुन्। पर्याप्तो भोक्तुम्। अलं भोक्तुम्। पर्याप्तो भोक्तुम्॥

११९७ कर्तरि कृत्॥६७॥ कृत्संज्ञकाः कर्तरि कारके स्युः॥ कारकः कर्ता। नन्दनः। ग्राही। पचः॥

११९८ भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा॥ ६८॥ एते कर्तरि वा निपात्यन्ते। भवत्यसौ भव्यः। भव्यमनेनेति वा। गेयो माणवकः साम्नाम्। गेयानि माणवकेन सामानि। प्रवचनीयो गुरुः स्वाध्यायस्य। प्रवचनीयो गुरुणा स्वाध्यायः। उपस्थानीयोऽन्तेवासी गुरोः। उपस्थानीयः शिष्येण वा गुरुः। जायतेऽसौ जन्यः। जन्यमनेनेति वा। आप्लवतेऽसौ आप्लाव्यः। आप्लाव्यमनेनेति वा। आपतत्यसावापात्यः आपात्यमनेनेति वा॥

११९९ लः कर्मणि च भावे चाकर्मकेभ्यः॥ ६९॥ लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युः, अकर्मकेभ्यो भावे कर्तरि च॥ गम्यते ग्रामो देवदत्तेन। गच्छति ग्रामं देवदत्तः। आस्यते देवदत्तेन आस्ते देवदत्तः॥

१२०० तयोरेव कृत्यक्तखलर्थाः ७०॥ एते भावकर्मणोरेव स्युः। कर्तव्यः कटो भवता। आसितव्यं भवता। कृतः कटो भवता। आसितं भवता। ईषत्करः कटो भवता। ईषदाढ्यंभवं भवता॥

१२११ लिटस्तझयोरेशिरेच् ॥ ८१ ॥ लिडादेशयोस्तझयोरेशिरेच् इत्येतौ स्तः॥ पेचे (पेचाते) पेचिरे । लेभे (लेभाते) लेभिरे ।

१२१२ परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ८२ ॥ लिडादेशानां परस्मैपदानां णलादयः स्युः । पपाच पेचतुः पेचुः पचिथ पपक्थ पेचथुः पेच पपाच पपच पेचिव पेचिम ॥

१२१३ विदो लटो वा ॥ ८३ ॥ विदः परेषां लडादेशानां परस्मैपदानां णलादयो वा स्युः। वेद विदतुः विदुः वेत्थ विदथुः विद वेद विद्व विद्म ॥ पक्षे वेत्तीत्यादि ॥

१२१४ ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ ८४ ॥ ब्रुवः परस्य लटः परस्मैपदानां पञ्चानामादिभूतानां णलादयः पञ्च आदेशास्स्युः ब्रुवश्चाहादेशः ॥ आह आहतुः आहुः आत्थ आहथुः ॥ पक्षे ब्रवीतीत्यादि ॥

१२१५ लोटो लङ्वत् ॥ ८५ ॥ लोटो लङ इव कार्यं स्यात् ॥ पचताम् । पचतम् । पचत पचाव पचाम ॥

१२१६ एरुः ॥ ८६ ॥ लोट इकारस्य उः स्यात् ॥ पचतु पचन्तु ॥

१२१७ सेर्ह्यपिच्च ॥ ८७ ॥ लोटः सेर्हिः स्यात्सोऽपिच्च । लुनीहि राध्नुहि ॥

१२१८ वा छन्दसि ॥ ८८ ॥ छन्दसि हिरपिद्वा । युयोध्यस्मज्जुहुराणमेनः । (ऋ०सं०१।१८९।१) प्रीणाहि प्रीणीहि ॥

१२१९ मेर्निः ॥ ८९ ॥ लोटो मेर्निः स्यात् ॥ पचानि ॥

१२२० आमेतः ॥ ९० ॥ लोट एत आम् स्यात् ॥ पचताम् । पचेताम् । पचन्ताम् ॥

१२२१ सवाभ्यां वामौ ॥ ९१ ॥ सवाभ्यां परस्य लोट एकारस्य व अम् इत्येतौ स्याताम् ॥ पचस्व पचध्वम् ॥

१२२२ आडुत्तमस्य पिच्च ॥ ९२ ॥ लोट उत्तमस्याट् स्यात् । स च पित् ॥ करवाणि । करवाव । करवाम । करवै । करवावहै । करवामहै ॥

१२२३ एत ऐ ॥ ९३ ॥ लोडुत्तमस्यैत ऐः स्यात् । करवै करवावहै । करवामहै ॥

१२२४ लेटोऽडाटौ ॥ ९४ ॥ लेटोऽडाटौ स्तः । जोषिषत् । तारिषत् । मन्दिषत् । अग्ना भवाति (ऋ०सं०५।३७।५) । पताति दिद्युत् (ऋ०सं०७।२५।१)

१२२५ आत ऐ ॥ ९५ ॥ लेट आकारस्य ऐकारः स्यात् । मन्त्रयैते । मन्त्रयैथे । करवैते करवैथे ॥

१२२६ वैतोऽन्यत्र ॥ ९६ ॥ लेट एकारस्य वा ऐकारः । आत ऐ इत्यस्य विषयं विना॥ सप्ताहानि शये । अहमेव पशूनामीशै । मद्या एव नो अद्य गृह्णान्तै । न च भवति यत्र क्व च ते मनो दक्षं दधस उत्तरम् ॥ (ऋ०८।१९।२७)

१२०१ आदिकर्मणि क्तः कर्तरि च ॥ ७१ ॥ आदिकर्मणि यः क्तः स कर्तरि चाद्भावकर्मणोः । प्रकृतः कटं देवदत्तः प्रकृतः कटो देवदत्तेन । प्रकृतं देवदत्तेन । प्रभुक्त ओदनं देवदत्तः । प्रभुक्त ओदनो देवदत्तेन । प्रभुक्तं देवदत्तेन ।

१२०२ गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ॥ ७२ ॥ एभ्यः कर्तरि क्तः स्यात् चाद्भावकर्मणोः । गतो हरिर्ग्रामम् । गतो हरिणा ग्रामः । गतं हरिणा । आसितो भवान् । आसितं भवता । उपश्लिष्टो गुरुं भवान् । उपश्लिष्टो गुरुर्भवता । उपश्लिष्टं भवता । उपशयितो गुरुं भवान् । उपशयितो गुरुर्भवता । उपशयितं भवता । उपस्थितो गुरुं भवान् । उपस्थितो गुरुर्भवता । उपस्थितं भवता । उपासितो गुरुं भवान् । उपासितो गुरुर्भवता । उपासितं भवता । अनूषितो गुरुं भवान् । अनूषितो गुरुर्भवता । अनूषितं भवता । अनुजातो माणवको माणविकाम् । अनुजाता माणवकेन माणविका । अनुजातं माणवकेन । आरूढो वृक्षं भवान् । आरूढो वृक्षो भवता । आरूढं भवता । अनुजीर्णो वृषलीं देवदत्तः । अनुजीर्णा वृषली देवदत्तेन । अनुजीर्णं देवदत्तेन ।

१२०३ दाश्वगोघ्नौ संप्रदाने ॥ ७३ ॥ दाश्वगोघ्नौ सम्प्रदाने निपात्येते । दाशन्ति तस्मै दाश्वः । गां हन्ति तस्मै गोघ्नोऽतिथिः ।

१२०४ भीमादयोऽपादाने ॥ ७४ ॥ भीमादयो निपात्यन्तेऽपादाने कारके । बिभेत्यस्माद्भीमः । भीष्मः । भयानकः । वरुः । चरुः । भूमिः । रजः । संस्कारः । संक्रन्दनः । प्रपतनः । समुद्रः । स्रुवः । स्रुक् । खलतिः ।

१२०५ ताभ्यामन्यत्रोणादयः ॥ ७५ ॥ अपादानसम्प्रदानाभ्यामन्यत्रोणादयः स्युः । कृषितोऽसौ कृषिः । त यते इति तन्तु । वृत्तमिति वर्त्म । चरितं चर्म ।

१२०६ क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ॥ ७६ ॥ एभ्यो यः क्तो विहितः सोऽधिकरणे । वाचयमाप्तम् । इदमेषामासितम् । इदमेषां गतम् । इदमेषां भुक्तम् ।

१२०७ लस्य ॥ ७७ ॥ अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमयिष्यामो 'लस्य' इत्येतदधिकृतं वेदितव्यम् । भवतीत्यादि ।

१२०८ तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ॥ ७८ ॥ लस्य तिबादय आदेशाः स्युः । पचति । पचतः पचन्ति पचसि पचथः पचथ पचामि पचावः पचामः । पचते पचेते पचन्ते पचसे पचेथे पचध्वे पचे पचावहे पचामहे ।

१२०९ टित आत्मनेपदानां टेरे ॥ ७९ ॥ टितो लस्य स्थाने आत्मनेपदानि तेषां टेरेत्वम् । पचते पचेते ।

१२१० थासः से ॥ ८० ॥ टितो लस्य थासः से स्यात् । पचसे पेचिषे पचास पक्ष्यसे ।

१२११ लिटस्तझयोरेशिरेच् ॥ ८१ ॥ लिडादेशयोस्तझयोरेशिरेच् इत्येतौ स्तः॥ पेचे (पेचाते) पेचिरे । लेभे (लेभाते) लेभिरे ।

१२१२ परस्मैपदानां णलतुसुस्थलथुस णल्वमाः ॥८२॥ लिडादेशानां परस्मैपदानां णलादयः स्युः। पपाच पेचतुः पेचुः पचिथ पपक्थ पेचथुः पेच पपाच पपच पेचिव पेचिम ॥

१२१३ विदो लटो वा ॥ ८३॥ विदः परेषां लडादेशानां परस्मैपदानां णलादयो वा स्युः। वेद विदतुः विदुः वेत्थ विदथुः विद वेद विद्व विद्म ॥ पक्षे वेत्तीत्यादि ॥

१२१४ ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ ८४ ॥ ब्रुवः परस्य लटः परस्मैपदानां पञ्चानामादिभूतानां णलादयः पञ्च आदेशास्स्युः ब्रुवश्चाहादेशः ॥ आह आहतुः आहुः आत्थ आहथुः ॥ पक्षे ब्रवीतीत्यादि ॥

१२१५ लोटो लङ्वत् ॥ ८५ ॥ लोटो लङ इव कार्यं स्यात् ॥ पचताम् । पचतम् । पचत । पचाव पचाम ॥

१२१६ एरुः ॥ ८६ ॥ लोट इकारस्य उः स्यात् ॥ पचतु पचन्तु ॥

१२१७ सेर्ह्यपिच्च ॥ ८७ ॥ लोटः सेर्हिः स्यात्सोऽपिच्च । लुनीहि प्रीणीहि ॥

१२१८ वा च्छन्दसि ॥ ८८ ॥ छन्दसि हिरपिद्वा । युयोध्यस्मज्जुहुराणमेनः । (ऋ०सं० । १८९ । १) प्रीणाहि प्रीणीहि ॥

१२१९ मेर्निः ॥ ८९ ॥ लोटो मेर्निः स्यात् ॥ पचानि ॥

१२२० आमेतः ॥ ९० ॥ लोट एत आम् स्यात् ॥ पचताम् । पचेताम् । पचन्ताम् ॥

१२२१ सवाभ्यां वामौ ॥ ९१ ॥ सवाभ्यां परस्य लोट एकारस्य व अम् इत्येतौ स्याताम् ॥ पचस्व पचध्वम् ॥

१२२२ आडुत्तमस्य पिच्च ॥ ९२ ॥ लोट उत्तमस्याट् स्यात् । स च पित् ॥ करवाणि । करवाव । करवाम । करवै । करवावहै । करवामहै ॥

१२२३ एत ऐ ॥ ९३ ॥ लोडुत्तमस्यैत ऐः स्यात् । करवै करवावहै । करवामहै ॥

१२२४ लेटोऽडाटौ ॥ ९४ ॥ लेटोऽडाटौ स्तः । जोषिषत् । तारिषत् । मन्दिषत् । अग्ना अयाति (ऋ०सं०५।३७।५) । पताति दिद्युत् (ऋ०सं०७।२५।१)

१२२५ आत ऐ ॥ ९५ ॥ लेट आकारस्य ऐकारः स्यात् । मन्त्रयैते । मन्त्रयैथे । करवैते करवैथे ॥

१२२६ वैतोऽन्यत्र ॥९६॥ लेट एकारस्य वा ऐकारः । आत ऐ इत्यस्य विषयं विना॥ सप्ताहानि शये । अहमेव पशूनामीशै । मदया एव ओ ब्रह्म गृह्णान्तै । न च भवति यत्र क्व च ते मनो दक्षं दधस उत्तरम् ॥ (ऋ०८।१९।१७)

१२४५ लिट् च ॥ ११५ ॥ लिडादेशस्तिङ् आर्द्धधातुकसंज्ञः स्यात् । पेचिथ शेकिथ । जग्ले । मम्ले ॥

१२४६ लिङाशिषि ॥ ११६ ॥ आशिषि लिङार्द्धधातुकसंज्ञः स्यात् । लविषीष्ट ।

१२४७ छन्दस्युभयथा ॥ ११७ ॥ छन्दसि तिङशिदादि सार्वधातुकमार्द्धधातुकं च स्यात् । 'वर्द्धन्तु त्वा सुष्टुतयः' (ऋ०७।९९।७)

इति तृतीयाध्यायस्य चतुर्थः पादः ।

अध्यायश्च समाप्तः ॥

इति श्रीसमस्तमहीमण्डलमण्डितरणरावतान्ववायसमुद्भूतगुणधामधेन्या सवाई जयपुरनगराधीशमहाराजाधिराज सवाई रामसिंह सहधर्मिण्या रूपकुमारी देव्या कारिताया मायुरचतुर्वेद राजकुमारात्मज जानकीलालविरचितायां पाणिनीयाष्टाध्यायीवृत्तौ तृतीयाध्यायः समाप्तः ॥

---

## अथ चतुर्थाध्यायः प्रारभ्यते

१२४८ ङ्याप्प्रातिपदिकात् ॥ १ ॥ अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमिष्याम आ पञ्चमपरिसमाप्तेः 'ङ्याप्प्रातिपदिकात्' इत्येव तद्वेदितव्यम् । कारितरा । हरिणितरा। खट्वातरा। मालातरा। राम' शिव ॥

१२४९ स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ॥ २ ॥ ङ्यन्तात् (ङीबन्तात्, ङीषन्तात्, ङीनन्तात्) आबन्तात् (टाबन्तात् डाबन्तात्, चाबन्तात्) प्रातिपदिकाच्च परे स्वादयः प्रत्यया स्युः । ङीबन्तात्–कुमारी, कुमार्यौ, कुमार्यः, कुमारीम् कुमार्यौ, कुमारीः, कुमार्या, कुमारीभ्याम्, कुमारीभिः । कुमार्यै, कुमारीभ्याम् कुमारीभ्यः, कुमार्याः कुमारीभ्याम्, कुमारीभ्यः कुमार्याः, कुमार्योः कुमारीणाम्, कुमार्याम् कुमार्योः, कुमारीषु ॥ एवं ङीषन्तात्—गौरी, ङीनन्तात् शार्ङ्गरवी चोदाहार्ये ॥ टाबन्तात् खट्वा, खट्वे, खट्वाः, खट्वाम्, खट्वे खट्वाः, खट्वया, खट्वाभ्याम्, खट्वाभिः, खट्वायै, खट्वाभ्याम् खट्वाभ्यः, खट्वायाः, खट्वाभ्याम्, खट्वाभ्यः, खट्वायाः, खट्वयोः खट्वानाम्, खट्वायाम्, खट्वयोः खट्वासु । एवं डाबन्तात्–बहुराजे, चाबन्तात्—कारीषगन्ध्या चोदाहार्ये ॥ प्रातिपदिकात् दृषद्, दृषदौ, दृषदः दृषदम्, दृषदौ, दृषदः दृषदा, दृषद्भ्याम् दृषद्भिः, दृषदे, दृषद्भ्याम् दृषद्भ्यः, दृषदः दृषद्भ्याम् दृषद्भ्यः, दृषदः, दृषदोः, दृषदाम्, दृषदि, दृषदोः, दृषत्सु ॥

१२५० स्त्रियाम् ॥ ३ ॥ अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमिष्यामः 'स्त्रियाम्' इत्येव तद्वेदितव्यम् ॥ अजा । देवदत्ता ॥

१२५१ अजाद्यतष्टाप् ॥ ४ ॥ अजादीनामकारान्तस्य च सार्ध्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप्स्यात् ॥ अजा एडका ॥ अतः—खट्वा गङ्गा इत्यादि ॥

---

१ आर्धधातुकत्वाण्णिलोप ॥

१२६५ सर्वत्र लोहितादिकतन्तेभ्यः ॥१८॥ लोहितादिभ्यः कतशब्दान्तेभ्यो यञन्तेभ्यो नित्यं ष्फः स्यात् । लौहित्यायनी ॥ शाशित्यायनी । बाभ्रव्यायणी॥ कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते । पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम्॥ शाकल्यायनी ॥

१२६६ कौरव्यमाण्डूकाभ्यां च ॥१९॥ आभ्यां ष्फः स्यात् ॥ कौरव्यायणी माण्डूकायनी ॥

* आसुरेरुपसंख्यानम् । आसुरायणी ॥

१२६७ वयसि प्रथमे ॥२०॥ प्रथमवयोवाचिनोऽदन्तात्स्त्रियां ङीप्स्यात् । कुमारी किशोरी वर्करी ॥

* वयस्यचरम इति वक्तव्यम् । वधूटी चिरण्टी ॥

१२६८ द्विगोः ॥२१॥ अदन्ताद्द्विगोर्ङीप् ॥ पञ्चमूली । दशमूली ।

१२६९ अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥२२॥ अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्न ङीप् ॥ पञ्चभिरश्वैः क्रीता पञ्चाश्वा । द्विबिस्ता । द्व्याचिता । द्विकम्बल्या ।

१२७० काण्डान्तात्क्षेत्रे ॥२३॥ क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि ॥ द्वे काण्डे प्रमाणमस्याः द्विकाण्डा क्षेत्रभक्तिः ॥

१२७१ पुरुषात्प्रमाणेऽन्यतरस्याम् ॥२४॥ प्रमाणे यः पुरुषस्तदन्ताद्द्विगोर्वा ङीप्स्यात् तद्धितलुकि । द्विपुरुषी द्विपुरुषा वा परिखा ॥

१२७२ बहुव्रीहेरूधसो ङीष् ॥ २५ ॥ ऊधोन्ताद्बहुव्रीहेः स्त्रियां ङीष् ॥ घटोध्नी कुण्डोध्नी ॥

१२७३ संख्याव्ययादेर्ङीप् ॥ २६ ॥ संख्यादेरव्ययादेश्च ऊधोन्ताद्बहुव्रीहेर्ङीप्स्यात् ॥ द्व्यूध्नी अत्यूध्नी ॥

१२७४ दामहायनान्ताच्च ॥ २७ ॥ संख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च स्त्रियां ङीप्स्यात् । द्विदाम्नी द्विहायनी ॥

*त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम् । त्रिहायणी चतुर्हायणी बाला ॥

*वयोवाचकस्यैव हायनस्य ङीप् णत्वं चेष्यते । तेनेह न—द्विहायना त्रिहायना शाला ॥

१२७५ अन उपधालोपिनोऽन्यतरस्याम् ॥ २८ ॥ अनन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप् ॥ बहुराज्ञी बहुराजा ॥

१२७६ नित्यं संज्ञाछन्दसोः ॥ २९ ॥ अनन्ताद्बहुव्रीहेरुपधालोपिनः संज्ञायां छन्दसि च नित्यं ङीप्स्यात् ॥ सुराज्ञी नाम नगरी । गौः पञ्चदाम्नी । शतमूर्ध्नी ॥

१२७७ केवल–मामक–भागधेय–पापापरसमानार्यकृत–सुमङ्गल–भेषजाच्च ॥३०॥ एभ्यः संज्ञाछन्दसोर्नित्यं ङीप् । केवली । मामकी । मित्रावरुणयोर्भागधेयी ।

पापी स्त्रियम् । वलापरीभ्यो मयणा विजिम्ये (ऋ० १।१२।१२)। समानी । आर्यकृती । सुमङ्गली । भेषजी । लोके केवला मामिका, भागधेया पापा, अपरा समाना आर्यकृता, सुमङ्गला भेषजा ॥

१२७८ रात्रेश्चाजसौ ॥३१॥ रात्रिशब्दाच्छन्दसि अजसविषये ङीप् । या रात्री सृष्टा रात्रीभिः ॥

* अजसादिष्विति वक्तव्यम् । रात्र्यास्ता रात्रयः । रात्रिं सहोषित्वा ॥

१२७९ अन्तर्वत्पतिवतोर्नुक् ॥३२॥ अन्तर्वत् पतिवत् एतौ निपात्येते । अनयोर्नुक् ङीप् च । अन्तर्वत्नी गर्भिणी । पतिवत्नी जीवत्पतिः ॥

१२८० पत्युर्नो यज्ञसंयोगे ॥३३॥ पतिशब्दस्य नकारादेशः स्याद्यज्ञेन संबन्धे । वसिष्ठस्य पत्नी ॥

१२८१ विभाषा सपूर्वस्य ॥३४॥ सपूर्वस्य पतिशब्दान्तस्यानुपसर्जनस्य नकारादेशो वा स्यात् । स्थूलपतिः स्थूलपत्नी ॥

१२८२ नित्यं सपत्न्यादिषु ॥३५॥ सपत्न्यादिषु नित्यं पत्युर्नकारादेशः । समानः पतिरस्याः सा सपत्नी ॥

१२८३ पूतक्रतोरै च ॥३६॥ अस्यै कारादेशः स्यात् ङीप् च । त्रय एते योगाः पुंयोगप्रकरणे प्रयोज्याः । पूतक्रतोः स्त्री पूतक्रतायी ॥

१२८४ वृषाकप्यग्निकुसितकुसिदानामुदात्तः ॥३७॥ एषामुदात्त ऐकारादेशो ङीप् च स्त्रियाम् । वृषाकपेः स्त्री वृषाकपायी । अग्नायी । कुसितायी । कुसिदायी ॥

१२८५ मनोरौ वा ॥३८॥ मनुशब्दात् स्त्रियां ङीप् वा (औकारश्चान्तादेशः, ऐकारश्चोदात्तः) । मनोः स्त्री मनायी मनावी मनुः ॥

१२८६ वर्णादनुदात्तात्तोपधात्तो नः ॥३९॥ वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात् ङीप् वा तकारस्य नकारः । एनी एता । हरिणी हरिता ॥

* पिशङ्गादुपसंख्यानम् । पिशङ्गी । पिशङ्गा ॥

* असितपलितयोः प्रतिषेधः । असिता पलिता ॥

* छन्दसि क्नमेके । असिक्नी । पलिक्नी ॥

* भाषायाम् पीष्यते । 'गतो गणस्तूर्णमसिक्निकानाम्' ॥

१२८७ अन्यतो ङीष् ॥४०॥ तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्स्त्रियां ङीष् स्यात् । सारङ्गी । कल्माषी ॥

१२८८ षिद्गौरादिभ्यश्च ॥४१॥ षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात् स्त्रियाम् । नर्तकी । रजकी । गौरी । मत्सी ॥

१२८९ जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यम

छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥ ४२ ॥ जानपदादिभ्यो वृत्त्यादिष्वर्थेषु ङीष्स्यात् ॥ जानपदी वृत्तिश्चेत् अन्या तु जानपदी । स्वरे विशेषः ॥ कुण्डी अमत्रं चेत् । कुण्डा अन्या । गोणी आवपनं चेत्, गोणा अन्या । स्थली अकृत्रिमा चेत् स्थला अन्या । भाजी श्राणा चेत् भाजा अन्या । नागी स्थूला चेत् नागा अन्या । काली वर्णश्चेत् काला अन्या । नीली अनाच्छादनं चेत् नीला अन्या ॥

* नीलादोषधौ । प्राणिनि च नीली ओषधिः । नीली गौः ॥

* संज्ञायां वा नीली नीला । कुशी अयोविकारश्चेत् कुशा अन्या । कामुकी मैथुनेच्छा चेत् कामुकाऽन्या । कबरी केशवेशश्चेत् । कबराऽन्या ॥

१२९० शोणात्प्राचाम् ॥ ४३ ॥ शोणाद्वा ङीष् । शोणी शोणा ॥

१२९१ वोतो गुणवचनात् ॥ ४४ ॥ उदन्तात्गुणवाचिनो वा ङीष् । पट्वी, पटुः । मृद्वी मृदुः ॥

* वसुशब्दाद्गुणवचनाद् ङीषाद्युदात्तार्थम् । वस्वी ॥

* खरुसंयोगोपधात्प्रतिषेधो वक्तव्यः । खरुरियं ब्राह्मणी । पाण्डुरियं ब्राह्मणी ॥

१२९२ बह्वादिभ्यश्च ॥ ४५ ॥ एभ्यो वा ङीष् । बह्वी बहुः ॥

१२९३ नित्यं छन्दसि ॥ ४६ ॥ छन्दसि, बह्वादिभ्यो नित्यं ङीष् । बह्वीषु हित्वा प्रपिबन्[1] । बह्वी नाम ओषधी भवति ॥

१२९४ भुवश्च ॥ ४७ ॥ छन्दसि स्त्रिया भुवन्तात् भुवो नित्यं ङीष् स्यात् । विभ्वी च प्रभ्वी च ॥

१२९५ पुंयोगादाख्यायाम् ॥ ४८ ॥ पुंयोगाद्धेतोर्यत्स्त्रिया वर्तते तस्माद् ङीष् स्यात् ॥ गोपस्य स्त्री गोपी महामात्री ॥

*पालकान्तान्न गोपालिका ॥

*सूर्याद्देवतायां चाब्वाच्यः । सूर्यस्य स्त्री देवता सूर्या ॥

१२९६ इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ ४९ ॥ एषामानुगागमो ङीष् च । इन्द्राणी वरुणानी भवानी शर्वाणी रुद्राणी मृडानी ॥

* हिमारण्ययोर्महत्त्वे ॥ महद्धिमं हिमानी । महदरण्यम् अरण्यानी ॥

*यवाद्दोषे दुष्टो यवो यवानी ॥

* यवनाल्लिप्याम् यवनानां लिपिर्यवनानी ॥

*मातुलोपाध्याययोरानुग्वा । मातुलानी मातुली । उपाध्यायानी उपाध्यायी ॥

* आचार्यादणत्वं च । आचार्यानी आचार्या ॥

[1] एतेनैव सूत्रेण वेवकस्य दुहिता वैवकी । केकयस्य दुहिता केकयी । दयालस्य भगिनी दयाली ॥ इति दाधिमथ ॥

* अर्यक्षत्रियाभ्यां वा स्वार्थे । अर्याणी अर्या क्षत्रियाणी क्षत्रिया ॥

* मुद्गलाच्छन्दसि लिच्च । 'रथीरभून्मुद्गलानी गविष्टौ (ऋ० सं० १०।१०२।२ ॥

१२९७ क्रीतात्करणपूर्वात् ॥ ५० ॥ क्रीतान्तादन्तात्करणपूर्वात् स्त्रियां ङीष् । वस्त्रेण क्रीता वस्त्रक्रीती ॥

१२९८ क्तादल्पाख्यायाम् ॥ ५१ ॥ करणपूर्वात्क्तान्तात् प्रातिपदिकादल्पाख्यायां ङीष् स्यात् ॥ अभ्रेण लिप्ता अभ्रलिप्ती ॥

१२९९ बहुव्रीहेश्चान्तोदात्तात् ॥५२॥ बहुव्रीहेर्योऽन्तोदात्तस्तस्मात्स्त्रियां ङीष् ॥ ऊरुभिन्नी केशलूनी ॥

* अन्तोदात्तात् जात प्रतिषेधः । दन्तजाता ।

* पाणिगृहीती भार्यायाम् । पाणिगृहीता अन्या ॥

* अबहुनञ्सुकालसुखादिपूर्वादिति वक्तव्यम् । बहुकृता । अकृता । सुकृता । मासजाता । सुखजाता । दुःखजाता ॥

१३०० अस्वाङ्गपूर्वपदाद्वा ॥ ५३ ॥ अस्वाङ्गपूर्वपदादन्तोदात्ताद्बहुव्रीहेः स्त्रियां वा ङीष् स्यात् ॥

शार्ङ्गजग्धी शार्ङ्गजग्धा । सुरापीता ॥

* बहुलं संज्ञाच्छन्दसोरिति वक्तव्यम् । प्रवृद्धविलूनी प्रवृद्धविलूना ॥

१३०१ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ५४ ॥ स्वाङ्गवाचि यदुपसर्जनमसंयोगोपधं तदन्तात्प्रातिपदिकात्स्त्रियां वा ङीष् स्यात् । चन्द्रमुखी चन्द्रमुखा । केशानतिक्रान्ता अतिकेशा ॥

* अङ्गगात्रकण्ठेभ्यो वक्तव्यम् । मृद्वङ्गी मृद्वङ्गा । सुगात्री सुगात्रा । सुकण्ठी । सुकण्ठा ॥

* अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं च, तेन चेत्तत्तथायुतम् ॥१॥

१३०२ नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥५५॥ नासिकाद्यन्तात्प्रातिपदिकात्स्त्रियां वा ङीष् स्यात् । तुङ्गनासिकी तुङ्गनासिका । तिलोदरी तिलोदरा । बिम्बोष्ठी बिम्बोष्ठा । दीर्घजङ्घी दीर्घजङ्घा । समदन्ती समदन्ता । चारुकर्णी चारुकर्णा । तीक्ष्णशृङ्गी तीक्ष्णशृङ्गा ॥

* पुच्छाच्च । कल्याणपुच्छी कल्याणपुच्छा ॥

* कबरमणिविषशरेभ्यो नित्यम् । कबरपुच्छी । मणिपुच्छी । विषपुच्छी । शरपुच्छी ॥

* उपमानात्पक्षाच्च ॥ पुच्छाच्च । उलूकपक्षी सेना । उलूकपुच्छी शाला ॥

१३०३ न क्रोडादिबह्वचः ॥ ५६ ॥ क्रोडादेर्बह्वचश्च स्वाङ्गान्तान्न ङीष् ।

कल्याणक्रोडा । आकृतिगणोऽयम् ॥ सुजघना महाललाटा ॥

१३०४ सहनञ्विद्यमानपूर्वाच्च ॥५७॥ सहेत्यादित्रिकपूर्वान्न ङीष् । सकेशा अकेशा विद्यमाननासिका ॥

१३०५ नखमुखात्संज्ञायाम् ॥५८॥ नखमुखान्तात्प्रातिपदिकात्संज्ञायां स्त्रियां ङीष् न ॥ शूर्पणखा । गौरमुखा ॥

१३०६ दीर्घजिह्वी च छन्दसि ॥५९॥ दीर्घजिह्वी इति छन्दसि निपात्यते ॥ 'दीर्घजिह्वी वै देवानां हव्यमलेट्' ॥

१३०७ दिक्पूर्वपदान्ङीप् ॥६०॥ दिक्पूर्वपदात्स्त्रियां ङीप् । प्राङ्मुखी प्राङ्मुखा ॥

१३०८ वाहः ॥६१॥ वाहन्तात् स्त्रियां ङीष् ॥ दित्यौही प्रष्ठौही ॥

१३०९ सख्यशिश्वीति भाषायाम् ॥६२॥ सखी अशिश्वी इत्येतौ लोके निपात्येते ॥ सखीयं ब्राह्मणी । नास्याः शिशुरस्तीति अशिश्वी ॥

१३१० जातेरस्त्रीविषयादयोपधात् ॥ ६३ ॥ जातिवाचि न च यत्स्त्रियां नियतमयोपधं तस्मात्स्त्रियां ङीष् स्यात् ॥ 'आकृतिग्रहणा जातिः' 'लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या' 'गोत्रं च चरणैः सह' ॥ १ ॥

कुक्कुटी सूकरी तटी । वृषली । नाडायनी । कठी ॥

* योपधप्रतिषेधे गवयहयमुकयमत्स्यमनुष्याणामप्रतिषेधः । गवयी, हयी, मुकयी, मत्सी मनुषी ।

१३११ पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ॥ ६४ ॥ पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रियां ङीष्स्यात् ॥ ओदनपाकी, शङ्कुकर्णी । शालपर्णी, शङ्खपुष्पी, दासीफली, दर्भमूली, गोवाली ॥

* सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् प्रतिषेधः सत्पुष्पा । प्राक्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा ॥ शतपुष्पा । एकपुष्पा ॥

* संभस्त्राजिनशणपिण्डेभ्यः फलात्प्रतिषेधः ॥ सफला । भस्त्राफला । अजिनफला । शणफला । पिण्डफला ॥

* श्वेताच्च प्रतिषेधः । श्वेतफला ॥

* त्रेश्च फलात् प्रतिषेधः त्रिफला ॥

* मूलान्नञः अमूला ॥

१३१२ इतो मनुष्यजातेः ॥ ६५ ॥ इकारान्तान्मनुष्यजातिवाचिनः स्त्रियां ङीष् ॥ अवन्ती कुन्ती दाक्षी औदमेयी ॥

* इञ उपसंख्यानमजात्यर्थम् ॥६५॥ सौतङ्गमी मौनचित्ती ॥

१३१३ ऊङुतः ॥ ६६ ॥ उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । कुरूः ब्रह्मबन्धूः ॥

* अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम् । अलाबूः कर्कन्धूः ॥

तयोर्ण्यङो स्त्रिया ष्यङादेशः ॥ पौणिक्या मौणिक्या । मौखर्या ॥

१३२७ क्रौड्यादिभ्यश्च ॥८०॥ एभ्यः स्त्रियां ष्यङ् स्यात्। क्रौड्या। लाड्या ॥

१३२८ दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम् ॥ ८१ ॥ एभ्यो वा ष्यङ्। दैवयज्ञ्या दैवयज्ञी। शौचिवृक्ष्या। शौचिवृक्षी। सात्यमुग्र्या सात्यमुग्री। काण्डेविद्ध्या काण्डेविद्धी ॥

१३२९ समर्थानां प्रथमाद्वा ॥ ८२ ॥ इदं पदत्रयमधिक्रियते 'प्राग्दिशः' इति यावत्-'तस्यापत्यम्' इत्यादिषु 'समर्थाद् 'इतवर्णानुपूर्वीकार्यात्' 'प्रथमनिर्दिष्टादेव' विकल्पेन प्रत्ययो वेदितव्यः ॥ सौस्थितिः। वैक्षमाणिः ॥

१३३० प्राग्दीव्यतोऽण् ॥८३॥ 'तेन दीव्यति'-इत्यतः प्रागणधिक्रियते। यानि सूत्राणीत ऊर्ध्वमनुक्रमिष्यामस्तेषु प्राग्दीव्यतीयेष्वर्थेषु अण् प्रत्ययो ज्ञेयः ॥

१३३१ अश्वपत्यादिभ्यश्च ॥८४॥ एभ्यः प्राग्दीव्यतीयेष्वर्थेष्वण् स्यात्। आश्वपतम् ॥

१३३२ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ ८५ ॥ एभ्यो ण्यः स्यात्। दैत्यः। आदित्यः। आदित्यम्। प्राजापत्यम्। सैनापत्यम् ॥

* यमाच्च याम्यम्। (काशिका) ॥

* वाक्-मति-पितृमतां छन्दस्युपसंख्यानम्। वाच्यम्। मात्यम्। पैतृमत्यम् ॥

* पृथिव्या ञाञौ। पार्थिवा पार्थिवी ॥

* देवाद्यञञौ। दैव्यम् दैवम् ॥

* बहिषष्टिलोपो यञ्च। बाह्यः ॥

* ईकक् च। बाहीकः ॥

* ईकञ् छन्दसि। बाहीकः। स्वरे विशेषः ॥

* स्थाम्नोऽकारः। अश्वत्थामः ॥

* लोम्नोऽपत्येषु बहुषु। उडुलोमाः ॥

* गोरजादिप्रसङ्गे यत्। गव्यम् ॥

१३३३ उत्सादिभ्योऽञ् ॥८६॥ एभ्योऽञ् प्राग्दीव्यतीयेष्वर्थेषु ॥ औत्सः ॥

१३३४ स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥८७॥ 'धान्यानां भवने' इत्यतः प्रागर्थेषु आभ्यां नञ्स्नञौ स्तः ॥ स्त्रीषु भवम् स्त्रैणम्। पौंस्नम् ॥

१३३५ द्विगोर्लुगनपत्ये ॥८८॥ द्विगोः निमित्तं यस्तद्धितोऽजादिरनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् ॥ पञ्चसु कपालेषु संस्कृतः पञ्चकपालः। द्वौ वेदावधीते द्विवेदः। चतुर्वेदः ॥

१३३६ गोत्रेऽलुगचि ॥८९॥ अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक् ॥ गर्गाणां छात्रा गार्गीयाः। वात्सीयाः ॥

१३३७ यूनि लुक् ॥९०॥ अजादौ प्राग्दीव्यतीये विवक्षिते युवप्रत्ययस्य लुक् ॥ कात्यायनस्यापत्यं कात्यायनिः। तस्या

१३५० द्रोणपर्वतजीवन्तादन्यतरस्याम् ॥१०३॥ एभ्यो वा फक् । द्रौणायनः द्रौणिः ॥ पार्वतायनः पार्वतिः ॥ जैवन्तायनः । जैवन्तिः ॥

१३५१ अनृष्यानन्तर्ये विदादिभ्योऽञ् ॥१०४॥ विदादिभ्यो गोत्रापत्येऽञ् । ये पुनरत्रानृषिशब्दास्तेभ्योऽनन्तरापत्ये एव ॥ वैदः वैदौ विदाः ॥ पौत्राः । दौहित्राः । नानान्द्राः ॥

१३५२ गर्गादिभ्यो यञ् ॥ १०५ ॥ एभ्यो गोत्रे यञ् ॥ गार्ग्यः गार्ग्यौ गर्गाः । वात्स्यः वात्स्यौ वत्साः ॥

१३५३ मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ॥१०६॥ मधु शब्दाद् बभ्रुशब्दाच्च गोत्रापत्ये यञ् ब्राह्मणे कौशिके चार्थे ॥ माधव्यो ब्राह्मणश्चेत् । माधव एवान्यः ॥ बाभ्रव्यः कौशिकश्चेत् बाभ्रव एवान्यः ॥

१३५४ कपिबोधादाङ्गिरसे ॥ १०७ ॥ आभ्यामाङ्गिरसे यञ् गोत्रे ॥ काप्यः । बौध्यः ॥

१३५५ वतण्डाच्च ॥१०८॥ अस्मादाङ्गिरसे यञ्वा ॥ वातण्ड्यः ॥

१३५६ लुक् स्त्रियाम् ॥१०९॥ वतण्ड शब्दादाङ्गिरस्यां स्त्रियां यञो लुक् ॥ वतण्डी ॥

१३५७ अश्वादिभ्यः फञ् ॥ ११० ॥ एभ्यो गोत्रे फञ् । आश्वायनः ॥

१३५८ भर्गात्त्रैगर्ते ॥ १११ ॥ अस्मात् त्रैगर्ते गोत्रे फञ् । भार्गायणस्त्रैगर्तश्चेत् । भार्गिरन्यः ॥

१३५९ शिवादिभ्योऽण् ॥ ११२ ॥ एभ्योऽपत्येऽण् । शिवस्यापत्यं शैवः ॥ गोत्र इति निवृत्तमितिवृत्तिः ॥

१३६० अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ॥ ११३ ॥ अवृद्धानि यानि नदीनां मानुषीणां च नामधेयानि तेभ्योऽपत्येऽण् स्यात् । यमुनाया अपत्यं यामुनः । इरावत्या अपत्यम् ऐरावतः ॥ शैक्षितः चैन्तितः ।

१३६१ ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥११४॥ एभ्योऽपत्येऽण् स्यात् ॥ ऋषिभ्यः—वासिष्ठः वैश्वामित्रः ॥ अन्धकेभ्यः—श्वाफल्कः ॥ वृष्णिभ्यः—वासुदेवः आनिरुद्धः ॥ कुरुभ्यः—नाकुलः साहदेवः ॥

१३६२ मातुरुत्संख्यासंभद्रपूर्वायाः ॥११५॥ संख्यादि पूर्वस्य मातृशब्दस्य उदादेशोऽण् प्रत्ययश्च ॥ द्वयोर्मात्रोरपत्यं द्वैमातुरः । षाण्मातुरः । सांमातुरः । भाद्रमातुरः ॥

१३६३ कन्यायाः कनीन च ॥११६॥ अस्मादपत्येऽण् कनीनश्चादेशः ॥ कन्याया अपत्यम् कानीनः कर्णः ॥

१३६४ विकर्णशुङ्गछगलाद्वत्सभरद्वाजात्रिषु ॥११७॥ एभ्यो वत्सादिष्वपत्यविशेषेषु अण् स्यात् । वैकर्णो वात्स्यश्चेत्, वैकर्णिरन्यः । शौङ्गो भारद्वाजश्चेत्, शौङ्गिरन्यः छागल आत्रेयश्चेत्, छागलिरन्यः ॥

१३६५ पीलाया वा ॥११८॥ पीलाया अपत्ये वाऽण् स्यात् । पीलाया अपत्यं पैलः पैलेयः ॥

सूर्यदुक्तं तदस्यापि स्यात् । मातृष्वसेयः मातृष्वस्रीयः ॥

१३८२ चतुष्पाद्भ्यो ढञ् ॥ १३५ ॥ चतुष्पादभिधायिनोभ्यः प्रकृतिभ्योऽपत्ये ढञ् स्यात् ॥ कामण्डलेयः शार्ङ्गवाहेय. जाम्बेयः ॥

१३८३ गृष्ट्यादिभ्यश्च ॥१३६॥ एभ्यो ऽपत्ये ढञ् ॥ गार्ष्टेयः ॥

१३८४ राजश्वशुराद्यत् ॥१३७॥ आभ्या मपत्ये यत् ॥

*राज्ञोऽपत्ये जातिग्रहणम् । राजन्यः क्षत्रियजातिश्चेत् । राजनः क्षत्रियान्योत्पन्नः ॥ श्वशुर्यः ॥

१३८५ क्षत्राद्घः ॥१३८॥ क्षत्रशब्दादपत्ये घः स्यात् । क्षत्रियः ॥ अयमपि जाति शब्द एव । क्षात्रिरन्यः ॥

१३८६ कुलात्खः ॥ १३९ ॥ कुलशब्दात्तदन्ताच्च ख स्यात् । कुलीन. आढ्य कुलीनः ।

१३८७ अपूर्वपदादन्यतरस्यां यड्ढकञौ ॥१४०॥ अपूर्वपदात्कुलशब्दाद्या यड्ढकञौ स्तः, पक्षे ख ॥ कुल्य. कौलेयः कुलीन ॥

१३८८ महाकुलादञ्खञौ ॥ १४१ ॥ अस्मादञ्खञौ वा, पक्षे ख. ॥ माहाकुल, माहाकुलीन. ॥

१३८९ दुष्कुलाड्ढक् ॥१४२॥ अस्माद पत्ये वा ढक्, पक्षे खः । दौष्कुलेयः. दुष्कुलीनः ॥

१३९० स्वसुश्छः ॥१४३॥ स्वसृशब्दादपत्ये छः स्यात् । स्वसुरपत्यं स्वस्रीयः ॥

१३९१ भ्रातुर्व्यच्च ॥ १४४ ॥ भ्रातृशब्दादपत्ये व्यत्, चाच्छः । भ्रातृव्यः भ्रात्रीयः ॥

१३९२ व्यन् सपत्ने ॥ १४५ ॥ भ्रातृ शब्दाद्व्यन्समुदायेनामित्रे वाच्ये । भ्रातृव्यः (अथ०८।१२।२) अमित्रः ॥

१३९३ रेवत्यादिभ्यष्ठक् ॥ १४६ ॥ एभ्योऽपत्ये ठक् स्यात् । रैवतिकः । आश्वपालिकः ॥

१३९४ गोत्रस्त्रियाः कुत्सने ण च ॥१४७॥ गोत्र या स्त्री तद्वाचिनोऽपत्ये णः । चाट्ठक् कुत्सने गम्ये। गार्ग्या अपत्य गार्ग्यो जाल्मः गार्गिकः । ग्लुचुकायन्या अपत्यं ग्लौचुकायनः ग्लौचुकायनिकः ॥

१३९५ वृद्धाट्ठक् सौवीरेषु बहुलम् ॥१४८॥ वृद्धात्सौवीरगोत्रादपत्ये वा ठक् कुत्सने गम्यमाने ॥ भागवित्तेः भागवित्तिकः, भागवित्तायनः ॥

१३९६ फेश्छ च ॥ १४९ ॥ फिञन्तात्सौवीरगोत्रादपत्ये छः चकाराट्ठक् कुत्सने गम्यमाने ॥ यामुन्दस्यापत्य यामुन्दायनीयः यामुन्दायनिकः ॥

१३९७ फाण्टाहृतिमिमताभ्यां णफिञौ ॥ १५० ॥ सौवीरविषयाभ्यामाभ्यामपत्ये णफिञौ स्तः ॥ फाण्टाहृत, फाण्टाहृतायनिः मैमतः मैमतायनिः ॥

स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं स्यात् । प्रकृतं जीवग्रहण सपिण्डस्य विशेषणम्, इदं तु सन्निनः । तरब्निर्देश उभयोरुत्कर्षार्थः । स्थानेन वयसा चोत्कृष्टे सपिण्डे यथा स्यात् ॥ पितृव्ये पितामहे, भ्रातरि वयसाधिके जीवति गार्ग्यस्यापत्यं गार्ग्यायणः गार्ग्यो वा । वात्स्यायनः वात्स्यो वा ॥ दाक्षायणः दाक्षिर्वा ॥

* वृद्धस्य च पूजायाम् ॥ गोत्रस्य युवसंज्ञा वा पूजायाम् ॥ तत्र भवान्गार्ग्यायणः गार्ग्यो वा ॥

* जीवद्वंश्यं च कुत्सितम् । कुत्सायां युनश्च वा गोत्रसंज्ञा । गार्ग्यो जाल्मः गार्ग्यायणो वा ॥

१४१३ जनपदशब्दात्क्षत्रियादञ् ॥१६६॥ जनपदशब्दो यः क्षत्रियवाची तस्मादपत्येऽञ् स्यात् । पाञ्चालः ऐक्ष्वाकः वैदेहः ॥

* क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् ॥ पञ्चालानां राजा पाञ्चालः । वैदेहः । मागधः ॥

१४१४ साल्वेय गान्धारिभ्यां च ॥१६७॥ आभ्यामपत्येऽञ् । साल्वेयः, गान्धारः ॥ तस्य राजनीत्येव । साल्वेयो राजा । गान्धारो राजा ॥

१४१५ द्व्यञ्मगधकलिङ्गसूरमसादण् ॥१६८॥ जनपदक्षत्रियवाचिभ्य एभ्यो ऽपत्येऽण् स्यात् ॥ आङ्ग । वाङ्गः । मागधः । कालिङ्गः । सौरमसः तस्य राजनीत्येव । आङ्गो राजा ॥

१४१६ वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥१६९॥ जनपद क्षत्रियवाचिभ्य एभ्यो ञ्यङ् स्यात् ॥ वृद्धात्—आम्बष्ठ्यः । इतः—आवन्त्यः । कौसल्यः । आजाद्यः ॥

* पाण्डोर्ड्यण् वक्तव्यः । पाण्ड्यः ॥

१४१७ कुर्वादिभ्यो ण्यः ॥१७०॥ एभ्यो ण्यः स्यात् । कौरव्यः नैषध्यः । तस्य राजनीत्येव कौरव्यो राजा ॥

१४१८ साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥१७१॥ एभ्योऽपत्ये इञ् । साल्वावयवेभ्यः,—औदुम्बरिः तैलखलिः माद्रकारिः यौगन्धरिः भौलिङ्गिः शारदण्डिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः । तस्य राजनीत्येव औदुम्बरो राजा ॥

१४१९ ते तद्राजाः ॥१७२॥ जनपदशब्दात्क्षत्रियादञित्येवमादयः प्रत्ययास्तद्राजसंज्ञाः स्युः । आङ्गाः । वङ्गाः । कलिङ्गाः ॥

१४२० कम्बोजाल्लुक् ॥१७३॥ अस्मात्तद्राजस्य लुक् । कम्बोजः ॥

* कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम् ॥ चोलः केरलः शकः यवनः ॥ तस्य राजनीत्येव कम्बोजो राजा ॥

१४२१ स्त्रियामवन्ति कुन्ति कुरुभ्यश्च ॥१७४॥ एभ्यस्तद्राजस्य लुक् स्त्रियाम् ॥ अवन्ती कुन्ती कुरूः ॥

१४२२ अतश्च ॥१७५॥ अकार प्रत्ययस्य

* तीयादीकक् स्वार्थे वा । द्वैतीयीकम् द्वितीयकम् ॥

* न विद्यायाः । द्वितीया तृतीया विद्या ॥

* गोत्रा दृक्वदिष्यते । दृष्ट सामेत्ये तस्मिन्नर्थे ॥ औपगवेन दृष्ट साम 'गोत्र चरणाद्वुञ्' औपगवकम् ॥

१४३१ वामदेवाड्‍ड्यड्ड्यौ ॥८॥ अस्मात्तृतीयासमर्थाद् दृष्टं सामेत्येतस्मिन्नर्थे ड्यड्ड्यौ स्तः । वामदेवेन दृष्टं साम वामदेव्यम् । वामदेव्यम् । स्वरे विशेषः ॥

१४३२ परिवृतो रथः ॥ ९ ॥ तृतीया समर्थात् 'परिवृतः' इत्यर्थे यथाविहित प्रत्ययः स्यात् योसौ परिवृतः स रथ श्चेत् ॥ वस्त्रेण परिवृतो वास्त्रो रथः । काम्बलः । चार्मणः ॥

१४३३ पाण्डुकम्बलादिनिः ॥ १० ॥ अस्मात्तृतीयासमर्थात्परिवृतो रथ इत्येतस्मिन्नर्थे इनिः स्यात् ॥ पाण्डुकम्बली ॥

१४३४ द्वैपवैयाघ्रादञ् ॥११॥ आभ्यां परिवृतो रथ इत्येतस्मिन्नर्थेऽञ् स्यात् ॥ द्वीपेन परिवृतो रथो द्वैपः । वैयाघ्रः ॥

१४३५ कौमारापूर्ववचने ॥१२॥ कौमार इत्येतदण्प्रत्ययान्तं निपात्यतेऽपूर्व वचने ॥ अपूर्वपतिं कुमारीमुपपन्नः पतिः कौमारः पति ॥ अपूर्वपतिः कुमारीः पतिमुपपन्ना कौमारी भार्या ॥

१३३६ तत्रोद्धृतममत्रेभ्यः ॥ १३ ॥ सप्तमीसमर्थादमत्रवाचिनः उद्धृतमित्यर्थे यथाविहित प्रत्ययः स्यात् ॥ शरावे उद्धृतः शाराव ओदनः ॥

१३३७ स्थण्डिलाच्छयितरि व्रते ॥१४॥ सप्तमीसमर्थादस्मात् शयितर्यभिधेये यथा विहित प्रत्ययः । समुदायेन चेद्व्रतं गम्यते ॥ स्थण्डिले शयितुं व्रतमस्य स्थाण्डिलो भिक्षुः ॥

१४३८ संस्कृतं भक्षाः ॥ १५ ॥ सप्तमी समर्थात्संस्कृतमित्येतस्मिन्नर्थेऽणादयः स्युः । यत्संस्कृतं भक्षाश्चेत्ते । भ्राष्ट्रे संस्कृता भक्षा भ्राष्ट्राः ॥

१४३९ शूलोखाद्यत् ॥१६॥ सप्तमी समर्थाभ्यामाभ्यां संस्कृतमित्येतस्मिन्नर्थे यत्स्यात् ॥ शूले संस्कृतं शूल्यं मांसम् । उख्यम् ॥

१४४० दध्नष्ठक् ॥१७॥ सप्तमी समर्था द्दधिशब्दात्संस्कृतं भक्षा इत्येतस्मिन्नर्थे ठक् स्यात् । दधनि संस्कृतं दाधिकम् ॥

१४४१ उदश्वितोऽन्यतरस्याम् ॥१८॥ सप्तमी समर्थादस्मात्संस्कृतं भक्षा इत्ये तस्मिन्नर्थे वा ठक् स्यात् । पक्षे अण् ॥ औदश्वितकम् औदश्वितम् ॥

१४४२ क्षीराड्ढञ् ॥१९॥ सप्तमीसम र्थात्क्षीरात्संस्कृतं भक्षा इत्येतस्मिन्नर्थे ढञ् स्यात् ॥ क्षीरे संस्कृता क्षैरेयी यवागूः ॥

१४४३ सास्मिन्पौर्णमासीति संज्ञायाम् ॥२०॥ प्रथमासमर्थादस्मिन्नित्यर्थे यथा विहित प्रत्ययः स्यात् । यत्प्रथमासमर्थं पौर्णमासी चेत्स्यात् । प्रत्ययान्तेन चेत्संज्ञा

मस्य मासिकम् । अर्द्धमासिकम् । सांवत्सरिकम् । वासन्तम् । प्रावृषेण्यम् ॥

१४५७ महाराजप्रोष्ठपदाट्ठञ् ॥ ३४ ॥ आभ्यां ठञ् । माहाराजिकम् प्रौष्ठपदिकम् ।

* ठञ्प्रकरणे तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसंख्यानम् । नवयज्ञोऽस्मिन्वर्तते नावयज्ञिकः कालः । पाकयज्ञिकः ॥

* पूर्णमासादण् ॥ पूर्णमासोऽस्यां वर्तते पौर्णमासी तिथिः ॥

१४५८ पितृव्यमातुलमातामहपितामहाः ॥ ३५ ॥ एते निपात्यन्ते ॥

* पितुर्भ्रातरि व्यत् । पितृव्यः ।

* मातुर्डुलच् भ्रातरि । मातुलः ।

* ताभ्यां पितरि डामहच् । पितुः पिता पितामहः । मातुः पिता मातामहः ॥

* मातरि षिच्च पितामही मातामही ॥

* अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः अविदुग्धम् अविसोढम्, अविदूसम्, अविमरीसम् ॥

* तिलान्निष्फलात्पिञ्जपेजौ ॥ निष्फलस्तिलः तिलपिञ्जः, तिलपेजः ॥

* पिञ्जश्छन्दसि डिच्च ॥ तिल्पिञ्जः ॥

१४५९ तस्य समूहः ॥ ३७ ॥ षष्ठीसमर्थात्समूह इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् । काकानां समूहः काकम् । बाकम् । 'इतिप्रभृति यावत्समूहाधिकारः ॥

* गुणादिभ्यो ग्रामच्वक्तव्यः । गुणग्रामः ॥ (करिग्रामः) ॥

१४६० भिक्षादिभ्योऽण् ॥ ३८ ॥ एभ्योऽण् समूहे ॥ भिक्षाणां समूहः भैक्षम् । गार्भिणम् । यौवनम् ॥

१४६१ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रमनुष्याजाद् वुञ् ॥ ३९ ॥ एभ्यो वुञ् । औपगवकम् । औक्षकम् । औष्ट्रकम् । औरभ्रकम् । राजकम् । राजन्यकम् । राजपुत्रकम् । मानुष्यकम् । आजकम् ॥

* वृद्धाच्चेति वक्तव्यम् । वार्द्धकम् ॥

१४६२ केदाराद्यञ्च ॥ ४० ॥ अस्माद्यञ् वुञ् च । कैदार्यम् कैदारकम् ॥

* गणिकायाश्च । गाणिक्यम् ॥

१४६३ ठञ् कवचिनश्च ॥ ४१ ॥ अस्माट्ठञ् । चात्केदारात् । कावचिकम् कैदारिकम् ॥

१४६४ ब्राह्मणमाणववाडवाद्यन् ॥ ४२ ॥ एभ्यो यन् । ब्राह्मण्यम् । माणव्यम् । वाडव्यम् ॥

* पृष्ठादुपसंख्यानम् पृष्ठ्यः ॥

* अह्नः खः क्रतौ ॥ अह्नां समूहः अहीनः क्रतुः ॥

* पर्श्वा णस् वक्तव्यः । पर्शूनां समूहः पार्श्वम् ॥

* वातादूलः । वातूलः ॥

१४६५ ग्रामजनबन्धुभ्यस्तल् ॥ ४३ ॥ एभ्यस्तल् समूहे । ग्रामता जनता बन्धुता

१४७८ संग्रामे प्रयोजनयोद्धृभ्यः ॥५६॥ प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमासमर्थेभ्योऽस्येति षष्ठ्यर्थे संग्रामेऽभिधेये यथाविहितं प्रत्ययः ॥ सुभद्रा प्रयोजनमस्य संग्रामस्य सौभद्रः । गौरिमित्रः । अहिमाला योद्धारोऽस्य संग्रामस्य आहिमालः । स्यान्दनाश्वः । भारतः ॥

१४७९ तदस्यां प्रहरणमिति क्रीडायां णः ॥५७॥ तदिति प्रथमासमर्थादस्यामिति सप्तम्यर्थे णः स्यात् यत् 'तद्' इति निर्दिष्टं प्रहरणं चेद्भवति यद् 'अस्याम्' निर्दिष्टं क्रीडा चेत्सा भवति ॥ दण्डः प्रहरणमस्यां क्रीडायां दाण्डा । मौष्टा ॥

१४८० घञः सास्यां क्रियेति ञः ॥५८॥ घञन्तात्क्रियावाचिनः प्रथमासमर्थादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञः स्यात् । श्येनपातोऽस्यां वर्तते श्यैनंपाता मृगया । तैलंपाता स्वधा ॥

१४८१ तदधीते तद्वेद ॥ ५९ ॥ तदिति द्वितीयासमर्थादधीते वेद इत्येतयोरर्थयोर्यथाविहितं प्रत्ययः स्यात् । छन्दोऽधीते छान्दसः । वैयाकरणः । नैरुक्तः । मौहूर्तः ।

१४८२ क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ६० ॥ एभ्यष्ठक् स्यादधीते वेद चेत्यर्थयोः ॥ अग्निष्टोममधीते वेद वा आग्निष्टोमिकः । वाजपेयिकः । औक्थिकः । लौकायतिकः । वार्तिकसूत्रिकः । सांग्रहसूत्रिकः ॥

* सूत्रान्तादकल्पादेरिष्यते ॥ काल्पसूत्रः ॥

* विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम् ॥ वायसविद्यिकः । गौलक्षणिकः । आश्वलक्षणिकः । मातृकल्पिकः ॥

* विद्या चानङ्गक्षत्रधर्मसंसर्गत्रिपूर्वा ॥ आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । सांसर्गविद्यः । त्रैविद्यः ॥

* आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठक् वक्तव्यः । यावक्रीतिकः । प्रैयङ्गविकः । वासवदत्तिकः । सौमनोत्तरिकः । ऐतिहासिकः । पौराणिकः ॥

* सर्वसादेर्द्विगोश्च लः ॥ सर्ववेदः । सर्वतन्त्रः । सवार्तिकः । ससंग्रहः । द्विवेदः । पञ्चव्याकरणः ॥

* अनुसूलक्ष्यलक्षणे च ॥ अनुसूर्नाम ग्रन्थस्तमधीते आनुसुकः । लाक्ष्यिकः । लाक्षणिकः ॥

* इकन्पदोत्तरपदात् ॥ पूर्वपदिकः ॥

* शतषष्टेः षिकन् पथो बहुलम् ॥ शातपथिकः शातपथिकी षाष्टिपथिकः ॥

* बहुलग्रहणादणपि । शातपथः षाष्टिपथः ॥ ( काशि० ) ॥

१४८३ क्रमादिभ्यो वुन् ॥ ६१ ॥ एभ्यो वुन् । क्रमकः । पदकः । शिक्षकः । मीमांसकः ॥

१४८४ अनुब्राह्मणादिनिः ॥ ६२ ॥ अस्मादिनिः ॥ अनुब्राह्मणी ॥

१४८५ वसन्तादिभ्यष्ठक् ॥ ६३ ॥ एभ्यष्ठक् ॥ वासन्तिकः ॥

१४९७ संकलादिभ्यश्च ॥ ७५ ॥ चतुर्थ्योऽञ् चातुरर्थिकः । संकलेन निर्वृत्तं साङ्कलम् ॥

१४९८ स्त्रीषु सौवीरसाल्वप्राक्षु ॥७६॥ दयन्तयोर्निर्वृत्ताद्देशवाच्याधातुरर्थिकः सा सौवीरे स्त्रीलिङ्गे वाच्ये । साल्वे प्राचि ॥ सौवीरे दत्तामित्रेण निर्वृत्ता न गरी दात्तामित्री । साल्वे विधूमाग्निना निर्वृत्ता वैधूमाग्नी । प्राचि-काकन्देन निर्वृत्ता काकन्दी माकन्दी ॥

१४९९ सुवास्त्वादिभ्योऽण् ॥७७॥ एभ्योऽण् चातुरर्थिकः । सुवास्तोरदूरभवं नगरम् सौवास्तवम् ॥

१५०० रोणी ॥ ७८ ॥ रोणी शब्दात्, तदन्ताच्चाण् चातुरर्थिकः । रौणः आजकरोणः सैंहिकरोणः ॥

१५०१ कोपधाच्च ॥ ७९ ॥ कोपधादण् चातुरर्थिकः । कार्णच्छिद्रिकः कूपः । कार्णवेष्टकः। कृकवाकुना निर्वृत्तं कार्कवाकवम् । त्रैशङ्कवम् ॥

१५०२ वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ॥ ८० ॥ अरीहणादिभ्यः सप्तदशभ्यो वुञादयः सप्तदश स्युः चातुरर्थिकाः ॥ अरीहणादिभ्यो वुञ् आरीहणकम् ॥ कृशाश्वादिभ्यश्छण् कार्शाश्वीयः ॥ ऋश्यादिभ्यः कः ऋश्यकः ॥ कुमुदादिभ्य-ष्ठच् कुमुदिकम् । काशादिभ्य इलः काशिलम् ॥ तृणादिभ्यः सः तृणसः ॥ प्रेक्षादिभ्यः इनिः प्रेक्षी । अश्मादिभ्यो रः अश्मरः ॥ सख्यादिभ्यो ढञ् साखेयम् ॥ सङ्काशादिभ्यो ण्यः साङ्काश्यम् ॥ बलादिभ्यो यः बल्यः ॥ पक्षादिभ्यः फक् पाक्षायणः ॥ कर्णादिभ्यः फिञ् कार्णायनिः ॥ सुतङ्गमादिभ्य इञ् सौतङ्गमिः ॥ प्रगदिन्नादिभ्यो ञ्यः प्रागद्यम् । वराहादिभ्य कक् वाराहकम् ॥ कुमुदादिभ्यष्ठक् कौमुदिकम् ॥

१५०३ जनपदे लुप् ॥ ८१ ॥ जनपदे वाच्ये चातुरर्थिकस्य लुप् स्यात् ॥ पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः । मत्स्याः । अङ्गाः । वङ्गाः । मगधाः ॥

१५०४ वरणादिभ्यश्च ॥८२॥ एभ्यश्चातुरर्थिकस्य लुप् स्यात् । वरणानामदूरभवं नगरं वरणाः ॥

१५०५ शर्करायाः वा ॥८३॥ शर्कराशब्दादुत्पन्नस्य चातुरर्थिकस्य लुप् वा स्यात् । औत्सर्गिकस्याणो वा लुप् ॥ शर्करा शार्करम् । कुमुदादौ पाठसामर्थ्याद् ठच् शर्करिकम् । वराहादौ पाठात् कक् शार्करकम् ॥

१५०६ ठक्छौ च ॥८४॥ शर्कराशब्दाट्ठक्छौ स्तः, चातुरर्थिकौ । शार्करिकम् शर्करीयम् ॥

१५०७ नद्यां मतुप् ॥८५॥ नद्यामभिधेयायां मतुप्स्यात् चातुरर्थिकः । उदुम्बराः यस्यां सन्ति उदुम्बरावती, मशकावती, पुष्करावती, इक्षुमती, द्रुमती ॥

कौलेयकः श्वा चेत् । कौलोऽन्यः ॥ कौक्षेयकः असिश्चेत् कौक्षोऽन्यः ॥ ग्रैवेयकः अलङ्कारश्चेत् ग्रैवोऽन्यः ॥

१५१९ नद्यादिभ्यो ढक् ॥ ९७ ॥ एभ्यो ढक् ॥ नादेयम् माहेयम् ॥

१५२० दाक्षिणा पश्चात्पुरसस्त्यक् ॥ ९८ ॥ एभ्यस्त्यक् शैषिकः । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ॥

१५२१ कापिश्याः ष्फक् ॥ ९९ ॥ अस्मात् ष्फक् ॥ कापिशायनं मधु । कापिशायनी द्राक्षा ॥

* बाह्लयुर्दिपर्दिभ्यश्चेति वक्तव्यम् ॥ बाह्लायनी । और्दायनी । पार्दायनी ॥

१५२२ रङ्कोरमनुष्येण् च ॥ १०० ॥ अस्मादण् ष्फक् च शैषिक । अमनुष्ये ॥ राङ्कवो गौः । राङ्कवायणो गौः ॥

१५२३ द्युप्रागपागुदक्प्रतीचो यत् ॥ १०१ ॥ एभ्यो यत् शैषिक ॥ दिव्यम्, प्राच्यम्, अपाच्यम्, उदीच्यम्, प्रतीच्यम् ॥

१५२४ कन्थायाष्ठक् ॥ १०२ ॥ अस्माट्ठक् शैषिकः । कान्थिकः ॥

१५२५ वर्णौ वुक् ॥ १०३ ॥ कन्थाया वुक् वर्णौ वाच्ये ॥ 'न वा हि जात हिमवत्सु कान्थकम्' ॥ वर्णुर्नाम नदः तत्समीपदेशो वर्णुः ॥

१५२६ अव्ययात्त्यप् ॥ १०४ ॥ अव्ययात्त्यप् शैषिकः ॥

* अमेहक्वतसित्रेभ्य एव ॥ अमात्यः इहत्यः । क्वत्यः । इतस्त्यः । तत्रत्यः ॥ यत्रत्यः ॥ वृद्धात्तु छः । आरातीयः ॥

* त्यब्नेर्ध्रुवे ॥ नित्यम् ॥

* निसो गते ॥ निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चाण्डालादिः ॥

* आविसश्छन्दसि ॥ आविष्ट्यो वर्धते ॥

* अरण्याण्णो वक्तव्यः ॥ आरण्याः सुमनसः ॥

* दूरादेत्यः ॥ दूरेत्यः पथिकः ॥

* उत्तरादाहञ् ॥ औत्तराहः ॥

१५२७ ऐषमोह्यःश्वसोऽन्यतरस्याम् ॥ १०५ ॥ एभ्यो वा त्यप् शैषिकः ॥ ऐषमस्त्यम् । ऐषमस्तनम् । ह्यस्त्यम् ह्यस्तनम् । श्वस्त्यम् श्वस्तनम् ॥

१५२८ तीररूप्योत्तरपदादञ्ञौ ॥ १०६ ॥ तीरोत्तरपदाद्रूप्योत्तरपदाच्चाञ्ञौ स्तः शैषिकौ । काकतीरम् पाल्वलतीरम् ॥ शार्करूप्यम् ॥ शैवरूप्यम् ॥

१५२९ दिक्पूर्वपदादसंज्ञायां ञः ॥ १०७ ॥ दिक्पूर्वपदात्तीरपदादसंज्ञायां ञः स्यात् शैषिकः ॥ पार्वशालः आपरशालः ॥

१५३० मद्रेभ्योऽञ् ॥ १०८ ॥ दिक्पूर्वपदान्मद्रादञ् स्यात् शैषिकः ॥ पौर्वमद्रः । आपरमद्रः ॥

१५३१ उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ॥ १०९ ॥ उदीच्यग्रामवाचिनः

जनपदावधेः आजमीढकः । आजकन्दकः ॥ वृद्धाज्जनपदात्, दार्वाः । दार्वकः । जाम्बाः । जाम्बकः । वृद्धाज्जनपदावधेः काळञ्जरकः वैकुलिशकः ॥

१५४८ कच्छाग्निवक्त्रवर्तोत्तरपदात् ॥१२६॥ कच्छाद्युत्तरपदाद्देशवाचिनो वृद्धादवृद्धाच्च वुञ्स्यात्, शैषिकः । दारुकच्छकः । पैप्पलीकच्छकः । काण्डाग्नकः । वैभुजाग्नकः । ऐन्द्रवक्त्रकः सैन्धुवक्त्रकः बाहुगर्तकः । चाक्रगर्तकः ॥

१५४९ धूमादिभ्यश्च ॥१२७॥ धूमादिभ्यो देशवाचिभ्यो वुञ् शैषिकः । धौमकः खाण्डकः ॥

१५५० नगरात्कुत्सनप्रावीण्ययोः ॥१२८॥ अस्माद्वुञ्कुत्सने प्रावीण्ये च ॥ नागरकः चौरः । नागराः ब्राह्मणाः ॥

१५५१ अरण्यान्मनुष्ये ॥१२९॥ अस्माद्वुञ् शैषिको मनुष्ये । आरण्यको मनुष्यः ।

* पथ्यध्याय-न्याय-विहार-मनुष्य हस्तिष्विति वक्तव्यम् । आरण्यकः पन्थाः । आरण्यको ऽध्यायः । आरण्यको विहारः । आरण्यको मनुष्यः । आरण्यको हस्ती ॥

* वा गोमयेषु । आरण्याः आरण्यकाः वा गोमयाः ॥

१५५२ विभाषा कुरुयुगन्धराभ्याम् ॥१३०॥ कुरुयुगन्धराभ्यां वा वुञ् शैषिकः । कौरवकः कौरवः । यौगन्धरकः यौगन्धरः ॥

१५५३ मद्रवृज्योः कन् ॥१३१॥ आभ्यां कन् शैषिकः । मद्रकः । वृजिकः ॥

१५५४ कोपधादण् ॥१३२॥ ककारोपधादण् शैषिकः । ऋषिकेषु जातः आर्षिकः माहिषिकः । ऐक्ष्वाकः ॥

१५५५ कच्छादिभ्यश्च ॥१३३॥ एभ्यो देशवाचिभ्योऽण् शैषिकः । काच्छः ॥

१५५६ मनुष्यतत्स्थयोर्वुञ् ॥१३४॥ मनुष्ये मनुष्यस्थे च जातादौ प्रत्ययार्थे कच्छादिभ्यो वुञ्स्यात् । काच्छको मनुष्यः । काच्छकम् अस्य हसितम् ॥

१५५७ अपदातौ साल्वात् ॥१३५॥ अपदातावेव मनुष्ये मनुष्यस्थे साल्वशब्दाद्वुञ् । साल्वको मनुष्यः । साल्वकम् अस्य हसितम् ॥

१५५८ गोयवाग्वोश्च ॥१३६॥ गवि यवाग्वां च जातादौ साल्वशब्दाद्वुञ्स्यात् । साल्वको गौः । साल्विका यवागूः । साल्वमन्यत् ॥

१५५९ गर्तोत्तरपदाच्छः ॥१३७॥ अस्माद्देशवाचिनः छः स्यात् शैषिकः ॥ वृकगर्तीयम् शृगालगर्तीयम् ॥

१५६० गहादिभ्यश्छः ॥१३८॥ एभ्यश्छः शैषिकः । गहीयः ॥

१५६१ प्राचां कटादेः ॥१३९॥ प्राग्देश

१ 'गर्त' इति पाठ 'जनपदतदवध्योश्च' इति सूत्रभाष्यादिरुद्धः । इति शेखरे ॥

स्यात् शैषिकः । मध्यमः ॥

*आदेश्चेति वक्तव्यम् आदिमः ॥

*अवोधसोर्लोपश्च ॥ अवमम् । अधमम् ॥

१५७६ अ सांप्रतिके ॥ ९ ॥ अकार प्रत्ययो मध्यात्स्यात् । साम्प्रतिके जाताद्यौ ॥ मध्यं काष्ठम् । नात्युत्कृष्टो नात्यवकृष्टो मध्यो वैयाकरणः ॥

१५७७ द्वीपादनुसमुद्रं यञ् ॥ १० ॥ समुद्रसमीपे यो द्वीपस्तस्माद्यञ् शैषिकः ॥ द्वैप्यम् ॥ द्वैप्या भवन्तोऽनुचरन्ति चक्रम् ॥

१५७८ कालाट्ठञ् ॥११॥ कालविशेष वाचिनः ठञ् शैषिकः ॥ मासिकम् । आर्धमासिकम् । सांवत्सरिकः ॥

१५७९ श्राद्धे शरदः ॥१२॥ शारदष्ठञ् श्राद्धेऽभिधेये शैषिकः ॥ शारदिकम् श्राद्धम् ॥

१५८० विभाषा रोगातपयोः ॥ १३ ॥ रोगे आतपे चाभिधेये शरदष्ठञ् स्यात् शैषिकः । शारदिको रोगः । शारदिकः आतपः ॥ शारदो रोगः । शारदः आतपः ॥

१५८१ निशाप्रदोषाभ्यां च ॥ १४ ॥ आभ्यां वा ठञ्शैषिकः । नैशम् नैशिकम् । प्रादोषम् । प्रादोषिकम् ॥

१५८२ श्वसस्तुट् च ॥१५॥ श्वसो वा ठञ् तस्य च तुट् । शौवस्तिकः । श्वस्त्यः ॥

१५८३ सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥१६॥ सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् शैषिकः । सान्धिवेलम् । सान्ध्यम् । ग्रैष्मम् । शैशिरम् । तैषम् । पौषम् ॥

* संवत्सरात्फलपर्वणोः ॥ सांवत्सरम् फलम्, पर्व वा ॥

१५८४ प्रावृष एण्यः ॥ १७ ॥ अस्मा देण्यः शैषिकः ॥ प्रावृषेण्यः ॥

१५८५ वर्षाभ्यष्ठक् ॥१८॥ वर्षाशब्दाट्ठक् । वार्षिकम् ॥

१५८६ छन्दसि ठञ् ॥१९॥ वर्षाशब्दाच्छन्दसि ठञ् स्यात् ॥ 'नभश्च नभस्यश्च वार्षिकावृतू' ॥

१५८७ वसन्ताच्च ॥२०॥ अस्माच्छन्दसि ठञ् शैषिकः ॥ 'मधुश्च माधवश्च वासन्तिकावृतू' ॥

१५८८ हेमन्ताच्च ॥२१॥ अस्माच्छन्दसि ठञ् शैषिक । 'सहश्च सहस्यश्च हैमन्तिकावृतू' ॥

१५८९ सर्वत्राण् च तलोपश्च ॥ २२ ॥ हेमन्तशब्दादण् तत्संनियोगेन चास्य त लोपः ॥ हैमनं वासः ॥

१५९० सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ २३ ॥ सायमित्यादिभ्योऽव्ययेभ्यः कालवाचिभ्यष्ट्यु ट्युलौ स्तस्तयोस्तुट् च ॥ सायन्तनम् । चिरंतनम् । प्राह्णेतनम् । प्रगेतनम् । दोषातनम् । दिवातनम् ॥

* चिर-पस्त्-परारिभ्यस्त्नो वक्तव्यः । चिरत्नम् । परुत्नम् । परारित्नम् ॥

प्रगस्य छन्दसि गलोपश्च ॥ प्रत्नम् ॥

* अग्रादिपश्चाड्डिमच् । अग्रिमम् । आदिमम् । पश्चिमम् ॥

* अन्ताच्चेति वक्तव्यम् । अन्तिमम् ॥

१५९१ विभाषा पूर्वाह्णापराह्णाभ्याम् ॥२४॥ आभ्यां ट्युट्युलौ वा स्तस्तयोस्तुट् च । पूर्वाह्णेतनम् । अपराह्णेतनम् । पौर्वाह्णिकम् । आपराह्णिकम् ॥

१५९२ तत्र जातः ॥ २५ ॥ तत्रेति सप्तमीसमर्थाज्जात इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् । स्रुघ्ने जातः स्रौघ्नः । माथुरः । औत्सः । राष्ट्रियः । ग्राम्यः ॥

१५९३ प्रावृषष्ठप् ॥२६॥ सप्तमीसमर्थात् जात इत्यर्थे ठप् स्यात् । प्रावृषि जातः प्रावृषिकः ॥

१५९४ संज्ञायां शरदो वुञ् ॥ २७ ॥ शरच्छब्दात्सप्तमीसमर्थाज्जात इत्यस्मिन्नर्थे वुञ् । समुदायेन चेत्संज्ञा गम्यते । शारदका दर्भाः । शारदका मुद्गाः ॥

१५९५ पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् ॥ २८ ॥ एभ्यो वुन् 'तत्र जात' इत्येतस्मिन्विषये संज्ञायाम् । पूर्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः ॥

१५९६ पथः पन्थ च ॥ २९ ॥ पथिशब्दात् वुन् तत्संनियोगेन पन्थादेशः ॥ पथि जातः पन्थकः ॥

१५९७ अमावास्याया (य) स्यावा वा ॥३०॥ अमावास्या(य)स्याशब्दात् वुन् वा 'तत्र जात' इत्येतस्मिन् विषये । अमावास्यकः आमावास्यः ।

१५९८ अ च ॥ ३१ ॥ अमावास्याशब्दादकारः प्रत्ययः तत्र जात इत्येतस्मिन् विषये । अमावास्यः ॥

१५९९ सिन्ध्वपकराभ्यां कन् ॥३२॥ सिन्धुशब्दादपकरशब्दाच्च कन् स्यात् । सिन्धुकः । अपकरकः ॥

१६०० अणञौ च ॥३३॥ सिन्ध्वपकराभ्यामणञौ स्तः । सैन्धवः । आपकरः ॥

१६०१ श्रविष्ठा-फल्गुन्यनुराधा-स्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥ ३४ ॥ एभ्यो जातार्थे आगतस्य लुक् । श्रविष्ठासु जातः श्रविष्ठः फल्गुनः । अनुराधः । स्वातिः । तिष्यः । पुनर्वसुः । हस्तः । विशाखः । अषाढः । बहुलः ॥

* लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् । चित्रायां जाता चित्रा । रेवती । रोहिणी ॥

* फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ । फल्गुनी । अषाढा ॥

* श्रविष्ठाषाढाभ्यां छणपि वक्तव्यः । श्राविष्ठीयः आषाढीयः ॥

१६०२ स्थानान्तगोशालखरशालाच्च ॥३५॥ स्थानान्तात् गोशाल-खरशालशब्दाच्च आगतेऽर्थे प्रत्ययस्य लुक् । गोस्थानः । अश्वस्थानः । गोशालः । खरशालः ॥

१६०३ वत्सशालाभिजिदश्वयुक्शतभिषजो वा ॥ ३६ ॥ एभ्यो जातार्थस्य लुग्वा। वत्सशालः, वात्सशालः। अभिजित् आभिजितः। अश्वयुक् आश्वयुजः शतभिषक् शातभिषजः ॥

१६०४ नक्षत्रेभ्यो बहुलम् ॥ ३७ ॥ नक्षत्रेभ्यः परस्य जातार्थे प्रत्ययस्य बहुलं लुक् स्यात् ॥ रोहिण्यां रौहिणः। मृगशिरा मार्गशीर्षः ॥

१६०५ कृतलब्धक्रीतकुशलाः ॥३८॥ सप्तमीसमर्थात् कृतादिष्वर्थेषु यथाविहित प्रत्ययः स्यात्। स्रुघ्ने कृत स्रौघ्नः। मथुरायां लब्धः माथुरः। राष्ट्रे क्रीतः राष्ट्रियः। स्रुघ्ने कुशलः स्रौघ्नः ॥

१६०६ प्रायभवः ॥३९॥ सप्तमीसमर्थात् 'प्रायभव' इत्येतस्मिन्विषये यथाविहितं प्रत्ययः स्यात् स्रुघ्ने प्रायेण भवति स्रौघ्नः माथुरः ॥

१६०७ उपजानूपकर्णोपनीवेष्ठक् ॥४०॥ सप्तमीसमर्थेभ्यः एभ्यष्ठक् 'प्रायभव' विषये। औपजानुकः औपकर्णिकः औपनीविकः ॥

१६०८ संभूते ॥४१॥ सप्तमीसमर्थात् 'सम्भूते' इत्येतस्मिन् विषये यथाविहित प्रत्ययः स्यात्। स्रुघ्ने संभवति स्रौघ्नः। माथुरः ॥

१६०९ कोशाड्ढञ् ॥४२॥ कोशाड्ढञ् 'तत्र सम्भूतः' इत्यस्मिन्विषये ॥ कोशे सम्भूत कौशेयम् ॥

१६१० कालात्साधुपुष्प्यत्पच्यमानेषु ॥४३॥ कालविशेषवाचिभ्यः सप्तमीसमर्थेभ्यः साध्वादिष्वर्थेषु यथाविहित प्रत्ययः स्यात्। हेमन्ते साधु हैमन्तः प्राकारः। वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः। शरदि पच्यन्ते शारदाः शालयः ॥

१६११ उप्ते च ॥४४॥ सप्तमीसमर्थात्कालवाचिनः 'उप्ते' यथाविहित प्रत्ययः स्यात् ॥ हेमन्ते उप्यन्ते हैमन्ता यवा ॥

१६१२ आश्वयुज्या वुञ् ॥४५॥ आश्वयुजीशब्दाद् 'वुञ्' उप्तेर्थे। आश्वयुज्यां उप्ता आश्वयुजकाः माषाः ॥

१६१३ ग्रीष्मवसन्तादन्यतरस्याम् ॥४६॥ आभ्यां वा वुञ् उप्तेर्थे ॥ ग्रैष्मम् ग्रैष्मकम् ॥ वासन्तकम् वासन्तम् ॥

१६१४ देयमृणे ॥४७॥ सप्तमीसमर्थात्कालवाचिनो 'देयम्' इत्येतस्मिन्नर्थे यथाविहित प्रत्ययः स्यात् यद्देयमृणं चेद्भवति ॥ मासे देयमृण मासिकम्। सांवत्सरिकम् ॥

१६१५ कलाप्यश्वत्थयवबुसाद्वुन् ॥४८॥ एभ्यः कालवाचिभ्यः सप्तमीसमर्थेभ्यो 'देयम्' इत्येतस्मिन्नर्थे वुन् स्यात् ॥ कलापिनि काले देयमृणं कलापकम्। अश्वत्थकम्। यवबुसकम् ॥

१६१६ ग्रीष्मावरसमाद्वुञ् ॥४९॥ आभ्यां वुञ् देयमृणमित्येतस्मिन्नर्थे।

* मध्मीयौ च ॥ माध्यमम् मध्यमीयम्॥

* मध्यो मध्यं दिनण् चास्मात् ॥ मध्ये भवम् माध्यंदिनम् ॥

* स्थाम्नो लुग्वक्तव्यः । अश्वत्थामा ॥

* अजिनान्ताच्च॥ वृकाजिनः सिंहाजिन.

१६२८ ग्रामात्पर्यनुपूर्वात् ॥ ६१ ॥ अव्ययीभावात्पर्यनुपूर्वाद्ग्रामाट्ठञ् । पारिग्रामिकः । आनुग्रामिकः ।

१६२९ जिह्वामूलाङ्गुलेश्छः ॥६२॥ आभ्यां छः स्यात् ॥ जिह्वामूलीयम् । अङ्गुलीयम् ॥

१६३० वर्गान्ताच्च ॥ ६३ ॥ वर्गशब्दान्ताच्छः स्यात् । कवर्गीयम् । चवर्गीयम् ॥

१६३१ अशब्दे यत्खावन्यतरस्याम्॥६४॥ शब्दादन्यस्मिन्प्रत्ययार्थे वर्गान्तात् वा यत्खौ स्तः॥ वसुदेववर्ग्यः वासुदेववर्गीणः वासुदेववर्गीयः । युधिष्ठिरवर्ग्यः युधिष्ठिरवर्गीणः । युधिष्ठिरवर्गीयः ॥

१६३२ कर्णललाटात्कनलङ्कारे ॥६५॥ आभ्यां कन् स्यात् 'तत्र भव' इत्येतस्मिन्विषयेऽलङ्कारे चार्थे ॥ कर्णिका । ललाटिका।

१६३३ तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ॥६६॥ तस्येति षष्ठीसमर्थाद्व्याख्यातव्यनाम्न व्याख्यानेऽभिधेये यथाविहित प्रत्यय स्यात् । तत्र भवे च । सुपां व्याख्यान. सौपो ग्रन्थ. । तैङः । कार्तः । सुप्सु भव. सौप । तैङ । कार्तः । सौवः. ॥

१६३४ बह्वचोन्तोदात्ताट्ठञ् ॥ ६७ ॥ बह्वचो व्याख्यातव्यनाम्नोऽन्तोदात्ताट्ठञ् व्याख्यानयोष्ठञ्स्यात् ॥ पात्वणत्विकम् ॥

१६३५ क्रतुयज्ञेभ्यश्च ॥ ६८ ॥ क्रतुभ्यो यज्ञेभ्यश्च व्याख्यातव्यनामभ्यो भवव्याख्यानयोरर्थयोष्ठञ् ॥ अग्निष्टोमस्य व्याख्यानस्तत्र भवो वा आग्निष्टोमिकः । वाजपेयिकः । राजसूयिकः । पाकयज्ञिकः । नावयज्ञिकः । यज्ञग्रहणम् असोमयागेभ्योपि यथा स्यात् । पाञ्चौदनिकः । दाशौदनिकः॥

१६३६ अध्यायेष्वेवर्षेः ॥६९॥ ऋषिशब्दाः प्रवरनामधेयानि । तेभ्य ऋषिशब्देभ्यो भवव्याख्यानयोरर्थयोष्ठञ्स्यात्। वसिष्ठस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकोऽध्यायः वैश्वामित्रिकः ॥

१६३७ पौरोडाशपुरोडाशात्ष्ठन् ॥७०॥ आभ्यां भवव्याख्यानयोरर्थयो. ष्ठन् स्यात् ॥ पुरोडाशाः पिष्टपिण्डास्तेषां संस्कारको मन्त्र. पौरोडाशस्तस्यव्याख्यानस्तत्र भवो वा पौरोडाशिक. पौरोडाशिकी । पुरोडाशसहचरितो ग्रन्थ· पुरोडाशस्तस्य व्याख्यानस्तत्र भवो वा पुरोडाशिक पुरोडाशिकी ॥

१६३८ छन्दसो यदणौ ॥७१॥ छन्दसो भवव्याख्यानयोरर्थयोः यदणौ स्तः ॥ छन्दस्य. छान्दस ॥

१६३९ ऋगयनादिभ्यश्च ब्राह्मणप्रथमाध्वर पुरश्चरणनामाख्याताट्ठक् ॥ ७२ ॥ द्व्यजादिभ्यो व्याख्यातव्यनामभ्यो भवव्याख्या

*वालवायो विदूरं च प्रकृत्यन्तरमेव वा । नवै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत् ॥

१६५२ तद्गच्छति पथिदूतयोः ॥८५॥ तदिति द्वितीयासमर्थाद् गच्छतीत्येतस्मिन् विषये यथाविहितं प्रत्ययः स्यात् । योऽसौ गच्छति पन्थाश्चेत् स भवति दूतो वा । स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा ॥

१६५३ अभिनिष्क्रामति द्वारम् ॥८६॥ द्वितीयासमर्थाद् अभिनिष्क्रामतीत्येतस्मिन् विषये यथाविहितं प्रत्ययः स्यात् यदभिनिष्क्रामति द्वारं चेत् तद्भवति ॥ स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम् । माथुरम् । राष्ट्रियम् ॥

१६५४ अधिकृत्य कृते ग्रन्थे ॥ ८७ ॥ द्वितीयासमर्थाद् अधिकृत्य कृत इत्येतस्मिन् विषये यथाविहितं प्रत्ययः स्यात् । यत्कृतं ग्रन्थश्चेत् स भवति । सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रः । गौरिमित्रः । यायातः ।

*लुबाख्यायिकार्थस्य प्रत्ययस्य बहुलम् वासवदत्तामधिकृत्य कृताख्यायिका वासवदत्ता । सुमनोत्तरा । उर्वशी ॥ न च भवति 'भैमरथी' ॥

१६५५ शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ ८८ ॥ एभ्यो द्वितीयासमर्थेभ्यश्छः अधिकृत्य कृते ग्रन्थे ॥ शिशुक्रन्दमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः । यमसभीयः । अग्निकाश्यपीय । वाक्यपदीयम् । इन्द्रजननीयम् ॥

* द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः । दैवासुरम् । राक्षोसुरम् । गौणमुख्यम् ॥

१६५६ सोऽस्य निवासः ॥८९॥ स इति प्रथमासमर्थाद् अस्येतिषष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात् । यत्प्रथमासमर्थं निवासश्चेत्स भवति ॥ स्रुघ्नो निवासोऽस्य स्रौघ्नः । माथुरः । राष्ट्रियः ॥

१६५७ अभिजनश्च ॥ ९० ॥ प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात् । यत्प्रथमासमर्थम् अभिजनश्चेत्स भवति । स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः । माथुरः । राष्ट्रियः ॥

१६५८ आयुधजीविभ्यश्छः पर्वते ॥९१॥ पर्वतवाचिनः प्रथमासमर्थाद् अभिजनादस्येति षष्ठ्यर्थे छः स्यात् ॥ हृद्गोलः पर्वतोऽभिजनः एषामायुधजीविनां ते हृद्गोलीयाः ॥ अन्धकवर्तीयाः । रोहितगिरीयाः ॥

१६५९ शण्डिकादिभ्यो ञ्यः ॥ ९२ ॥ एभ्यो ञ्यः स्यात् सोऽस्याभिजन इत्येतस्मिन्विषये ॥ शाण्डिक्यः । सार्वसेन्यः ॥

१६६० सिन्धुतक्षशिलादिभ्योऽणञौ ॥ ९३ ॥ सिन्ध्वादिभ्यस्तक्षशिलादिभ्यश्चाणञौ स्तः सोऽस्याभिजन इत्येतस्मिन् विषये । सैन्धवः । ताक्षशिलः । वात्सोद्धरणः ॥

१६६१ तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ॥ ९४ ॥ तूदयादिभ्यो क्रमाद् ढक्छण्ढञ्यकः प्रत्ययाः स्युः सोऽस्याभिजन इत्येतस्मिन्विषये। तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः ॥

१६६२ भक्तिः ॥ ९५ ॥ समासमर्था दस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात् प्रथमासमर्थं भक्तिश्चेद्भवति ॥ स्रुघ्नो भक्तिरस्य स्रौघ्नः। माथुरः ॥

१६६३ अचित्ताददेशकालाट्ठक् ॥ ९६ ॥ देशकालव्यतिरिक्तादचित्ताद्भक्तिवाचकात् ठक् सोऽस्य भक्तिरित्येतस्मिन्विषये। अपूपा भक्तिरस्य आपूपिकः ॥ शाष्कुलिकः। पायसिकः ॥

१६६४ महाराजाट्ठञ् ॥ ९७ ॥ तस्माट्ठञ् सोऽस्य भक्तिरित्येतस्मिन्विषये। माहाराजिकः ॥

१६६५ वासुदेवार्जुनाभ्यां वुन् ॥ ९८ ॥ आभ्यां वुन्। वासुदेवो भक्तिरस्य वासुदेवकः। अर्जुनकः ॥

१६६६ गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ॥ ९९ ॥ गोत्राख्येभ्यः क्षत्रियाख्येभ्यश्च बहुलं वुञ् सोऽस्य भक्तिरित्येतस्मिन्विषये। ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः। औपगवकः। नाकुलकः। साहदेवः ॥

१६६७ जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ॥ १०० ॥ जनपदिनो ये बहुवचने जनपदेन समानशब्दास्तेषां जनपदवत्सर्वं भवति प्रत्ययः प्रकृतिश्च सोऽस्य भक्तिरित्येतस्मिन्विषये 'जनपदतदवध्योश्च' इत्यत्र प्रकरणे ये प्रत्यया विहितास्ते जनपदिभ्योऽस्मिन्नर्थेऽपि स्युरिति। जनपदिनो जनपदस्वामिनः क्षत्रियाः। अङ्गा जनपदो भक्तिरस्य आङ्गकः। वाङ्गकः। सौह्मकः। पौण्ड्रकः। अङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः। वाङ्गकः। सौह्मकः। पौण्ड्रकः ॥

१६६८ तेन प्रोक्तम् ॥ १०१ ॥ तृतीयासमर्थात्प्रोक्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात्। पाणिनीयम्। आपिशलम्। काशकृत्स्नम् ॥

१६६९ तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ १०२ ॥ एभ्यश्छण् तेन प्रोक्तमित्येतस्मिन्विषये। तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः। वारतन्तवीयाः। खाण्डिकीयाः। औखीयाः ॥

* छन्दस्येवायमिष्यते। तित्तिरिणा प्रोक्ताः श्लोकाः इत्यत्र न भवति ॥

१६७० काश्यप-कौशिकाभ्यामृषिभ्यां णिनिः ॥ १०३ ॥ ऋषिवाचिभ्यामाभ्यां णिनिः स्यात् तेन प्रोक्तमित्येतस्मिन्विषये ॥ काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः। कौशिकिनः ॥

१६७१ कलापि-वैशम्पायनान्तेवासिभ्यश्च ॥ १०४ ॥ कलाप्यन्तेवासिनो वैशम्पायनान्तेवासिनश्च ये वाचकाः शब्दास्तेभ्यो णिनिः स्यात् तेन प्रोक्तमित्येतस्मिन्विषये। हरिद्रुणा प्रोक्तमधीयते

हारिद्रविणः। तौम्बुरविणः। औलपिनः॥ वैशंपायनान्तेवासिभ्यः आलम्बिनः पा ट्टलिनः कामलिनः आर्चाभिनः आरुणिनः। ताण्डिनः। श्यामायनिनः॥

१६७२ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु १०५ तृतीयासमर्थात्प्रोक्ते णिनिःस्यात् यत्प्रोक्तं पुराणप्रोक्तं चेद्॥ ब्राह्मणेषु तावत् भाल्लविनः शाट्यायनिनः॥ ऐतरेयिणः। कल्पेषु, पैङ्गी कल्पः। आरुणपराजी॥

१६७३ शौनकादिभ्यश्छन्दसि ॥१०६॥ एभ्यो णिनिःस्यात् तेनप्रोक्तमित्येतस्मिन्विषये छन्दसि। शौनकिनः। वाजसनेयिनः

१६७४ कठचरकाल्लुक् ॥ १०७॥ आभ्यां प्रोक्तप्रत्ययस्य लुक् छन्दसि। कठेन प्रोक्तमधीयते कठाः। चरकाः॥

१६७५ कलापिनोऽण् ॥ १०८ ॥ अस्मादण्स्यात् 'तेन प्रोक्तमित्येतस्मिन्विषये। कलापिना प्रोक्तमधीयते कालापाः॥ १नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम्।

१६७६ छगलिनो ढिनुक् ॥१०९॥ अस्माड्ढिनुक्॥ छगलिना प्रोक्तमधीयते छागलेयिनः।

१६७७ पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ॥ ११० ॥ आभ्यां णिनिः तेन प्रोक्तमित्येतस्मिन्विषये भिक्षुनटसूत्रयोः॥ पाराशर्येण प्रोक्तमधीयते पाराशरिणो भिक्षवः। शैलालिनो नटाः॥

१६७८ कर्मन्द-कृशाश्वादिनिः ॥११॥ आभ्यामिनिः भिक्षुनटसूत्रयोर्विषये यथासंख्यम्। कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः। कृशाश्विनो नटाः॥

१६७९ तेनैकदिक् ॥ ११२॥ तेनेति तृतीयासमर्थादेकदिगित्येतस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात्। सुदाम्ना एकदिक् सौदामनी विद्युत्। हैमवती॥

१६८० तसिश्च ॥ ११३ ॥ तसिश्च प्रत्ययःस्यात् तेनैकदिगित्येतस्मिन्विषये। सुदामतः। हिमवत्तः। पीलुमूलतः॥

१६८१ उरसो यच्च ॥ ११४॥ उरस् शब्दाद्यत्स्याच्चात्तसिः तेनैकदिगित्येतस्मिन्विषये॥ उरसा एकदिक् उरस्यः उरस्तः।

१६८२ उपज्ञाते[१] ॥११५॥ तृतीयासमर्थाद् उपज्ञात इत्येतस्मिन्विषये यथाविहितं प्रत्ययः स्यात्। पाणिनिनोपज्ञातं पाणिनीयं व्याकरणम्। काशकृत्स्नं गुरुलाघवम्॥

१६८३ कृते ग्रन्थे ॥ ११६ ॥ तृतीयासमर्थात् कृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् यत्कृतं ग्रन्थश्चेत्स भवति॥ वररुचिना कृता वाररुचाः श्लोकाः। हैकुपादो ग्रन्थः। भैकुराटो ग्रन्थः॥ जालूकः॥

१६८४ संज्ञायाम् ॥ ११७॥ तृतीयासमर्थात्कृते इत्येतस्मिन्विषये यथाविहितं प्रत्ययः समुदायेन चेत्संज्ञा गम्यते॥

१ विद्यमानमेव ज्ञातमुपज्ञातम्। उत्पादितं कृतम् इत्ययमनयोर्भेदः।

नटाञ्ञ्यः ॥ १२९ ॥ छन्दोगादिभ्यो ञ्यः स्यात्तस्येदमित्येतस्मिन्विषये । चरणाद्धर्माम्नाययोः, तत्साहचर्यान्नटशब्दादपि धर्माम्नाययोरेव । छन्दोगानां धर्म आम्नायो वा छान्दोग्यम् । औक्थिक्यम् । बाह्वृच्यम् । नाट्यम् ॥

१६९७ न दण्डमाणवान्तेवासिषु ॥ १३० ॥ दण्डप्रधाना माणवा दण्डमाणवाः । अन्तेवासिनः शिष्याः । तेष्वभिधेयेषु वुञ् न । गौक्षाः दण्डमाणवा अन्तेवासिनो वा । दाक्षाः । माहकाः ॥

१६९८ रैवतिकादिभ्यश्छः ॥ १३१ ॥ एभ्यश्छः, तस्येदमित्येतस्मिन्विषये । रैवतिकीयः ॥

* कौपिञ्जलहास्तिपदादण् । आभ्यामण् तस्येदमित्येतस्मिन्विषये । कौपिञ्जलः । हास्तिपदः ॥

* आथर्वणिकस्येकलोपश्च । अस्मादण् तत्संनियोगेन इकलोपः तस्येदमित्येतस्मिन् विषये । आथर्वणिकस्यायमाथर्वणो धर्म आम्नायो वा ॥

१६९९ तस्य विकारः ॥ १३२ ॥ तस्येति षष्ठीसमर्थाद्विकार इत्येतस्मिन्विषये यथाविहितं प्रत्ययः स्यात् । अश्मनो विकारः आश्मनः । आश्मः[1] । भास्मनः । मार्त्तिकः ।

१७०० अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ १३३ ॥ षष्ठीसमर्थेभ्य एभ्योऽवयवे यथाविहितं प्रत्ययः । चाद्विकारे । मयूरस्य विकारोऽवयवो वा मायूरः । तैत्तिरः । मौर्वं काण्डम् भस्म वा ॥ कारीरं काण्डम्, भस्म वा । इत उत्तरे प्रत्ययाः प्राण्योषधिवृक्षेभ्यो विकारावयवयोर्भवन्ति अन्येभ्यस्तु विकारमात्रे ॥

१७०१ बिल्वादिभ्योऽण् ॥ १३४ ॥ बिल्व इत्येवमादिभ्योऽण् स्याद् विकारावयवयोः । बिल्वस्य विकारोऽवयवो वा बैल्वः ।

१७०२ कोपधाच्च ॥ १३५ ॥ कोपधादण् विकारावयवयोः । तार्कवम् । तैत्तिडीकम् ॥

१७०३ त्रपुजतुनोः षुक् ॥ १३६ ॥ आभ्यामण् तत्संनियोगेन षुगागमः विकारे । त्रपुणो विकारः त्रापुषम् । जातुषम् ॥

१७०४ ओरञ् ॥ १३७ ॥ उवर्णान्तादञ् विकारावयवयोः । दैवदारवम् । भाद्रदारवम् ॥

१७०५ अनुदात्तादेश्च ॥ १३८ ॥ अनुदात्तादेः प्रातिपदिकादञ् विकारावयवयोः । दाधित्थम् । कापित्थम् ॥

१७०६ पलाशादिभ्यो वा ॥ १३८ ॥ एभ्यो वाञ् विकारावयवयोः । पालाशम् । खादिरम् ॥

१७०७ शम्याष्ट्लञ् ॥ १४० ॥ शमीशब्दाट्ट्लञ् विकारावयवयोः । शामीलं भस्म शामीली स्रुक् ।

१ 'अश्मनो विकारे' इति पाक्षिकष्टिलोपः ॥

१०७८ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥१४१॥ प्रकृतिमात्रान्मयड् वा स्यात् भक्ष्याच्छादनवर्जितयोर्विकारावयवयोर्भाषायां विषये। अश्ममयम् आश्मनम्। सूपो- [illegible] मौद्गम्॥

१७०९ नित्यं वृद्धशरादिभ्यः ॥१४२॥ वृद्धसंज्ञकेभ्यः शरादिभ्यश्च प्रातिपदिकेभ्यो विकारावयवयोर्भाषायां विषये नित्यं मयट् स्यात्। आम्रमयम्। शालमयम्। शरमयम्। दर्भमयम् मृण्मयम्॥

* [एकाचो नित्यं मयटमिच्छन्ति। त्वङ्मयम् वाङ्मयम्। (का) ॥]

१७१० गोश्च पुरीषे ॥१४३॥ अस्मात् पुरीषे मयट्। गोमयम्॥

१७११ पिष्टाच्च ॥१४४॥ अस्माद्विकारे मयट् स्यात् विकारे असंज्ञायां विषये। पिष्टमयम् भस्म॥

१७१२ संज्ञायां कन् ॥१४५॥ पिष्टात् कन् विकारे संज्ञायाम्। पिष्टकः॥

१७१३ व्रीहेः पुरोडाशे ॥१४६॥ व्रीहेर्मयट् पुरोडाशे विकारे। व्रीहिमयः पुरोडाशः। व्रैहमन्यत्॥

१७१४ असंज्ञायां तिलयवाभ्याम् ॥१४७॥ आभ्यामसंज्ञायां मयट् विकारावयवयोः। तिलमयम् यवमयम्॥

१७१५ द्व्यचश्छन्दसि ॥१४८॥ द्व्यचः प्रातिपदिकाच्छन्दसि मयट् विकारावयवयोः। 'यस्य पर्णमयी जुहूर्भवति'। 'दर्भमयं वासो भवति' 'शरमयं बर्हिर्भवति'॥

१७१६ नोत्वद्वर्ध्रबिल्वात् ॥१४९॥ उत्वतः प्रातिपदिकाद् वर्ध्रबिल्वाभ्यां च मयट् न स्यात्। मौञ्जं शिक्यम्। गार्मुतम् चरुम्। वार्ध्री बालप्रग्रथिता। बैल्वो ब्रह्मवर्चसकामेन कार्यः॥

१७१७ तालादिभ्योऽण् ॥१५०॥ एभ्योऽण् विकारावयवयोः। तालम् धनुः। बार्हिणम्॥

१७१८ जातरूपेभ्यः परिमाणे ॥१५१॥ जातरूपवाचिभ्योऽण् परिमाणे विकारे। हाटकः निष्कः। हाटकं कार्षापणम्। जातरूपं तापनीयम्॥

१७१९ प्राणिरजतादिभ्योऽञ् ॥१५२॥ प्राणिवाचिभ्यो रजतादिभ्यश्चाञ् स्यात् विकारावयवयोः। कापोतम्। मायूरम्। राजतम्। सैसम्। लौहम्॥

१७२० ञितश्च तत्प्रत्ययात् ॥१५३॥ ञितो विकारावयवप्रत्ययान्तादञ् स्यात् विकारावयवयोरेव। शैतकरवस्य विकारोऽवयवो वा शैतकरवम्। [illegible]। [illegible]। शामीलम्। कापोत

१७२१ क्रीतवत्परिमाणात् ॥१५४॥ प्राग्वतेष्ठञित्यारभ्य क्रीतार्थे ये प्रत्ययाः उक्तास्ते [illegible] परिमाणात्क्रीत इव प्रत्यया भवन्ति तस्य विकार इत्यस्मिन् विषये। निष्कस्य विकारो नैष्किकः। शतस्य विकारः शत्यः

शनिकः 'अध्यर्धपूर्वाद् द्विगोर्लुगसंज्ञायामि' त्येवमादिकमप्यतिदिश्यते । द्विसहस्रः द्विसाहस्रः द्विनिष्कः द्विनैष्किकः ॥

१७२२ उष्ट्राद्वुञ् ॥ १५५ ॥ अस्माद्वुञ् विकारावयवयोः । उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः ॥

१७२३ उमोर्णयोर्वा ॥ १५६ ॥ आभ्यां वा वुञ् विकारावयवयोः । औमम् औमकम् । और्णम् और्णकम् ॥

१७२४ एण्या ढञ् ॥ १५७ ॥ अस्माड्ढञ् विकारावयवयोः । ऐणेयम् मांसम् । पुंसस्त्वणेव ऐणस्य मांसमैणम् ॥

१७२५ गोपयसोर्यत् ॥ १५८ ॥ आभ्यां यत्स्याद्विकारावयवयोः । गव्यम् । पयस्यम् ॥

१७२६ द्रोश्च ॥ १५९ ॥ अस्माद्यत्स्याद् विकारावयवयोः । द्रुव्यम् ॥

१७२७ माने वयः ॥ १६० ॥ द्रुशब्दात् मान विकारविशेषे वयः प्रत्ययः ॥ द्रुवय कुडवादिभिः ॥

१७२८ फले लुक् ॥ १६१ ॥ विकारावयवयोरुत्पन्नस्य फले तद्विशेषे विवक्षिते लुक् स्यात् ॥ फलितस्य वृक्षस्य फलमवयवो वा भवति विकारश्च । आमलक्याः फलम् आमलकम् ॥

१७२९ प्लक्षादिभ्योऽण् ॥ १६२ ॥ प्लक्षादिभ्यः फले विकारावयवत्वेन विवक्षितेऽण् स्यात् । विधानसामर्थ्यान्न तस्य लुक् ॥ प्लाक्षम् नैयग्रोधम् ॥

१७३० जम्ब्वा वा ॥ १६३ ॥ अस्मात्फले वाण् । अणो विधानसामर्थ्यान्न लुक्, अञस्तु लुक् ॥ जाम्बवानि फलानि जम्बूनि वा ॥

१७३१ लुप् च ॥ १६४ ॥ जम्ब्वाः फले वा लुप् स्यात् ॥ जम्ब्वाः फलं जम्बूः जम्बु जाम्बवमिति वा ॥

*लुप्प्रकरणे फलपाकशुषामुपसंख्यानम् । व्रीहयः । मुद्गाः , यवाः ॥

*पुष्पमूलेषु बहुलम् । मल्लिकायाः पुष्पम् मल्लिका । विदार्याः मूलम् विदारी ॥ न च भवति पाटलानि पुष्पाणि ॥

१७३२ हरीतक्यादिभ्यश्च ॥ १६५ ॥ एभ्यः फले प्रत्ययस्य लुप् । हरीतक्याः फलं हरीतकी । कोशातकी ॥

१७३३ कंसीयपरशव्ययोर्यञञौ लुक् च ॥ १६६ ॥ कंसीयपरशव्यशब्दाभ्यां यञञौ स्तः, छयतोश्च लुक्, 'तस्य विकार' इत्येतस्मिन्विषये ॥ कंसीयस्य विकारः कांस्यः परशव्यस्य विकारः पारशवः ॥

इति चतुर्थाध्यायस्य तृतीयः पादः ।

---

१७३४ प्राग्वहतेष्ठक् ॥ १ ॥ 'तद्वहति रथयुगप्रासङ्गम्' इत्येतस्मात्प्राग्यानर्थाननुक्रमिष्यामः तेषु ठगधिकृतो वेदितव्यः ॥ अक्षैर्दीव्यति आक्षिकः ॥

*ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम् । माशब्द इत्याह माशब्दि-

* धनुर्दण्डग्रहणं संघातविगृहीतार्थम्। धानुर्दण्डिकी धानुष्की दाण्डिकी (का०)॥

१७४६ वस्नक्रयविक्रयाट्ठन्॥ १३॥ तृतीयासमर्थाभ्यामाभ्यां ठन् जीवतीत्येतस्मिन्नर्थे। वस्नेन जीवति वास्निकः॥

[* क्रयविक्रयग्रहणं संघातविगृहीतार्थम्। क्रयविक्रयिकः। क्रयिकः। विक्रयिकः (का०)॥]

१७४७ आयुधाच्छ च।॥ १४॥ अस्माच्छः स्यात् ठन् च जीवतीत्येतस्मिन्नर्थे॥ आयुधीयः आयुधिकः॥

१७४८ हरत्युत्सङ्गादिभ्यः॥ १५॥ एभ्यस्तृतीयासमर्थेभ्यो हरतीत्येतस्मिन्नर्थे ठक् स्यात्। उत्सङ्गेन हरति औत्सङ्गिकः औत्सङ्गिकी॥

१७४९ भस्त्रादिभ्यः ष्ठन्॥ १६॥ एभ्यः ष्ठन्॥ भस्त्रया हरति भस्त्रिकः॥ भस्त्रिकी॥

१७५० विभाषा *विव[धवीव]धात्१७॥ आभ्यां ष्ठन् वा पक्षे ठक्॥ विवधेन हरति विवधिकः विवधिकी। वीवधिकी वीवधिकी। वैवधिकः वैवधिकी। इमौ समानार्थौ पथि पर्याहारे च वर्तेते॥

१७५१ अण् कुटिलिकायाः॥१८॥ कुटिलिकाया अण्। कुटिलिकया हरति कौटिलिको मृगः॥

१७५२ निर्वृत्तेऽक्षद्यूतादिभ्यः। १९॥ तृतीयासमर्थेभ्योऽक्षद्यूतादिभ्यो निर्वृत्त इत्येतस्मिन्नर्थे ठक् स्यात्। अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकम् वैरम्।

१७५३ त्रेर्मम् नित्यम्॥२०॥ ड्वितः क्त्रिरित्यत्र त्रिशब्दो गृह्यते अयस्मान्नित्यमप् स्यात्। तेन निर्वृत्तमित्येतस्मिन्नर्थे॥ पाकिमम् उप्त्रिमम्। नित्यग्रहण ख्यातःप्रत्ययनिवृत्त्यर्थम्। तेन अयं तु नित्य मप् स्ययाप्तमेव भवति॥ विपयाम्बरेन प्रयोक्तव्यम्॥

* भावेप्रत्ययान्तादिमब् वक्तव्यः॥ पाकेन निर्वृत्तं पाकिमम्॥

१७५४ अपमित्ययाचिताभ्यां कक्कनौ॥ २१॥ आभ्यां कक्कनौ स्तो निर्वृत्त इत्येतस्मिन्नर्थे। आपमित्यकम्। याचितकम्

१७५५ संसृष्टे॥ २२॥ तृतीयासमर्थात् संसृष्ट इत्येतस्मिन्नर्थे ठक् स्यात्। दध्ना संसृष्टं दाधिकम् मारिचिकम्॥

१७५६ चूर्णादिनिः॥ २३। अस्मादिनिः संसृष्टे। चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः चूर्णिनो धानाः॥

१७५७ लवणाल्लुक्॥ २४॥ 'संसृष्टे' इत्यनेन उत्पन्नस्य ठको लवणशब्दाल्लुक्॥ लवणः सूपः। लवणं शाकम्। लवणा यवागूः॥

१७५८ मुद्गादण्॥ २५॥ अस्मादण् संसृष्ट इत्येतस्मिन्नर्थे॥ मौद्गः ओदनः॥

१७५९ व्यञ्जनैरुपसिक्ते॥ २६॥ तृतीयासमर्थेभ्य एभ्य उपसिक्त इत्येतस्मिन्नर्थे ठक् स्यात्॥ दध्नोपसिक्तं दाधिकम्॥

* 'वीवधाच्च' इति वार्तिकमपि सूत्रे लिखितम्।

१७६० ओजःसहोऽम्भसा वर्तते ॥२७॥
एभ्यस्तृतीयासमर्थेभ्यो वर्तते इत्यर्थे ठक् स्यात् ॥ ओजसा वर्तते औजसिकः शूरः । साहसिकश्चौरः । आम्भसिको मत्स्यः ॥

१७६१ तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥२८॥
तदिति द्वितीयासमर्थेभ्यः प्रति अनु इत्येवं पूर्वेभ्यः ईपलोमकूलेभ्यो वर्तते इत्यस्मिन्नर्थे ठक् स्यात् ॥ प्रतीपं वर्तते प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः आनुकूलिकः ॥

१७६२ परिमुखं च ॥ २९ ॥
अस्माद् द्वितीयासमर्थाद्वर्तते इत्येतस्मिन्नर्थे ठक् स्यात् ॥ परिमुखं वर्तते पारिमुखिकः ॥

१७६३ प्रयच्छति गर्ह्यम् ॥ ३० ॥
द्वितीयासमर्थात्प्रयच्छति इत्येतस्मिन्नर्थे ठक् स्यात् यत्तद्द्वितीयासमर्थं गर्ह्यं चेद्भवति ॥ द्विगुणं प्रयच्छति द्वैगुणिकः ॥

* वृद्धेर्वृधुषिभावो वक्तव्यः ॥ वार्धुषिकः ॥

१७६४ कुसीददशैकादशात् ष्ठन्ष्ठचौ ॥३१॥
कुसीददशैकादशशब्दाभ्यां यथाक्रमं ष्ठन् ष्ठच् एतौ प्रत्ययौ भवत इत्येतस्मिन्विषये । कुसीदं प्रयच्छति कुसीदिकः कुसीदिकी । दशैकादशिकः दशैकादशिकी ॥

१७६५ उञ्छति ॥३२॥ द्वितीयासमर्थादुञ्छतीत्येतस्मिन्नर्थे ठक् । बदराण्युञ्छति बादरिकः ।

१७६६ रक्षति ॥३३॥ द्वितीयासमर्थाद्रक्षतीत्येतस्मिन्नर्थे ठक् स्यात् । समाजं रक्षति सामाजिकः ॥

१७६७ शब्ददर्दुरं करोति ॥ ३४ ॥
द्वितीयासमर्थाभ्यामाभ्यां करोतीत्येतस्मिन्नर्थे ठक् स्यात् । शब्दं करोति शाब्दिकः । दार्दुरिकः ॥

१७६८ पक्षिमत्स्यमृगान्हन्ति ॥ ३५ ॥
द्वितीया समर्थेभ्य एभ्यो हन्तीत्येतस्मिन्नर्थे ठक् स्यात् । पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाफरिकः । शाकुलिकः । मार्गिकः । हारिणिकः । सौकरिकः । सारङ्गिकः ॥

१७६९ परिपन्थं च तिष्ठति ॥ ३६ ॥
द्वितीयासमर्थादस्मात् तिष्ठतीत्येतस्मिन्नर्थे ठक् । परिपन्थं तिष्ठति पारिपन्थिकः । चात् परिपन्थं हन्ति पारिपन्थिकः ।

१७७० माथोत्तरपदपदव्यनुपदं धावति ॥३७॥ एभ्यो धावतीत्यर्थे ठक् स्यात् ॥
माथः पन्थाः माथश्च विशेषणोपः । दण्डमाथं धावति दाण्डमाथिकः । पौ- ष्पमाथिकः । पादविकः । आनुपदिकः

१७७१ आक्रन्दाट्ठञ्च ॥ ३८ ॥
द्वितीयासमर्थादाक्रन्दात् धावतीत्येतस्मिन्नर्थे ठञ् स्यात्, चाट्ठक् । आक्रन्दं धावति आक्रन्दिकः आक्रन्दिकी । स्वरे विशेषः ॥

१७७२ पदोत्तरपदं गृह्णाति ॥ ३९ ॥
द्वितीयासमर्थादस्माद् गृह्णातीत्येतस्मिन्नर्थे ठक् स्यात् । पूर्वपदं गृह्णाति पौर्वपदिकः । औत्तरपदिकः ॥

१७७३ प्रतिकण्ठार्थललामं च ॥४०॥

द्वितीयासमर्थेभ्यः प्रतिकण्ठार्थललामशब्देभ्यो गृह्णातीत्येतस्मिन्नर्थे ठक् स्यात् ॥ प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः । आर्थिकः । लालामिकः ॥

१७७४ धर्मं चरति ॥ ४१ ॥ द्वितीयासमर्थाद्धर्माच्चरतीत्येतस्मिन्नर्थे ठक् स्यात् । धर्मं चरति धार्मिकः ।

* अधर्माच्चेति वक्तव्यम् । आधर्मिकः ॥

१७७५ प्रतिपथमेति ठंश्च ॥ ४२ ॥ प्रतिपथशब्दाद् द्वितीयासमर्थाद् एतीत्यस्मिन्नर्थे ठन् स्यात् । प्रतिपथमेति प्रतिपथिकः ॥

१७७६ समवायान् समवैति ॥ ४३ ॥ द्वितीयासमर्थेभ्यः समवायवाचिभ्यः समवैतीत्येतस्मिन्नर्थे ठक् स्यात् । समवायान् समवैति सामवायिकः । सामाजिकः । सामूहिकः । सांनिवेशिकः ।

१७७७ परिषदो ण्यः ॥ ४४ ॥ अस्मात् ण्यः पूर्वेऽस्मिन्विषये । परिषदं समवैति पारिषद्यः ॥

१७७८ सेनाया वा ॥ ४५ ॥ सेनाशब्दाद्वा ण्यः पूर्वविषये । सेनां समवैति सैन्यः सैनिकः ॥

१७७९ संज्ञायां ललाटकुक्कुटौ पश्यति ॥ ४६ ॥ द्वितीयासमर्थाभ्यामाभ्यां पश्यतीत्येतस्मिन्नर्थे ठक् संज्ञायाम् ॥ ललाटं पश्यति लालाटिकः । कौक्कुटिकः ।

१७८० तस्य धर्म्यम् ॥ ४७ ॥ षष्ठीसमर्थाद् धर्म्यमित्येतस्मिन्नर्थे ठक् । शुल्कशालाया धर्म्यं शौल्कशालिकम् । आकरिकम् । आपणिकम् ॥

१७८१ अण् महिष्यादिभ्यः ॥ ४८ ॥ एभ्योऽण् स्यात् तस्य धर्म्यमित्येतस्मिन्विषये ॥ महिष्या धर्म्यं माहिषम् ॥

१७८२ ऋतोऽञ् ॥ ४९ ॥ ऋकारान्तात्प्रातिपदिकादञ् तस्य धर्म्यमित्येतस्मिन्विषये ॥ पोतुर्धर्म्यं पौत्रम् । औद्गात्रम् ।

* नराच्चेति वक्तव्यम् । नरस्य धर्म्या नारी ॥

*विशसितुरिड्लोपश्च ॥ विशसितुर्धर्म्यं वैशस्त्रम् ॥

* विभाजयितुर्णिलोपश्च ॥ विभाजयितुर्धर्म्यं वैभाजित्रम् ॥

१७८३ अवक्रयः ॥ ५० ॥ षष्ठीसमर्थादवक्रय इत्येतस्मिन्नर्थे ठक् स्यात् ॥ शुल्कशालाया अवक्रयः शौल्कशालिकः ॥ आकरिकः ॥

१७८४ तदस्य पण्यम् ॥ ५१ ॥ तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् यत्तत्प्रथमासमर्थं पण्यं चेद्भवति । अपूपाः पण्यमस्य आपूपिकः । मौदकिकः ॥

१७८५ लवणाट्ठञ् ॥ ५२ ॥ अस्माट्ठञ् तदस्य पण्यमित्येतस्मिन्विषये ॥ लवणं पण्यमस्य लावणिकः ॥

१७८६ किशरादिभ्यः ष्ठन् ॥ ५३ ॥ एभ्यः ष्ठन् तदस्य पण्यमित्येतस्मिन्विषये । किशराः पण्यमस्य किशरिकः किशरिकी ॥

१७८७ शलालुनोऽन्यतरस्याम् ॥ ५४ ॥

आग्रमोजनिकः।आपूपिकः । शाष्कुलिकः ॥

१८०० श्राणामांसौदनाट्टिठन् ॥६७॥ आभ्या टिठन् तदस्मै दीयते नियुक्तमित्येतस्मिन्नर्थे ॥ श्राणा नियुक्तमस्मै दीयते श्राणिकः । मांसौदनिकः । मांसौदनिकी ॥

१८०१ भक्तादणन्यतरस्याम् ॥ ६८ ॥ अस्मादण् वा तदस्मै दीयते नियुक्त मित्येतस्मिन्विषये ॥ भक्तमस्मै दीयते नियुक्तं भाक्तः । भाक्तिकः ॥

१८०२ तत्र नियुक्तः ॥ ६९ ॥ सप्तमीसमर्थान्नियुक्त इत्येतस्मिन्नर्थे ठक् ॥ शुल्कशालायां नियुक्तः शौल्कशालिकः । आकरिकः । दौवारिकः ॥

१८०३ अगारान्ताट्ठन् ॥ ७० ॥ अगारशब्दान्तात् ठन् 'तत्र नियुक्त' इत्येतस्मिन्नर्थे ॥ देवागारिकः । कोष्ठागारिकः ॥

१८०६ अध्यायिन्यदेशकालात् ॥ ७१ ॥ सप्तमीसमर्थाद्देशकालवाचिनोऽदेशकालवाचिनः शब्दादध्यायिनि ठक् ॥ अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते तत इदं प्रत्ययविधानम् । श्मशानेऽधीते श्माशानिकः । चातुष्पथिकः । चातुर्दशिकः । आमावास्यिकः ॥

१८०५ कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ॥ ७२ ॥ कठिनशब्दान्तात्सप्तमीसमर्थात्प्रस्तारसंस्थानशब्दाभ्यां च ठक् व्यवहरतीत्येतस्मिन्विषये ॥ वंशकठिने व्यवहरति वांशकठिनिकः । वार्ध्रकठिनिकः । प्रास्तारिकः सांस्थानिकः ॥

१८०६ निकटे वसति ॥ ७३ ॥ सप्तमीसमर्थान्निकटशब्दाद्वसतीत्येतस्मिन्नर्थे ठक् ॥ निकटे वसति नैकटिको भिक्षुः ॥

१८०७ आवसथात् ष्ठल् ॥७४॥ सप्तमीसमर्थादावसथाद्वसतीत्येतस्मिन्नर्थे ष्ठल् स्यात् ॥ आवसथिकः आवसथिकी ॥

१८०८ प्राग्घिताद्यत् ॥ ७५ ॥ तस्मै हितमिति वक्ष्यति प्रागेतस्माद्धितसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामो यत्प्रत्ययस्तेष्वधिकृतो वेदितव्यः । रथ्यः ॥

१८०९ तद्वहति रथयुगप्रासङ्गम् ॥ ७६ ॥ तदिति द्वितीयासमर्थेभ्यो एभ्यो वहतीत्येतस्मिन्नर्थे यत्स्यात् । रथं वहति रथ्यः । युग्यः । प्रासङ्ग्यः । परमरथ्यः ॥

१८१० धुरो यड्ढकौ । ७७ ॥ अस्माद् द्वितीयासमर्थाद्वहतीत्येतस्मिन्नर्थे यड्ढकौ स्तः । धुर्यः धौरेयः ॥

१८११ खः सर्वधुरात् ॥७८॥ द्वितीयासमर्थात्सर्वधुराच्छब्दाद्वहतीत्येतस्मिन्नर्थे खः स्यात् ॥ सर्वधुरां वहति सर्वधुरीणः ॥ खः इति योगविभागः इष्टसंग्रहार्थः उत्तरधुरीणः । दक्षिणधुरीणः ॥

१८१२ एकधुराल्लुक् च ॥ ७९ ॥ एकधुराशब्दाद्द्वितीयासमर्थाद्वहतीत्येतस्मिन्नर्थे खः स्यात् । तस्य लुक् ॥ वचनसामर्थ्यात्पक्षे लुक् ॥ एकधुरीणः । एकधुरः ।

१८१३ शकटादण् । ८० ॥ द्वितीयासमर्थादस्माद्वहतीत्येतस्मिन्नर्थेऽण् स्यात् । शाकटो गौः ॥

१८१४ हलसीराट्ठक् ॥८१॥ हलसीराभ्यां द्वितीयासमर्थाभ्यां वहतीत्यर्थेऽस्मिन्नर्थे ठक् स्यात्॥ हलं वहति हालिकः। सैरिकः॥

१८१५ संज्ञायां जन्याः ॥८२॥ द्वितीयासमर्थाज्जनीशब्दाद्वहतीत्येतस्मिन्नर्थे यत् स्यात्तदन्तस्यानेन संज्ञा गम्यते। जनीं वहति जन्या। जामातुर्वयस्याः॥

१८१६ विध्यत्यधनुषा ॥८३॥ द्वितीयासमर्थाद्विध्यतीत्येतस्मिन्नर्थे यत् न चेद्धनुष्करणम्। पादौ विध्यन्ति पद्याः शर्कराः। ऊरव्याः कण्टकाः॥

१८१७ धनगणं लब्धा ॥८४॥ द्वितीयासमर्थाभ्यां लब्धेत्यस्मिन्नर्थे यत्। धनं लब्धा धन्यः। गण्यः।

१८१८ अन्नाण्णः ॥८५॥ द्वितीयासमर्थादन्नाण्णः स्यात् लब्धा इत्येतस्मिन्नर्थे। अन्नं लब्धा आन्नः॥

१८१९ वशंगतः ॥८६॥ द्वितीयासमर्थाद्वशशब्दाद्गत इत्यर्थे यत् स्यात्। वशं गतः वश्यः॥

१८२० पदमस्मिन् दृश्यम् ॥८७॥ प्रथमासमर्थात्पदशब्दात् दृश्यार्थोपाधिकादस्मिन्निति सप्तम्यर्थे यत्स्यात्। पदं दृश्यमस्मिन् पद्यः कर्दमः॥

१८२१ मूलमस्याबर्हि ॥८८॥ प्रथमासमर्थान्मूलशब्दात् 'आबर्हि' इत्येवमुपाधिकादस्येति षष्ठ्यर्थे यत्स्यात्। मूलमेषाम् आबर्हि मूल्या माषाः॥

१८२२ संज्ञायां धेनुष्या ॥८९॥ धेनुष्येति निपात्यते संज्ञायां धेनोः षुगागमो यच्च प्रत्ययः। धेनुष्या बन्धकीस्थिता।

१८२३ गृहपतिना संयुक्ते ञ्यः ॥९०॥ तृतीयासमर्थात् गृहपतिशब्दात्संयुक्त इत्येतस्मिन्नर्थे ञ्यः स्यात्। गृहपतिना संयुक्तः गार्हपत्योऽग्निः।

१८२४ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ॥९१॥ नावादिभ्यस्तार्यादिष्वर्थेषु यथासंख्यं यत् स्यात्॥ प्रत्ययार्थे ह्यत्र तृतीया समर्थविभक्तिर्लक्ष्यते। नावा तार्यं नाव्यं जलम्। वयसा तुल्यो वयस्यः सखा। धर्मेण प्राप्यं धर्म्यम्। विषेण वध्यो विष्यः। मूलेनानाम्यं मूल्यम्। मूलेन समो मूल्यः। सीतया समितं सीत्यं क्षेत्रम्। तुलया संमितं तुल्यम्॥

१८२५ धर्मपथ्यर्थन्यायादनपेते॥९२॥ पञ्चमीसमर्थेभ्योऽनपेत इत्येतस्मिन्नर्थे यत्स्यात्। धर्मादनपेतं धर्म्यम्। पथ्यम्। अर्थ्यम्। न्याय्यम्॥

१८२६ छन्दसो निर्मिते ॥९३॥ छन्दःशब्दात्तृतीयासमर्थान्निर्मित इत्येतस्मिन्नर्थे यत्स्यात्। छन्दसा निर्मितश्छन्दस्यः।

१८२७ उरसोऽण् च ॥९४॥ उरःशब्दात्तृतीयासमर्थान्निर्मित इत्येतस्मिन्नर्थेऽण्

स्यादापत्) उरसा निर्मितः औरसः उरस्यो वा पुत्रः ॥

१८२८ हृदयस्य प्रियः ॥ ९५ ॥ हृदयशब्दात्षष्ठीसमर्थात्प्रिय इत्येतस्मिन्नर्थे यत्स्यात् । हृदयस्य प्रियो हृद्यो देशः ॥

१८२९ बन्धने चर्षौ ॥ ९६ ॥ हृदयशब्दात्षष्ठीसमर्थाद्बन्धने ऋषावभिधेये यत् स्यात् । ऋषिर्वेदः । हृदयस्य बन्धनम् ऋषिः हृद्यः ॥ परहृदयं येन बध्यते वशीक्रियते स वशीकरणमन्त्रो हृद्यः ॥

१८३० मतजनहलात् करणजल्पकर्षेषु ॥ ९७ ॥ मतादिभ्यः करणादिष्वर्थेषु यत्स्यात्प्रत्ययार्थसामर्थ्याल्लभ्या षष्ठी समर्थविभक्तिः ॥ मतं ज्ञानं तस्य करणं मत्यम् । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः ॥

१८३१ तत्र साधुः ॥ ९८ ॥ तत्रेति सप्तमीसमर्थात्साधुरित्येतस्मिन्नर्थे यत्स्यात् ॥ सामसु साधुः सामन्यः । कर्मण्यः । शरण्यः ॥

१८३२ प्रतिजनादिभ्यः खञ् ॥ ९९ ॥ एभ्यः खञ् स्यात् 'तत्र साधुरित्येतस्मिन्नर्थे । प्रतिजने साधु प्रातिजनीनः ॥

१८३३ भक्ताण्णः ॥१००॥ अस्मात् णः स्यात्तत्र साधुरित्येतस्मिन्नर्थे ॥ भक्ते साधुः भाक्तः शालिः ॥

१८३४ परिषदो ण्यः ॥१०१॥ अस्माण्ण्यः स्यात् तत्र साधुरित्येतस्मिन्विषये ॥ परिषदि साधुः पारिषद्यः ॥ योगविभागात्णोऽपि पारिषदः ॥

१८३५ कथादिभ्यष्ठक् ॥ १०२ ॥ एभ्यष्ठक् तत्र साधुरित्ये तस्मिन्विषये ॥ कथायां साधुः काथिकः ॥

१८३६ गुडादिभ्यष्ठञ् ॥ १०३ ॥ एभ्यष्ठञ् तत्र साधुरित्ये तस्मिन्विषये ॥ गुडे साधुः गौडिकः ॥

१८३७ पथ्यतिथिवसतिस्वपतेर्ढञ् १०४ एभ्यो ढञ् स्यात् तत्रसाधुरित्येतस्मिन्विषये ॥ पाथेयम् । आतिथेयम् । वासतेयम् । स्वापतेयम् ॥

१८३८ सभाया यः ॥ १०५ ॥ सभाशब्दाद्यः स्यात्तत्र साधुरित्ये तस्मिन्विषये ॥ स्वरे विशेषः सभायां साधुः सभ्यः ॥

१८३९ ढश्छन्दसि ॥ १०६ । सभाशब्दाड्ढः स्यात्तत्र साधुरित्येतस्मिन्विषये । सभेयो युवाऽस्य यजमानस्य वीरो जायताम्' ॥ (वाजस० २२।२२ ) ॥

१८४० समानतीर्थे वासी । १०७ ॥ सप्तमीसमर्थात्समानतीर्थशब्याद्वासीत्येतस्मिन्नर्थे यत्स्यात् ॥ समाने तीर्थे वसति सतीर्थ्यः ॥

१८४१ समानोदरे शयित ओ चोदात्तः ॥ १०८ । सप्तमीसमर्थात्समानोदरशब्दात् शयित इत्येतस्मिन्विषये यत्स्यात् ओकारश्चोदात्तः ॥ समानोदरे शयितः समानोदर्यः भ्राता ॥

दूतशब्दात्षष्ठीसमर्थाद्भागे कर्मणि च यत्स्यात्। यदग्ने यासि *दूत्यम् ( ऋ० सं० १।१२।४( दूतभागः दूतकर्म वा।

१८५४ रक्षोयातूनां हननी ॥ १२१ ॥ रक्षःशब्दाद्यातुशब्दाच्च षष्ठीसमर्थाद् 'हननी' इत्येतस्मिन्नर्थे यत्स्यात्। हन्यतेऽनयेति हननी ॥ 'या ते अग्ने †रक्षस्या तनुः' रक्षसां हननी। 'यातव्या' यातूनां हननी।

१८५५ रेवतीजगतीहविष्याभ्यः प्रशस्ये ॥१२२॥ एभ्यः षष्ठीसमर्थेभ्यः प्रशंसने वाच्ये यत् स्यात् ॥ प्रशंसनं प्रशस्यम् । 'यद्वो रेवती रेवत्यम्' (काठक सं० ३।८)। 'यद्वो जगती जागत्यम्' ( काठक सं० ३।८)। 'यद्वो हविष्या हविष्यम्,' (काठक सं० ३।८)। हविषे हिता हविष्याः, तासां प्रशंसनं हविष्यम् ।

१८५६ असुरस्य स्वम् ॥ १२३ ॥ असुरशब्दात्षष्ठीसमर्थात्स्वमित्येतस्मिन्नर्थे यत्स्यात्। 'असुर्या नाम ते लोकाः' ( वाज सं० ४०।३ )।

१८५७ मायायामण् ॥ १२४ ॥ असुरशब्दात्षष्ठी समर्थान्मायायां स्वविशेषेऽण्॥ 'आसुरी माया स्वधया कृतासि' (वा० सं० ११।६९)।

१८५८ तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥१२५ ॥ मतुबन्तात्प्रथमासमर्थात्प्रथमासमर्थात् 'आसाम' इति षष्ठ्यर्थे यत्स्यात् ॥ यत्प्रथमासमर्थमुपधानो मन्त्रश्चेत् स भवति । यच्च 'आसाम्' इति निर्दिष्टम् इष्टकाश्चेत्ताः स्युः । लुक् च मतोरिति प्रकृतिनिर्ह्रासः । इति करणस्तत्र चोद्दिष्टा । तद्वान् इत्य यवेन समुदायो व्यपदिश्यते । वर्चः शब्दो यस्मिन्मन्त्रेऽस्ति स वर्चस्वान् । उपधीयते येन स उपधानः । मन्त्रवचन इत्यर्थः । वर्चस्वानुपधानो मन्त्र आसामिष्टकानाम् इति विगृह्य यति विहिते मतोर्लुकि कृते,'वर्चस्या उपदधाति' तेजस्या उपदधाति' ॥

१८५९ अश्विमानण् ॥१२६॥ अश्वि शब्दो यस्मिन्मन्त्रे सोऽश्विमान् । अश्विमच्छब्दादण् स्यात् । अश्विमानुपधानो मन्त्र आसामिष्टकानामिति विगृह्य अण् विधीयते तत्र मतुपो लुकि कृते 'इनण्य नपत्ये' इति प्रकृतिभावः 'आश्विनी रुपदधाति,' ॥

१८६० वयस्यासु मूर्ध्नो मतुप् ॥१२७॥ वयस्वानुपधानो मन्त्रो या सां ता वयस्याः । तास्वभिधेयासु मूर्ध्नो मतुप् स्यात् यतोपवादः । यस्मिन्मन्त्रे वयःशब्दो मूर्धन्शब्दश्च विद्यते स वयस्वानपि भवति मूर्धन्वानपि । यथा 'मूर्धा वयः प्रजापतिश्छन्दः' इति । तत्र वयस्वच्छब्दादिव मूर्धन्वच्छ-

* 'सर्वे विधीनां छन्दसि वैकल्पिकत्वात् 'यतोऽनावः' इत्याद्युदात्तत्वाप्राप्त्या 'तित्स्वरितम्' इत्येव भवति इति सायन ।

† सायणेन तैत्तिरीय संहितायाम् (१।३।१३) 'रक्षस्या' पदव्याख्याने 'रक्षो रक्षण वदहति' इति व्याख्यातम् ॥

१८६७ सहस्रेण सम्मितौ घः ॥१३४॥ सहस्रशब्दात् तृतीयासमर्थात् सम्मितो इत्यर्थे घः स्यात् ॥ सम्मितस्तुल्यः सदृशः । 'अयमग्निः सहस्रियः' (वा० स० १५।५२) 'सहस्रतुल्य इत्यर्थः ॥

१८६८ मतौ च ॥ १३५ ॥ मत्वर्थे सहस्रशब्दाद् घः स्यात । सहस्रमस्य विद्यते सहस्रियः' ।

१८६९ सोममर्हति यः ॥ १३६ ॥ सोमशब्दाद्द्वितीयासमर्थादर्हतीत्येतस्मिन्नर्थे यः स्यात् ॥ सोममर्हन्ति सोम्या ब्राह्मणाः ॥

१८७० मये च ॥ १३७ ॥ सोमशब्दान्मयेऽर्थे यः स्यात् । आगतविकारावयव-प्रकृता मयडर्थाः । 'सोम्यं मधु' (ऋ० स० ।।१३।१०) सोममयमित्यर्थः ॥

१८७१ मधोः ॥ १३८ ॥ य शब्दो निवृत्तः । मधुशब्दात् मयडर्थे यत् प्रत्ययः स्यात् ॥ मधव्यान् स्तोकान् । मधुमयानित्यर्थः ॥

१८७२ वसोः समूहे च ॥ १३९ ॥ वसुशब्दात् समूहे वाच्ये यत्स्यात् । चात् मयडर्थे । वसव्यः समूहः मयडर्थो वा ॥

* अक्षरसमूहे छन्दसः स्वार्थेउपसंख्यानम् ओश्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । यजेति द्व्यक्षरम् । ये यजामहे इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कारः । एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञो मन्त्रे विहितः ॥ सप्तदशाक्षराण्येव छन्दस्य इत्यर्थः ॥ छन्दःशब्दादक्षरसमूहे वर्तमानात्स्वार्थे यत्प्रत्ययः ॥

* वसुशब्दादपि यत् वक्तव्यः 'हस्तौ गृहीतस्य वसव्यैर्वसव्यै' वसुभिरित्यर्थः । 'अग्निरीशे वसव्यस्य' वसोरित्यर्थः ।

१८७३ नक्षत्राद् घः ॥ १४० ॥ नक्षत्रशब्दाद् घः स्यात्स्वार्थे ॥ नक्षत्रियेभ्यः स्वाहा ॥

१८७४ सर्वदेवात्तातिल् ॥१४१॥ सर्वदेवशब्दाभ्यां तातिल् छन्दसि स्वार्थिकः । सर्वतातिः । देवतातिः ॥

१८७५ शिवशमरिष्टस्य करे ॥ १४२ ॥ शिवादिभ्यः षष्ठीसमर्थेभ्यः करे इत्येतस्मिन्नर्थे तातिल् स्यात् । शिवं करोति शिवतातिः । शंतातिः, अरिष्टतातिः ॥

१८७६ भावे च ॥ १४३ ॥ भावे चार्थे छन्दसि विषये शिवादिभ्यस्तातिल् प्रत्ययः स्यात् ॥ शिवस्य भावः शिवतातिः, शंतातिः अरिष्टतातिः ॥ यतः पूर्णोऽवधिः । इति चतुर्थाध्यायस्य चतुर्थः पादः अध्यायश्च समाप्तः ॥

इति श्रीसकलगुणमहीयस्सकलमहितरणपारावारसागरसमुद्रसमुद्भूतकामधेनुना सवाईजयपुरनगराधीश श्रीमन्महाराजाधिराजसवाईईश्वरसिंह सहधर्मिण्या रूपकुमारी

ख्यापवादः ॥ सर्वस्मै हितम् सार्वम् । पौरुषेयम् ।

* सर्वाण्णस्य वा वचनम् । सार्वीयम् ॥

* पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम् । पौरुषेयो वधः विकारः समूहो वा । तेन कृते पौरुषेयो ग्रन्थः ॥

१८८७ माणवचरकाभ्यां खञ् ॥११॥ आभ्यां खञ् तस्मै हितमित्येतस्मिन्विषये॥ माणवीनम् । चारकीणम् ॥

१८८८ तदर्थं विकृतेः प्रकृतौ ॥ १२ ॥ विकृतिवाचिनः प्रकृत्यामभिधेयायां यथा विहित प्रत्ययः स्यात् विकृत्यर्थायां प्रकृतौ सामर्थ्याल्लभ्या चतुर्थी समर्थविभक्तिः ॥ अङ्गारेभ्यो हितानि अङ्गारीयाणि काष्ठानि प्राकारीया इष्टकाः । शङ्कव्य दारु । पिचव्यः कार्पासः ॥

११८९ छदिरुपधिबलेर्ढञ् ॥ १३ ॥ एभ्यो ढञ् तदर्थं विकृतेः प्रकृतावित्येतस्मिन्विषये ॥ छादिषेयाणि तृणानि । औपधेय दारु । बालेयास्तण्डुलाः ॥

१८९० ऋषभोपानहोर्ञ्यः ॥ १४ ॥ आभ्यां ञ्यः स्यात् तदर्थं विकृतेः प्रकृतावित्येतस्मिन्विषये ॥ आर्षभ्यो वत्सः । आपानह्यो मुञ्जः । औपानह्य चर्म ॥

१८९१ चर्मणोऽञ् ॥ १५ ॥ चर्मणो या विकृतिस्तद्वाचिनोऽञ् तदर्थं विकृतेः प्रकृतावित्येतस्मिन्विषये । वार्ध्रं चर्म ॥ वारत्रं चर्म ॥

१८९२ तदस्य तदस्मिन्स्यादिति॥१६॥ प्रथमासमर्थात्षष्ठ्यर्थे सप्तम्यर्थे च यथाविहित प्रत्ययः स्यात् यत्तत्प्रथमासमर्थं स्याच्चेद्भवति [ ] इति करणस्तत्रेद्विवक्षा ॥ प्राकार आसामिष्टकानां स्यात् प्राकारीया इष्टकाः । प्रासादीय दारु । सप्तम्यर्थे प्राकारोऽस्मिन्देशे स्यात् प्राकारीयो देशः । प्रासादीया भूमिः ॥

१८९३ परिखाया ढञ् ॥१७॥ अस्माढ्ढञ् । तदस्य तदस्मिन्स्यादित्ये तस्मिन् विषये ॥ पारिखेया भूमिः ॥ छयतोः पूर्णोऽवधिः ॥

१८९४ प्राग्वतेष्ठञ् ॥ १८ ॥ 'तेन तुल्य क्रिया चेद्वतिः' (५।१।११५) इत्यतः प्राक् ठञधिक्रियते ॥ पारायणिकः ॥

१८९५ आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥ १९ ॥ 'तदर्हति' (५।१।६३) इत्येतत्पर्यन्त ठगधिक्रियते गोपुच्छादीन् वर्जयित्वा ॥ नैष्किकम् ॥

१८९६ असमासे निष्कादिभ्यः ॥२०॥ निष्कादिभ्योऽसमासे ठक् आर्हीयेष्वर्थेषु ॥ नैष्किकम् ॥

१८९७ शताच्च ठन्यतावशते ॥ २१ ॥ शतशब्दात् ठन्यतौ स्तोऽशतेऽभिधेये ॥ शतेन क्रीतम् शत्यम् शतिकम् । शते तु शतं परिमाणमस्य शतकम् निदानम् ॥

१८९८ संख्याया अतिशदन्तायाः कन्

१९०८ विंशतिकात्खः ॥ ३२ ॥ अध्यर्धपूर्वाद्द्विगोश्च विंशतिकशब्दान्ताद्दार्हीयेष्वर्थेषु खः स्यात् । अध्यर्धविंशतिकीनम् द्विविंशतिकीनम् त्रिविंशतिकीनम् ॥ विधानसामर्थ्यान्न लुक् ।

१९०९ खार्या ईकन् ॥ ३४ ॥ अध्यर्धपूर्वाद्द्विगोश्च खारीशब्दान्ताद्दार्हीयेष्वर्थेषु ईकन् स्यात् । अध्यर्धखारीकम् द्विखारीकम्

* केवलाच्चेति वक्तव्यम् खारीकम् ॥

* काकिण्याश्चोपसंख्यानम् । अध्यर्धकाकिणीकम् द्विकाकिणीकम् त्रिकाकिणीकम् ॥

* केवलायाश्च काकिणीकम् ॥

१९१० पणपादमाषशताद्यत् ॥ ३४ ॥ अध्यर्धपूर्वाद् द्विगोश्च पणपादमाषशतशब्दान्ताद्दार्हीयेषु यत् ॥ अध्यर्धपण्यम् द्विपण्यम् त्रिपण्यम् । अध्यर्धपाद्यम् द्विपाद्यम् त्रिपाद्यम् । अध्यर्धमाष्यम् द्विमाष्यम् त्रिमाष्यम् । अध्यर्धशत्यम् द्विशत्यम् त्रिशत्यम् ॥

१९११ शाणाद्वा ॥ ३५ ॥ शाणशब्दादध्यर्धपूर्वाद् द्विगोश्चार्हीयेष्वर्थेषु वा यत् ॥ अध्यर्धशाण्यम् अध्यर्धशाणम् । द्विशाणम् त्रिशाणम् द्विशाण्यम् त्रिशाण्यम् ॥

* शताच्चेति वक्तव्यम् । अध्यर्धशत्यम् अध्यर्धशतम् ॥ द्विशत्यम् द्विशतम् । त्रिशत्यम् त्रिशतम् ॥

१९१२ द्वित्रिपूर्वादण् च ॥ ३६ ॥ द्वित्रिपूर्वाच्छाणान्तात्प्रातिपदिकाद्दार्हीयेष्वर्थेषु अण् स्याच्चाद्यद् वा । द्विशाण्यम् द्वैशाणम् द्विशाणम् । त्रिशाण्यम् त्रैशाणम् त्रिशाणम् ।

१९१३ तेन क्रीतम् ॥ ३७ ॥ ठञादयस्त्रयोदश प्रत्ययाः प्रकृतास्तेषामितः प्रभृति समर्थविभक्तयः प्रत्ययार्थाश्च निर्दिश्यन्ते । तेनेति तृतीयासमर्थात्क्रीतमित्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् ॥ सप्तत्या क्रीतं साप्ततिकम् आशीतिकम् नैष्किकम् ॥

१९१४ तस्य निमित्तं संयोगोत्पातौ ॥ ३८ ॥ तस्येति षष्ठीसमर्थान्निमित्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् यन्निमित्तं संयोगश्चेत्स भवति उत्पातो वा ॥ शतस्य निमित्तं धनपतिना संयोगः शत्यः शतिकः । साहस्रः । शतस्य निमित्तमुत्पातो दक्षिणाक्षिस्पन्दनम् । शत्यम् शतिकम् साहस्रम् ॥

* निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् । वातस्य शमनं कोपनं वा वातिकम् पैत्तिकम् श्लैष्मिकम् ॥

* संनिपाताच्चेति वक्तव्यम् । सान्निपातिकम् ॥

१९१५ गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ॥ ३९ ॥ गोशब्दाद् द्व्यचश्च संख्यापरिमाणाश्वादिविवर्जिताद्यत् स्यात् 'तस्य निमित्तं संयोगोत्पातौ' इत्यस्मिन्

विषये । गोनिमित्तं संयोगः उत्पातो वा गव्यः । यत्‌ः धन्यम् । स्वर्ग्यम् । यशस्यम् । आयुष्यम् ।

* ब्रह्मवर्चसादुपसंख्यानम् । ब्रह्मवर्चसस्य निमित्तं संयोगः ब्रह्मवर्चस्यम् ।

१९१६ पुत्राच्छ च ॥ ४० ॥ अस्माच्छः स्यात् चाद्यत् । तस्य निमित्तं संयोगोत्पातावित्येतस्मिन्विषये ॥ पुत्रस्य निमित्तं संयोगः उत्पातो वा पुत्रीयम् पुत्र्यम् ।

१९१७ सर्वभूमिपृथिवीभ्यामणञौ ॥ ४१ ॥ आभ्यामणञौ स्तस्तस्य निमित्तं संयोगोत्पातावित्येतस्मिन्विषये । सर्वभूमेर्निमित्तं संयोगः उत्पातो वा सार्वभौमः पार्थिवः ।

१९१८ तस्येश्वरः ॥ ४२ ॥ तस्येति षष्ठीसमर्थाभ्यां सर्वभूमिपृथिवीशब्दाभ्यामणञौ स्तः ॥ ईश्वर इत्येतस्मिन्विषये । सर्वभूमेरीश्वरः सार्वभौमः । पार्थिवः ।

१९१९ तत्र विदित इति च ॥ ४३ ॥ तत्रेति सप्तमीसमर्थाभ्यां सर्वभूमिपृथिवीशब्दाभ्यामणञौ स्तो विदित इत्येतस्मिन्नर्थे । सर्वभूमौ विदितः सार्वभौमः पार्थिवः ।

१९२० लोकसर्वलोकाट्ठञ् ॥ ४४ ॥ सप्तमीसमर्थाभ्यामाभ्यां 'विदितः' इत्येतस्मिन्विषये ठञ् स्यात् । लोके विदितः लौकिकः । सार्वलौकिकः ।

१९२१ तस्य वापः ॥ ४५ ॥ तस्येति षष्ठीसमर्थात् वाप इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् । प्रस्थस्य वापः क्षेत्रं प्रास्थिकम् । द्रौणिकम् । खारीकम् ।

१९२२ पात्रात्ष्ठन् ॥ ४६ ॥ पात्रात् ष्ठन् स्यात् तस्य वाप इत्येतस्मिन्विषये । पात्रस्य वापः पात्रिकं क्षेत्रम् । पात्रिकी क्षेत्रभक्तिः ।

१९२३ तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ४७ ॥ तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययः स्यात्, यत्प्रथमासमर्थं वृद्ध्यादि चेद्दीयते । पञ्चास्मिन्वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते । पञ्चकः । सप्तकः । शत्यः शतिकः । साहस्रः ।

* चतुर्थ्यर्थ उपसंख्यानम् । पञ्चास्मै वृद्धिर्वा आयो वा लाभो वा उपदा वा दीयते पञ्चको देवदत्तः ।

१९२४ पूरणार्धाट्ठन् ॥ ४८ ॥ पूरणवाचिनः शब्दादर्धशब्दाच्च ठन् स्यात् 'तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते' इत्येतस्मिन्नर्थे । द्वितीयो वृद्ध्यादिरस्मिन्दीयते द्वितीयिकः । तृतीयिकः । पञ्चमिकः । सप्तमिकः अर्धिकः ।

१९२५ भागाद्यच्च ॥ ४९ ॥ भागशब्दाद्यत्स्यात् चाट्ठन् च तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते इत्येतस्मिन्नर्थे । भागो वृद्ध्यादिरस्मिन्दीयते भाग्यम् भागिकम् शतम् । भाग्या भागिका विंशतिः ।

१९२६ तद्धरति वहति आवहति भाराद् वंशादिभ्यः ॥५०॥ तदिति द्वितीयासमर्थाद् वंशादिभ्यः परो यो भारशब्दः तदन्ताद् हरतीत्यादिष्वर्थेषु यथाविहितं प्रत्ययः स्यात् । वंशभारं हरति वहति आवहति वा वांशभारिकः ।

१९२७ वस्नद्रव्याभ्यां ठन्कनौ ॥५१॥ द्वितीयासमर्थाभ्यामाभ्यां ठन्कनौ यथासंख्यं स्तो हरत्यादिष्वर्थेषु । वस्नं हरति वहति वा वास्निकः । द्रव्यकः ॥

१९२८ संभवत्यवहरति पचति ॥५२॥ द्वितीयासमर्थात्संभवत्यादिष्वर्थेषु यथाविहितं प्रत्ययः स्यात् । प्रस्थं संभवति अवहरति पचति वा प्रास्थिकः । कौडविकः । खारीकः ॥

* तत्पचतीति द्रोणादण् च । द्रौणी द्रौणिकी ॥

१९२९ आढकाचितपात्रात्खोऽन्यतरस्याम् ॥ ५३ ॥ द्वितीयासमर्थेभ्य एभ्यः संभवत्यादिष्वर्थेषु खः स्याद्वा ॥ आढकं संभवति अवहरति पचति वा आढकीना आढकिकी । आचितीना आचितिकी । पात्रीणा पात्रिकी ॥

१९३० द्विगोः ष्ठंश्च ॥ ५४ ॥ आढकाचितपात्रान्ताद् द्विगोः संभवत्यादिष्वर्थेषु ष्ठन् स्यात् । चात्खो वा । विधानसामर्थ्यादेवानयोर्लुग् न । द्व्याढकिकी द्व्याढकीना द्व्याढकी । द्व्याचितिकी द्व्याचितीना द्व्याचिता । द्विपात्रिकी द्विपात्रीणा द्विपात्री ॥

१९३१ कुलिजाल्लुक्खौ च ॥ ५५ ॥ कुलिजशब्दान्ताद्द्विगोः संभवत्यादिष्वर्थेषु लुक्खौ स्तः । चात् ष्ठन् । अन्यतरस्यांग्रहणानुवृत्त्या लुगपि विकल्प्यते द्वे कुलिजे संभवति अवहरति पचति वा द्विकुलिजिकी द्विकुलिजीना द्विकुलिजा द्वैकुलिजिकी ॥

१९३२ सोऽस्यांशवस्नभृतयः ॥५६॥ स इति प्रथमासमर्थाद् अस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात् यत्प्रथमासमर्थम् अंशवस्नभृतयश्चेत्ताः स्युः ॥ अंशो भागः, वस्नो मूल्यम्, भृतिर्वेतनम्, पञ्च अंशो वस्नो वा भृतिर्वा अस्य पञ्चकः । सप्तकः । साहस्रः ॥

१९३३ तदस्य परिमाणम् ॥ ५७ ॥ तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात् यत्प्रथमासमर्थं परिमाणं चेत्तद्भवति ॥ प्रस्थः परिमाणमस्य प्रास्थिको राशिः । खारीकः शत्यः शतिकः साहस्रः द्रौणिकः कौडविकः । वर्षशतं परिमाणमस्य वार्षशतिकः । वार्षसाहस्रिकः ॥

१९३४ संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु ॥ ५८ ॥ संख्यावाचिनः परिमाणोपाधिकात्प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात् । संज्ञासङ्घसूत्राध्ययनेष्वर्थेषु । पञ्चैव पञ्चकाः शकुनयः त्रिकाः शालङ्कायनाः ॥ पञ्च परि-

दिकाच्छन्दसि 'तदर्हति' इत्येतस्मिन्विषये यत्स्यात् ॥ उदक्या । वृत्तयः । यूप्यः पलाशः' 'गर्त्यो देशः' ॥

१९४४ पात्राद् घंश्च ॥ ६८ ॥ पात्राद् घस्स्यात् । चाद् यत् 'तदर्हति' इत्येतस्मिन्नर्थे । पात्रमर्हति पात्रयः । पात्रियः ॥

१९४५ कडङ्करदक्षिणाच्छ च ॥६९॥ आभ्या छः स्यात् । चाद् यत्, 'तदर्हति' इत्येतस्मिन्नर्थे॥ कडङ्करमर्हति कडङ्करीयो गौः । कडङ्कर्यः । दक्षिणामर्हति दक्षिणीयो भिक्षुः दक्षिण्यो ब्राह्मणः ॥

१९४६ स्थालीबिलात् ॥७०॥ स्थालीबिलमर्हति ,स्थालीबिलीयास्तण्डुलाः । स्थालीबिल्याः ॥

१९४७ यज्ञर्त्विग्भ्यां घखञौ ॥ ७१ ॥ आभ्यां यथासङ्ख्यं घखञौ स्तः 'तदर्हति' इत्येतस्मिन्विषये ॥ यज्ञियो ब्राह्मणः । आर्त्विजीनो ब्राह्मणः ॥

* यज्ञर्त्विग्भ्यां तत्कर्माहतीत्युपसंख्यानम् यज्ञकर्मार्हति यज्ञियो देशः । आर्त्विजीनम् ब्राह्मणकुलम् । आर्हीयाणां ठगादीनां पूर्णोऽवधिः ॥ अतः परं ठञेव ॥

१९४८ पारायणतुरायणचान्द्रायणं वर्तयति ॥ ७२ ॥ द्वितीयासमर्थेभ्य एभ्यो 'वर्तयति' इत्येतस्मिन्नर्थे ठञ्स्यात् ॥ पारायणं वर्तयति पारायणिकः । तौरायणिकः । चान्द्रायणिकः ॥

१९४९ संशयमापन्नः ॥७३॥ द्वितीयासमर्थादस्मात् 'आपन्नः' इत्येतस्मिन्नर्थे ठञ्स्यात् । संशयमापन्नः सांशयिकः ॥

१९५० योजनं गच्छति ॥ ७४ ॥ द्वितीयासमर्थाद् योजनशब्दात् 'गच्छति' इत्येतस्मिन्नर्थे ठञ् स्यात् । योजनं गच्छति यौजनिकः ॥

* क्रोशशतयोजनशतयोरुपसंख्यानम् क्रोशशतं गच्छति क्रौशशतिकः यौजनशतिकः ॥

* ततोऽभिगमनमर्हतीति च क्रोशशतयोजनशतयोरुपसंख्यानम् क्रोशशताभिगमनमर्हति क्रौशशतिको भिक्षुः यौजनशतिक आचार्यः ॥

१९५१ पथः ष्कन् ॥७५॥ पथिन् शब्दाद् द्वितीयासमर्थाद् 'गच्छति' इत्यस्मिन्नर्थे ष्कन्स्यात् ॥ पन्थानं गच्छति पथिकः पथिकी ॥

१९५२ पन्थो ण नित्यम् ॥ ७६ ॥ पथः पन्थ इत्यादेशः स्यात् णश्च प्रत्ययो 'नित्यं गच्छति' इत्यस्मिन्विषये ॥ पन्थानं नित्यं गच्छति पान्थः ॥

१९५३ उत्तरपथेनाहृतं च ॥ ७७ ॥ उत्तरपथशब्दात् तृतीयासमर्थाद् 'आहृत' मित्येतस्मिन्नर्थे ठञ् स्यात् चकारः प्रत्ययार्थसमुच्चये 'गच्छति' इति च ॥ उत्तरपथेनाहृतम् औत्तरपथिकम् उत्तरपथेन गच्छति औत्तरपथिकः ॥

* आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम् । वारिपथेनाहृत

चित्तवत्यभिधेये वर्षशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषूत्पन्नस्य प्रत्ययस्य नित्य लुक् । द्विवर्षो दारकः ।

१९६६ षष्टिकाः षष्टिरात्रेण पच्यन्ते ९०

षष्टिरात्रशब्दात्तृतीयासमर्थात्कन् निपात्यते 'पच्यन्ते' इत्येतस्मिन्नर्थे रात्रिशब्दस्य च लोपः । षष्टिरात्रेण पच्यन्ते षष्टिकाः संज्ञेयं धान्य विशेषस्य । तेन मुद्गादिष्वतिप्रसङ्गो न भवति ॥

१९६७ वत्सरान्ताच्छश्छन्दसि ॥९१॥

वत्सरान्तान्निर्वृत्तादिष्वर्थेषु छन्दसि छः स्यात् । इद्वत्सरीयः । इदावत्सरीयः ॥

१९६८ संपरिपूर्वात्ख च ॥९२॥ संपरिपूर्वाद् वत्सरान्तात्प्रातिपदिकाच्छन्दसि खः स्याच्छश्च । संवत्सरीणः, परिवत्सरीणः । संवत्सरीयः परिवत्सरीयः ॥

१९६९ तेन परिजय्यलभ्यकार्यसुकरम् ॥९३॥ तृतीयासमर्थात्कालवाचिन एष्वर्थेषु ठञ्स्यात् । मासेन परिजय्यो मासिको व्याधिः । मासेन लभ्यः मासिकः पटः । मासेन कार्यम् मासिकम् । मासेन सुकरः मासिकः ॥

१९७० तदस्य ब्रह्मचर्यम् ॥ ९४ ॥

तदिति द्वितीया समर्थात्काल वाचिनोऽस्येति षष्ठ्यर्थे ठञ्स्याद् ब्रह्मचर्यं चेद्गम्यते ॥ मास ब्रह्मचर्यमस्य मासिको ब्रह्मचारी । अर्धमासिक सांवत्सरिकः ॥

अपरा वृत्तिः प्रथमासमर्थाद् अस्येति षष्ठ्यर्थे ठञ् । यत्तदस्येति निर्दिष्टं ब्रह्मचर्यं चेद्भवति । मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम् ॥

* महानाम्न्यादिभ्यः षष्ठी समर्थेभ्य उपसंख्यानम् । माहानाम्निकम् । गौदानिकम् । आदित्यव्रतिकम् ॥

* तच्चरतीति च । महानाम्न्य ऋचः तत्सहचरित व्रतम् तच्छब्देनोच्यते । महानाम्नीश्चरति-माहानाम्निकः । आदित्यव्रतिकः । गौदानिकः ॥

* अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः । अवान्तरदीक्षा चरति अवान्तरदीक्षी तिलव्रती ॥

* अष्टाचत्वारिंशतो ड्वुंश्च डिनिर्वक्तव्यः अष्टाचत्वारिंशद् वर्षाणि व्रत चरति अष्टाचत्वारिंशकः अष्टाचत्वारिंशी ॥

* चातुर्मास्यानां यलोपश्च ड्वुंश्च वक्तव्यः । चातुर्मास्यानि चरति चातुर्मासिकः चातुर्मासी ॥

* चतुर्मास्याण् ण्यो यज्ञे । तत्र भवे । चतुर्षु मासेषु भवानि चातुर्मास्यानि ॥

* संज्ञायामण् वक्तव्यः । चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी । आषाढी । कार्तिकी । फाल्गुनी ॥

१९७१ तस्य च दक्षिणा यज्ञाख्येभ्यः ॥ ९५ ॥ तस्येति षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यो दक्षिणा इत्येतस्मिन्नर्थे ठञ्स्यात् अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी ॥ वाजपेयिकी राजसूयिकी ॥

शब्दात् यत् 'तदस्य प्राप्तम्' इत्यस्मिन्विषये कालः प्राप्तोऽस्य कालयस्तापः ।

१९८४ प्रकृष्टे ठञ् ॥ १०८ ॥ प्रकर्षे वर्तमानात्कालात् प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे ठञ् स्यात् । प्रकृष्टः कालोऽस्य कालिकम् ॥

१९८५ प्रयोजनम् ॥ १०९ ॥ प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् स्यात्तत्प्रथमासमर्थं प्रयोजनं चेद्भवति । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् ॥

१९८६ विशाखाषाढादण्मन्थदण्डयोः ॥ ११० ॥ आभ्यामण् स्यात् 'तदस्य प्रयोजनम्' इत्येतस्मिन्विषये मन्थदण्डयोः । विशाखा प्रयोजनमस्य वैशाखो मन्थः । आषाढो दण्डः ॥

* चूडादिभ्य उपसंख्यानम् । चूडा प्रयोजनमस्य चौडम् । श्रद्धा प्रयोजनमस्य श्राद्धम् ॥

१९८७ अनुप्रवचनादिभ्यश्छः ॥ १११ ॥ एभ्यश्छः स्यात् 'तदस्य प्रयोजनमित्येतस्मिन्विषये । अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम् । उत्थापनीयम् ॥

* विशिपूरिपतिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानम् । गृहप्रवेशनं प्रयोजनमस्य गृहप्रवेशनीयम् । प्रपापूरणीयम् । अश्वपतनीयम् । प्रासादारोहणीयम् ॥

* स्वर्गादिभ्यो यद्वक्तव्यः । स्वर्गः प्रयोजनमस्य स्वर्ग्यम् । यशस्यम् । आयुष्यम् काम्यम् । धन्यम् ॥

* पुण्याहवाचनादिभ्यो लुग्वक्तव्यः । पुण्याहवाचनम् प्रयोजनमस्य पुण्याहवाचनम् । स्वस्तिवाचनम् । शान्तिवाचनम् ॥

१९८८ समापनात्सपूर्वपदात् ॥ ११२ ॥ सपूर्वपदात्समापनशब्दाच्छः स्यात् 'तदस्य प्रयोजनम्' इत्येतस्मिन्विषये ॥ छन्दःसमापनं प्रयोजनमस्य छन्दःसमापनीयम् । व्याकरणसमापनीयम् ॥

१९८९ ऐकागारिकट् चौरे ॥ ११३ ॥ ऐकागारिकट् इति निपात्यते चौरेऽभिधेये एकागारं प्रयोजनमस्य ऐकागारिकश्चौरः ऐकागारिकी ॥

१९९० आकालिकडाद्यन्तवचने ॥ ११४ ॥ आकालिकट् इति निपात्यते आद्यन्तवचने समानकालशब्दस्याकालशब्द आदेशः ॥ समानकाल आद्यन्तावस्य आकालिकः स्तनयित्नुः । आकालिकी विद्युत् ।

* आकालाट्ठंश्च वाच्यः ॥ आकालिका विद्युत् । अत्र पूर्वोऽवधिः ॥

१९९१ तेन तुल्यं क्रिया चेद्वतिः ॥ ११५ ॥ तेनेति तृतीयासमर्थात् 'तुल्यम्' इत्यर्थे वतिः स्याद् यत्तुल्यं क्रिया चेत्सा स्यात् ॥ ब्राह्मणेन तुल्यं वर्तते ब्राह्मणवत् । राजवत् ॥

१९९२ तत्र तस्येव ॥ ११६ ॥ तत्रेति सप्तमीसमर्थात् तस्येतिषष्ठीसमर्थाच्च इवार्थे वतिः स्यात् ॥ मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः । देवदत्तस्येव देवदत्तवद् यज्ञदत्तस्य गावः ।

१९९३ तदर्हम् ॥ ११७ ॥ तदिति द्वितीयासमर्थात् 'अर्ह'मित्येतस्मिन्नर्थे वति

भ्यां यः स्याद्भावकर्मणोः । सख्यम् ॥

[ * दूतवणिग्भ्यां चेति वक्तव्यम् दूत्यम् वाणिज्यम् ॥ इति काशिका ॥]

२००३ कपिज्ञात्योर्ढक् ॥ १२७ ॥ आभ्यां ढक् स्यात् भावकर्मणोः । कपेर्भावः कर्म वा कापेयम् ज्ञातेयम् ॥

२००४ पत्यन्तपुरोहितादिभ्यो यक् ॥१२८॥ एभ्यो यक् भावकर्मणोः ॥ सेनापतेर्भावः कर्म वा सैनापत्यम् ॥ पौरोहित्यम् ॥

२००५ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ॥ १२९ ॥ प्राणभृज्जातिवाचिभ्यो वयोवचनेभ्य उद्गात्रादिभ्यश्चाञ् स्याद्भावकर्मणोः ॥ अश्वस्य भावः कर्म वा आश्वम् । औष्ट्रम् ॥ कौमारम् । कैशोरम् ॥ औद्गात्रम् ॥

२००६ हायनान्तयुवादिभ्योऽण् ॥१३०॥ हायनान्तेभ्यो युवादिभ्यश्चाण् स्याद्भावकर्मणोः ॥ द्विहायनस्य कर्म भावो वा द्वैहायनम् । त्रैहायनम् ॥

२००७ इगन्ताच्च लघुपूर्वात् ॥१३१॥ इगन्ताच्च लघुपूर्वादण् स्याद्भावकर्मणोः ॥ शुचेर्भावः कर्म वा शौचम् । मौनम् ॥ कथं भाव नागरकस्य हरीतक्या भाव हारीतकम् पाटवम् लाघवम् ॥ गौरवम् ।

२००८ योपधाद् गुरूपोत्तमाद्वुञ् १३२। यकारोपधाद्गुरूपोत्तमाद्वुञ् स्याद्भावकर्मणोः । रमणीयस्य भावः कर्म वा रामणीयकम् । चासनीयकम् ॥ [सहायाद्वेति वक्तव्यम् । साहायकम् साहाय्यम् ॥ काशिका]

२००९ द्वन्द्वमनोज्ञादिभ्यश्च ॥ १३३ ॥ द्वन्द्वसंज्ञकेभ्यो मनोज्ञादिभ्यश्च वुञ् स्याद्भावकर्मणोः । गोपालपशुपालानां भावः कर्म वा गोपालपशुपालिका । शैष्योपाध्यायिका कौत्सकुशिकिका ॥ मानोज्ञकम् ॥

२०१० गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ॥ १३४ ॥ गोत्रवाचिभ्यश्चरणवाचिभ्यश्च वुञ् स्याद्भावकर्मणोः श्लाघादिषु विषयभूतेषु ॥ गार्गिकया श्लाघते । काठिकया श्लाघते । गार्ग्यत्वेन कठत्वेन विकत्थते इत्यर्थः ॥ गार्गिकया अत्याकुरुते काठिकयाऽत्याकुरुते गार्ग्यत्वेन परानधिक्षिपतीत्यर्थः । गार्गिकामवेतः काठिकामवेतः गार्ग्यत्वं कठत्वं वा प्राप्त इत्यर्थः ॥ तद्भावगतवानित्यर्थः ॥

२०११ होत्राभ्यश्छः ॥१३५॥ ऋत्विग्विशेषवाचिभ्यश्छः स्याद्भावकर्मणोः ॥ अच्छावाकस्य भावः कर्म वा अच्छावाकीयम् । मैत्रावरुणीयम् । ब्राह्मणाच्छंसीयम् आग्नीध्रीयम् । प्रतिप्रस्थात्रीयम् । त्वष्ट्रीयम् ।

२०१२ ब्रह्मणस्त्वः ॥ १३६ ॥ ब्रह्मन् शब्दाद्धोत्रावाचिनस्त्वः स्याद्भावकर्मणोः ॥ ब्रह्मणो भावः कर्म वा ब्रह्मत्वम् ॥

स्नञ्स्नञोरधिकारः समाप्तः ॥

इति पञ्चमाध्यायस्य प्रथमः पादः ॥

---

२०१३ धान्यानां भवने क्षेत्रे खञ् ॥१॥ धान्यविशेषवाचिभ्यः षष्ठीसमर्थेभ्यो भवने

ऽस्मिन्विषये तस्मात्खञ्भवने क्षेत्रे स्यात् ॥ मुद्गानां भवनं क्षेत्रं मौद्गीनम्, कौद्रवीणम्, कौलत्थीनम् ॥

२०१४ व्रीहिशाल्योर्ढक् ॥ २ ॥ आभ्यां ढक् स्याद्भवने क्षेत्रे । व्रीहीणां भवनं क्षेत्रं व्रैहेयम्, शालेयम् ॥

२०१५ यवयवकषष्टिकाद्यत् ॥ ३ ॥ एभ्यो यत्स्याद्भवने क्षेत्रे ॥ यवानां भवनं क्षेत्रं यव्यम् । यवक्यम् । षष्टिक्यम् ॥

२०१६ विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥ ४ ॥ एभ्यो वा यत्स्याद्भवने क्षेत्रे । तिलानां भवनं क्षेत्रं तिल्यं तैलीनम् । माष्यम् माषीणम् । उम्यम् औमीनम् । भङ्ग्यम् भाङ्गीनम् । अणव्यम् आणवीनम् ॥

२०१७ सर्वचर्मणः कृतः खखञौ ॥ ५ ॥ तृतीयासमर्थात्सर्वचर्मणः कृत इत्यस्मिन्नर्थे खखञौ स्तः । सर्वशब्दश्चर्मणा सह समासे कृतेन सम्बध्यते न चर्मणा । तत्रायमसमर्थसमासो द्रष्टव्यः । सर्वेण चर्मणा कृत इत्येतस्मिन्नर्थे वृत्तिः । सर्वचर्मीणः सार्वचर्मीणः ॥

२०१८ यथामुखसम्मुखस्य दर्शनः खः ॥ ६ ॥ षष्ठीसमर्थाभ्यामाभ्यां दर्शन इत्येतस्मिन्नर्थे खः स्यात् । दृश्यतेऽस्मिन्निति दर्शनः ॥ यथामुखं दर्शनः यथामुखीनः । समस्य मुखस्य दर्शनः सम्मुखीनः ॥

२०१९ तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ॥ ७ ॥ सर्वादेः पथिन्, अङ्ग, कर्मन्, पत्र, पात्र इत्येतदन्तात् प्रातिपदिकाद् द्वितीयासमर्थात् 'व्याप्नोति' इत्यस्मिन्नर्थे खः प्रत्ययः स्यात् । सर्वपथं व्याप्नोति सर्वपथीनो रथः । सर्वाङ्गीणस्तापः । सर्वकर्मीणः पुरुषः । सर्वपत्रीणः सारथिः । सर्वपात्रीणः ओदनः ।

२०२० आप्रपदं प्राप्नोति ॥ ८ ॥ इति द्वितीयासमर्थात् आप्रपदशब्दात् 'प्राप्नोति' इत्यस्मिन्नर्थे खः स्यात् । आप्रपदं प्राप्नोति आप्रपदीनः पटः ॥

२०२१ अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ ९ ॥ अनुपदादिभ्यः त्रिभ्यः स्वविति द्वितीयासमर्थेभ्यो बद्धा भक्षयति नेय इत्येतेष्वर्थेषु खः स्यात् । अनुपदं बद्धा अनुपदीना उपानत् । सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः । अयः प्रदक्षिणम् अनयः प्रसव्यम् । प्रदक्षिण-प्रसव्य-गामिनां या शारीणां परस्य पदस्यादिः पदानामसमावेशे ऽयानयः अयानयं नेयो अयानयीनः शारः फलकविशेषस्थित इत्यर्थः ।

२०२२ परोवरपरम्परपुत्रपौत्रमनुभवति ॥ १० ॥ परोवर परम्पर पुत्रपौत्र इत्येतेभ्यः द्वितीयासमर्थेभ्यो ऽनुभवतीत्यस्मिन्नर्थे खः स्यात् ॥

* परोवरेति परस्यौत्वमवरस्य च निपातनेन निपात्यते । परांश्चावरांश्चानुभवति परोवरीणः ॥

*परपरतराणां च परम्परभावो निपात्यते परांश्च परतरांश्चानुभवति परम्परीणः । पुत्रपौत्राननुभवति पुत्रपौत्रीणः ॥ परम्पर

शब्दो विनापि प्रत्ययेन दृश्यते 'मन्त्र-परम्परा मन्त्रं वितन्ति इति, तद्व्याख्यान्तर मेव द्रष्टव्यम् ॥

२०२३ अवारपारात्यन्तानुकामं गामी ॥ ११ ॥ अवारपार अत्यन्त अनुकाम इत्येतेभ्यो द्वितीयासमर्थेभ्यो गामीत्ये-तस्मिन्नर्थे खः स्यात् । अवारपारं गामी अवारपारीणः ॥

*अवारपारात् विपरीताच्च पारावारीण ।

* विगृहीतादपीष्यते अवारीण पारीणः। अत्यन्तं गामी अत्यन्तीनः ॥ अनुकामं गामी अनुकामीनः ॥

२१२४ समांसमां विजायते ॥ १२ ॥ समांसमामिति वीप्सायाम् सुबन्तसमुदायः प्रकृतिः । विजायते गर्भं धारयति प्रत्ययार्थः । गर्भधारणेन सकलापि समा व्याप्यते इति अत्यन्तसंयोगे द्वितीया । समांसमां विजायते समांसमीना गौः ॥ पूर्वपदे सुपोऽलुग्वक्तव्यः ॥ केचित्तु समायां समायां विजायत इति विगृह्णन्ति गर्भमोचने तु विजनिर्वर्तते इत्याहुः । तेषां पूर्वपदे यलोपश्च निपात्यते । परिशिष्टस्या-लुग्वक्तव्यः । अनुत्पत्त्यानुत्तरपदस्य च वा यलोपो वक्तव्यः * । समांसमां विजायते समायां समायाम् इति वा ॥

२०२५ अद्यश्वीनावष्टब्धे ॥ १३ ॥ अद्यश्वीन इति निपात्यते अवष्टब्धे विजने आसन्ने प्रसवे ॥ अद्य श्वो वा विजायते अद्यश्वीना गौः ॥ केचित्तु विजायते इति नानुवर्तयन्ति अवष्टब्धमात्रे निपातन मित्याहुः ॥ अद्यश्वीनं मरणम् अद्यश्वीनो वियोग इति ॥

२०२६ आगवीनः ॥ १४ ॥ आगवीन इति निपात्यते । आगवीनः कर्मकरः । यो गवा भृतः कर्म करोति आ तस्य गोः प्रत्यर्पणात् ।

२०२७ अनुग्वलं गामी ॥ १५ ॥ अनुगुशब्दाद् अलं गामीत्यस्मिन्नर्थे खः स्यात् । अनुगु पर्याप्तं गच्छति अनुगवीनो गोपालः ।

२०२८ अध्वनो यत्खौ ॥ १६ ॥ द्वितीयासमर्थादध्वनशब्दाद् 'अलंगामी' इत्येतस्मिन्नर्थे यत्खौ स्तः ॥ अध्वानमलं गामी अध्वन्यः । अध्वनीनः ॥

२०२९ अभ्यमित्राच्छ च ॥ १७ ॥ अभ्यमित्राद् द्वितीयासमर्थाद् 'अलंगामी' इत्यस्मिन्नर्थे छः स्यात् । चाद्यत्खौ ॥ अभ्यमित्रमलं गामी अभ्यमित्रीयः । अभ्यमित्र्यः अभ्यमित्रीणः । अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः ॥

२०३० गोष्ठात्खञ् भूतपूर्वे ॥ १८ ॥ गोष्ठशब्दाद्भूतपूर्वोपाधिकात्स्वार्थे खञ् स्यात् ॥ गोष्ठे भूतपूर्वः गौष्ठीनो देशः ॥

२०३१ अश्वस्यैकाहगमः ॥ १९ ॥ अश्वशब्दात्षष्ठीसमर्थात् 'एकाहगम' इत्ये तदर्थे खञ् स्यात् ॥ एकाहेन गम्यते इत्ये काहगमः । अश्वस्यैकाहगमोऽध्वा आश्वीनः । आश्वीनानि शतं पतित्वा ॥

२०३२ शालीनकौपीने अधृष्टाकार्ययोः

*भवने क्षेत्रे इक्ष्वादिभ्यः शाकटशाकिनौ इक्षुशाकटम् । इक्षुशाकिनम् मूलकशाकिनम् ॥ ]

२०४२ अवात्कुटारच्च ॥ ३० ॥ अवशब्दात्कुटारच् प्रत्यय स्यात् ॥ चात्कटच् ॥ अवकुटारम् अवकटम् ॥

२०४३ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ॥ ३१ ॥ अवादेते स्युर्नासिकाया. सम्बन्धिनि नते स्वार्थयाम् ॥ नासिकाया नतम् अवटीटम् । अवनाटम् । अवभ्रटम् इति ॥

२०४४ नेर्बिडज्बिरीसचौ ॥ ३२ ॥ निशब्दान्नासिकाया नते बिडच्बिरीसचौ स्त. ॥ निबिडम् निबिरीसम् । तद्योगान्नासिकापि पुरुषोऽपि निबिडो निबिरीस ॥

२०४५ इनच्पिटच्चिक चि च ॥ ३३॥ निशब्दान्नासिकाया नतेऽभिधेये इनच् पिटच् इत्येतौ प्रत्ययौ स्तस्तत्सन्नियोगेन च निशब्दस्य चिक चि इत्यादेशौ स्तः ॥ चिकिन· चिपिट. ॥

*क्कारः प्रत्ययो वक्तव्यश्चिक्च प्रकृत्यादेशः ॥ चिक्क. ॥

* क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी क्लिन्ने चक्षुषी अस्य चिल्ल· पिल्ल· ॥]

* चुलादेशो वक्तव्यः चुल्लः ॥

२०४६ उपाधिभ्यां त्यकन्नासन्नारूढयोः ॥ ३४ ॥ आसन्नारूढयोवर्तमानाभ्यामाभ्या स्वार्थे त्यकन ॥ पर्वतस्यासन्नं उपत्यका तस्यैवारूढाऽधित्यका ॥

२०४७ कर्मणि घटोऽठच् ॥ ३५ ॥ कर्मशब्दात्सप्तमीसमर्थाद् 'घट' इत्येतस्मिन्नर्थेऽठच् स्यात् ॥ कर्मणि घटते कर्मठ· ॥]

२०४८ तदस्य संजातं तारकादिभ्य इतच् ॥ ३६ ॥ तदिति प्रथमासमर्थेभ्यस्तारकादिभ्योऽस्येति षष्ठ्यर्थे इतच् स्यात्॥ तारकाः सजाता अस्य तारकित नभ । पुष्पितो वृक्ष· ॥ तारकादिराकृतिगण ॥

२०४९ प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥ ३७ ॥ प्रथमासमर्थाद् 'अस्य' इति षष्ठ्यर्थे द्वयसच् दघ्नच् मात्रच. स्युः, यत्तत प्रथमासमर्थं प्रमाण चेत्तद्भवति ॥ ऊरु· प्रमाणमस्य ऊरुद्वयसम् ऊरुदघ्नम् ऊरु· मात्रम् ॥

* प्रमाणे लो वक्तव्यः प्रमाणेभ्य उत्पन्नस्य प्रत्ययस्य लुग् ॥ शमः प्रमाणमस्य शम । दिष्टि· । वितस्ति ।

* द्विगोर्नित्यम् द्वौ शमौ प्रमाणमस्य द्विशम· । त्रिशम ॥

* डट् स्तोमे वक्तव्यः । पञ्चदशः स्तोमः पञ्चदशी रात्रिः ॥

* शन्शतोर्डिनिर्वक्तव्यः पञ्चदशिनोऽर्ध मासा· त्रिंशिनो मासा ॥

* विंशतेश्चेतिवक्तव्यम् विंशिनो ऽङ्गिरस·

* प्रमाणपरिमाणाभ्यां संख्यायाश्चापि

॥ ४५ ॥ तदिति प्रथमासमर्थाद्दशान्तादस्मिन्निति सप्तम्यर्थे दशान्ताड्डः स्यात् यत्तत्प्रथमासमर्थमधिकं चेत्तत्स्यात् ॥ एकादश अधिका अस्मिञ्शते एकादशं शतम् । एकादशं सहस्रम् ॥ द्वादशं शतम् । द्वादशं सहस्रम् ॥

२०५८ शदन्तविंशतेश्च ॥ ४६ ॥ शदन्तात्प्रातिपदिकाद्विंशतेश्च डः स्यात् अस्मिन्नधिकमित्येतस्मिन्विषये ॥ त्रिंशदधिका अस्मिन्शते त्रिंशं शतम् एकत्रिंशं शतम् ॥

* संख्याग्रहणं च कर्तव्यम् इहमाभूत् गोत्रिंशदधिका अस्मिन्गोशते इति ॥

* विंशतेश्च तदन्तादपीति वक्तव्यम् । एकविंशं शतम् ॥

* संख्याग्रहणं च कर्तव्यम् । इह माभूत् गोविंशतिरधिका अस्मिन् गोशते ।

२०५९ संख्याया गुणस्य निमाने मयट् ॥ ४७ ॥ तदिति प्रथमासमर्थात्संख्यावाचिनः प्रातिपदिकात् 'अस्य' इति षष्ठ्यर्थे मयट् स्याद् यत्तत्प्रथमासमर्थं गुणस्य चेन्निमाने वर्तते ॥ यवानां द्वौ भागौ निमानमस्योदश्वितो भागस्य द्विमयमुदश्विद्यवानाम् । त्रिमयम् । चतुर्मयम् ॥ भागेपि तु विधीयमानः प्रत्ययः प्राधान्येन भागमन्वमाचष्टे । तेन सामानाधिकरण्यम् ॥ द्विमयमुदश्वित् ॥

२०६० तस्य पूरणे डट् ॥ ४८ ॥ षष्ठीसमर्थात्संख्यावाचिन 'पूरणे' इत्यस्मिन्नर्थे डट् स्यात् ॥ एकादशानां पूरण एकादशः । त्रयोदशः ॥

२०६१ नान्तादसंख्यादेर्मट् ॥ ४९ ॥ नान्तात्संख्यावाचिनोऽसंख्यादेः परस्य डटो मडागमः ॥ पञ्चमः सप्तमः ॥

२०६२ थट् च च्छन्दसि ॥ ५० ॥ नान्तादसंख्यादेः परस्य डटश्छन्दसि थडागमः । चान्मट् ॥ 'पर्णमयानि पञ्चथानि भवन्ति' । पञ्चथः । सप्तथः' । 'पञ्चममिन्द्रियस्यापाक्रामत्' ॥

२०६३ षट्कतिकतिपयचतुरां थुक् ॥ ५१ ॥ एषां डटि परतस्थुगागमः ॥ षण्णां पूरणः षष्ठः । कतिथः । कतिपयथः । अत एव ज्ञापकाड्डट् ॥ चतुर्थः ॥

* चतुरश्छयतावाद्यक्षरलोपश्च चतुर्णां पूरणः तुरीयः तुर्यः ॥

२०६४ बहुपूगगणसङ्घस्य तिथुक् ॥ ५२ ॥ एषां डटि तिथुगागमः स्यात् ॥ पूगसङ्घशब्दयोरसंख्यावाचित्वादिदमेव ज्ञापकं डटो भावस्य ॥ बहूनां पूरणो बहुतिथः । पूगतिथः । गणतिथः । सङ्घतिथः ॥

२०६५ वतोरिथुक् ॥ ५३ ॥ वतोर्डटि परत इथुगागमः । यावतां पूरणो यावतिथः । तावतिथः एतावतिथः ॥

२०६६ द्वेस्तीयः ॥ ५४ ॥ द्विशब्दात्तीयप्रत्ययः स्यात् ॥ द्वयोः पूरणो द्वितीयः ॥

२०६७ त्रेः संप्रसारणं च ॥ ५५ ॥ त्रिशब्दात्तीयः प्रत्ययः 'तस्य पूरणे' इत्येतस्मिन्विषये डटोऽपवादः, संप्रसारणं च ॥ त्रयाणां पूरणः तृतीयः ॥

दैशकः ॥ बहुवचनं स्वाङ्गसमुदायादपि यथा स्यात्—दन्तौष्ठकः, केशनखकः ॥

२०७९ उदराट्ठगाद्यूने ॥६७॥ सप्तमीसमर्थादुदरशब्दात्प्रसित इत्येतस्मिन्नर्थे ठक् स्यादाद्यूने ॥ उदरे प्रसितः औदरिकः आद्यूनः ॥

२०८० सस्येन पारजातः ॥ ६८ ॥ सस्यशब्दात्तृतीयासमर्थात्परिजात इत्यस्मिन्नर्थे कन् स्यात् ॥ सस्येन परिजातः सस्यकः शालिः । सस्यकः साधुः । सस्यको मणिः ॥

२०८१ अंशं हारी ॥ ६९ ॥ अंशशब्दाद् द्वितीयासमर्थाद्धारीत्यस्मिन्नर्थे कन्स्यात् ॥ अंशं हारी अंशको दायादः । अंशकः पुत्रः ।

२०८२ तन्त्रादचिरापहृते ॥ ७० ॥ पञ्चमीसमर्थादचिरापहृत इत्यस्मिन्नर्थे कन्स्यात् ॥ तन्त्रादचिरापहृतः तन्त्रकः पटः । तन्त्रकः प्रावारः ॥

२०८३ ब्राह्मणकोष्णिके संज्ञायाम् ॥७१॥ ब्राह्मणक उष्णिक इत्येतौ शब्दौ निपात्येते कन्प्रत्ययान्तौ संज्ञाया विषये ॥ ब्राह्मणको देशः । उष्णिका यवागूः । यत्र आयुधजीविनो ब्राह्मणाः सन्ति तत्र ब्राह्मणक इति संज्ञा । अल्पान्ना यवागूरुष्णिका इत्युच्यते ॥

२०८४ शीतोष्णाभ्यां कारिणि ॥७२॥ शीतोष्णाभ्यां कारिण्यभिधेये कन्स्यात् ॥ शीतं करोतीति शीतकः अलसः । उष्णं करोति उष्णकः शीघ्रकारी ॥

२०८५ अधिकम् ॥७३॥ अधिकमिति निपात्यते अध्यारूढस्योत्तरपदलोपः कन्च प्रत्ययः ॥ अधिको द्रोणः खार्याम् । अधिका खारी द्रोणेन ।

२०८६ अनुकाभिकाभीकः कमिता ॥ ७४ ॥ एते कन्प्रत्ययान्ता निपात्यन्ते 'कमिता' इत्यस्मिन्नर्थे । अभेः पक्षे दीर्घत्वं च निपात्यते ॥ अनुकामयते अनुकः । अभिकः अभीकः ॥

२०८७ पार्श्वेनान्विच्छति ॥ ७५ ॥ पार्श्वशब्दात् तृतीयासमर्थादन्विच्छतीत्यस्मिन्नर्थे कन्स्यात् ॥ अनृजुरुपायः पार्श्वम् । तेनान्विच्छति पार्श्वकः ॥

२०८८ अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ॥ ७६ ॥ तृतीयासमर्थाभ्यामाभ्यामन्विच्छतीत्यस्मिन्नर्थे ठक्ठञौ स्तः ॥ तीक्ष्ण उपायो ऽयःशूलमुच्यते । तेनान्विच्छति आयःशूलिकः । दम्भो दण्डाजिनं, तेनान्विच्छति दाण्डाजिनिकः दाम्भिकः ॥

२०८९ तावतिथं ग्रहणमिति लुग्वा ॥७७॥ पूरणप्रत्ययान्तात्प्रातिपदिकाद्ग्रहणोपाधिकात्स्वार्थे कन्स्यात् ॥ पूरणस्य प्रत्ययस्य वा लुग् ॥ द्वितीयेन रूपेण ग्रन्थं गृह्णाति द्विकं ग्रहणम् द्वितीयकम् ॥ त्रिकम्, तृतीयकम्, चतुष्कम् चतुर्थकम् ।

* तावतिथेन गृह्णातीति कन्वक्तव्य पूरणप्रत्ययस्य च नित्यं लुक् । षष्ठेन रूपेण ग्रन्थं गृह्णाति षट्को देवदत्तः । पञ्चकः । चतुर्थकः ॥

२०९० स एषां ग्रामणीः ॥ ७८

२१०२ अनुपद्यन्वेष्टा ॥ ९० ॥ अनुपदीति निपात्यतेऽन्वेष्टा चेत्स भवति ॥ पदस्य पश्चादनुपदम् अनुपदी गवाम् ॥ अनुपदो बद्धाणाम् ॥

२१०३ साक्षाद्द्रष्टरि संज्ञायाम् ॥ ९१ ॥ साक्षाच्छब्दोऽव्ययम्। तस्मादिनिः स्याद् द्रष्टरि वाच्ये। साक्षाद् द्रष्टा साक्षी साक्षिणौ

२१०४ क्षेत्रियच् परक्षेत्रे चिकित्स्यः ॥ ९२ ॥ क्षेत्रियशब्दो निपात्यते 'परक्षेत्रे चिकित्स्य' इत्येतस्मिन्वाक्यार्थे पदवचनम् ॥ परक्षेत्रे चिकित्स्यः क्षेत्रियो व्याधिः। क्षेत्रियं कुष्ठम्। परक्षेत्रं जन्मान्तरशरीरं तत्र चिकित्स्यः क्षेत्रियः ॥

२१०५ इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ॥ ९३ ॥ इन्द्रियमित्यतोऽद्यन्तं शब्दरूपं निपात्यते। रूढिरेषा चक्षुरादीनां करणानाम्। व्युत्पत्तेरनियम इत्याह-इन्द्रशब्दात्षष्ठीसमर्थाल्लिङ्गमित्येतस्मिन्नर्थे घच् प्रत्ययः। इन्द्रस्य लिङ्गमिन्द्रियम्। इन्द्रेण दृष्टम् इन्द्रियम्। तृतीयासमर्थात्प्रत्ययः। इन्द्रेण सृष्टम् इन्द्रियम्। इन्द्रेण जुष्टं इन्द्रियम्। इन्द्रेण दत्तम्। इति शब्दः प्रकारार्थः सति सम्भवे व्युत्पत्तिरन्यथापि कर्तव्या रूढेर नियमात् ॥ 'इति वा' शब्दः प्रत्येकमभिसम्बध्यमानो विकल्पाना स्वातन्त्र्यं दर्शयति ॥

२१०६ तदस्यास्त्यस्मिन्निति मतुप् ॥ ९४ ॥ तदिति प्रथमासमर्थाद्'अस्य' इति षष्ठ्यर्थे 'अस्मिन्' इति सप्तम्यर्थे वा मतुप्स्यात् यत्तत्प्रथमासमर्थमस्ति चेत्तत्स्यात्। इति करणास्तित्वविवक्षा, 'गावोऽस्य सन्ति' गोमान् देवदत्तः 'वृक्षा अस्मिन्सन्ति' वृक्षवान्पर्वतः। यवमान् प्लक्षवान्। इति करणाद्युविषयनियमः ॥

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥

गोमान्, कुष्ठी, रूपवती कन्या। क्षीरिणो वृक्षाः। उदरिणी कन्या। दण्डी। अस्तिमान् ॥

* गुणवचनेभ्यो मतुपो लुगिष्टः। शुक्लो गुणोऽस्यास्तीति शुक्लः पटः। कृष्णः। श्वेतः ॥

२१०६ रसादिभ्यश्च ॥ ९५ ॥ रसादिभ्यो मतुप्स्यात् तदस्यास्त्यस्मिन्नित्येतस्मिन्विषये। रसवान् रूपवान् ॥

२१०७ प्राणिस्थादातो लजन्यतरस्याम् ॥ ९६ ॥ प्राणिस्थवाचिनः शब्दादाकारान्ताल्लच् वा स्यान्मत्वर्थे। चूडालः चूडावान्। कर्णिकालः, कर्णिकावान्।
* प्राण्यङ्गादिति वक्तव्यम्। इह मा भूत्-चिकीर्षास्यास्ति चिकीर्षावान् ॥

२१०८ सिध्मादिभ्यश्च ॥ ९७ ॥ एभ्यो लज्वा स्यान्मत्वर्थे। सिध्मलः सिध्मवान्। पङ्कुलः पङ्कुमान् ॥

२१०९ वत्सांसाभ्यां कामबले ॥ ९८ ॥ आभ्यां लच् कामवति बलवति चार्थे। वत्सलः। अंसलः ॥

ऋ० सं० १०।१०२।२ ) । 'सुमङ्गलीरियं वधूः' (ऋ० सं० ७।८५।३३) ॥ वनिप्-'मघवानमीमहे' ॥ चकारमतुपो म 'उद्भा च उद्भवी च' ॥

*मेधारथाभ्यामिरन्निरचौ वक्तव्यौ । मेधिरः रथिरः ॥

२१२१ गाण्ड्यजगात्संज्ञायाम् ॥११०॥ आभ्यां वः स्यात्संज्ञायाम् मत्वर्थे । गाण्डीवं धनुः । अजगवम् धनुः । ह्रस्वादपि गाण्डिवं धनुरिति ॥

२१२२ काण्डाण्डादीरन्नीरचौ ॥१११॥ आभ्यामीरन्नीरचौ स्तो मत्वर्थे ॥ काण्डीरः आण्डीरः ॥

२१२३ रजःकृष्यासुतिपरिषदो वलच् ॥ ११२ ॥ रजः प्रभृतिभ्यो वलच्स्यान्मत्वर्थे ॥ रजस्वला स्त्री । कृषीवलः कुटुम्बी । आसुतीवलः शौण्डिकः ॥ परिषद्वलो राजा ॥

* वलच्प्रकरणेऽन्येभ्योपि दृश्यते इति वक्तव्यम् । भ्रातृवलः पुत्रवलः उत्साहवलः ।

२१२४ दन्तशिखात्संज्ञायाम् ॥११३॥ आभ्यां वलच्स्यान्मत्वर्थे संज्ञायाम् ॥ दन्तावलः सैन्यः दन्तावलः गजः ॥ शिखावलं नगरम् शिखावला स्थूणा ॥

२१२५ ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ॥११४॥ ज्योत्स्नादयो मत्वर्थे निपात्यन्ते संज्ञायाम् । ज्योत्स्ना चन्द्रप्रभा । तमिस्रा रात्रिः । शृङ्गिणः । ऊर्जस्वी ऊर्जस्वलः । गोमी । मलिनः । मलीमसः ॥

२१२६ अत इनिठनौ ॥११५॥ अकारान्तात्प्रातिपदिकादिनिठनौ स्तः । दण्डी दण्डिकः । छत्री छत्रिकः । दण्डवान् छत्रवान् ॥

एकाक्षरात्कृतो जातेःसप्तम्यां च न तौ स्मृतौ ॥ स्ववान् । कारकवान् । व्याघ्रवान् । दण्डा अस्यां सन्ति दण्डवती शाला । कचिद्भवति कार्यी तण्डुली तण्डुलिकः ॥

२१२७ व्रीह्यादिभ्यश्च ॥ ११६ ॥ व्रीह्यादिभ्य इनिठनौ स्तो मत्वर्थे वा ॥ व्रीही व्रीहिकः व्रीहिमान् ॥

२१२८ तुन्दादिभ्य इलच्च ॥११७॥ एभ्य इलच्स्यान्मत्वर्थे । चादिनिठनौ मतुप् च ॥ तुन्दिलः तुन्दी तुन्दिकः तुन्दवान् ॥

२१२९ एकगोपूर्वाट्ठञ् नित्यम् ॥११८॥ एकपूर्वाद्गोपूर्वाच्च नित्यं ठञ्स्यान्मत्वर्थे । ऐकशतिकः ऐकसहस्रिकः गौशतिकः गौसहस्रिकः ॥

२१३० शतसहस्रान्ताच्च निष्कात् ॥ ११९॥ निष्कात्परौ याभ्यामाभ्यां ठञ्मत्वर्थे । निष्कशतमस्यास्ति नैष्कशतिकः । नैष्कसहस्रिकः ॥

२१३१ रूपादाहतप्रशंसयोर्यप् ॥१२०॥ आहतप्रशंसाविशिष्टार्थे वर्तमानाद्रूपशब्दाद्यप्स्यान्मत्वर्थे ॥ आहतं रूपमस्य

२१४० वातातिसाराभ्यां कुक् च ॥१२९॥ वातातिसारशब्दाभ्यामिनिः स्यात्तत्सन्नियोगेन च तयोः कुगागमः ॥ वातकी । अतिसारकी ॥

* पिशाचाच्चेति वक्तव्यम् । पिशाचकी ।

* रोगे चायमिष्यते इह न भवति 'वातवती गुहा' इति ॥

२१४१ वयसि पूरणात् ॥ १३० ॥ पूरणप्रत्ययान्तात्प्रातिपदिकादिनिर्मत्वर्थे वयसि द्योत्ये ॥ पञ्चमोऽस्यास्ति मासः संवत्सरो वा पञ्चमी उष्ट्रः । नवमी । दशमी ।

२१४२ सुखादिभ्यश्च ॥१३१॥ सुखादिभ्य इनिर्नियम्यते मत्वर्थे । सुखी । दुःखी ॥

२१४३ धर्मशीलवर्णान्ताच्च ॥१३२॥ धर्माद्यन्तादिनिर्मत्वर्थे नियम्यते । ब्राह्मणधर्मी ब्राह्मणशीली ब्राह्मणवर्णी ॥

२१४४ हस्ताज्जातौ ॥१३३॥ हस्तशब्दादिनिर्नियम्यते मत्वर्थे । समुदायेन जातिश्चेदभिधीयते ॥ हस्ती ॥

२१४५ वर्णाद् ब्रह्मचारिणि ॥१३४॥ वर्णशब्दादिनिर्नियम्यते । समुदायेन ब्रह्मचारी चेदभिधीयते ॥ वर्णी ॥

२१४६ पुष्करादिभ्यो देशे ॥१३५॥ पुष्करादिभ्य इनिर्नियम्यते समुदायेन चेद्देशोऽभिधीयते ॥ पुष्करिणी । पद्मिनी

* बलाद्बाहूरुपूर्वादुपसंख्यानम् ॥ बाहुबली ऊरुबली ॥

* सर्वादेरिनिः ॥ सर्वधनी सर्वबीजी ॥

* अर्थाच्चासंनिहिते ॥ अर्थी ॥

* तदन्ताच्च ॥ धान्यार्थी हिरण्यार्थी ॥

२१४७ बलादिभ्यो मतुबन्यतरस्याम् ॥१३६॥ एभ्यो मतुप् । अन्यतरस्याम्ग्रहणेन इनिः समुच्चीयते ॥ बलवान् बली । उत्साहवान् उत्साही ॥

२१४८ संज्ञायां मन्माभ्याम् ॥१३७॥ मन्नन्तान्मशब्दान्ताच्च इनिर्मत्वर्थे । समुदायेन चेत्संज्ञा गम्यते ॥ प्रथिमिनी दामिनी मशब्दान्तात् होमिनी सोमिनी ॥

२१४९ कंशंभ्यां ब-भ-युस्-ति-तु-त-यसः ॥१३८॥ कम् शम् इत्येताभ्यामेते स्युर्मत्वर्थे । कम्बः शम्बः । कम्भः शम्भः । कंयुः शंयुः । कन्तिः शन्तिः । कन्तुः शन्तुः । कन्तः शन्तः । कंयः शंयः सकारो भसंज्ञां बाधित्वा पदसंज्ञार्थः । भसंज्ञायामनुस्वारपरसवर्णौ न स्याताम् ॥

२१५० तुन्दि-बलि-वटेर्भः ॥१३९॥ एभ्यो भः स्यान्मत्वर्थे । तुन्दिभः । बलिभः । वटिभः ।

२१५१ अहंशुभमोर्युस् ॥ १४० ॥ अहमित्यव्ययमहङ्कारे वर्तते शुभमित्यव्ययम् शुभपर्यायः, ताभ्यां युस् स्यान्मत्वर्थे । अहंयुः अहङ्कारवान् । शुभंयुः कल्याणवान् इत्यर्थः ॥

इति पञ्चमाध्यायस्य द्वितीयः पादः ॥

२१५२ प्राग्दिशो विभक्तिः ॥ १ ॥ 'दिक्शब्देभ्य' इत्यतः प्राग् विभक्तिसंज्ञाः स्युः ॥ यतः ततः ॥ इतः परं स्वार्थिकाः ।

तस्मै भवते—ततो भवते तत्र—भवते । तस्माद्भवतः—ततो भवतः तत्र भवतः । तस्मिन्भवति—ततोभवति तत्रभवति ॥ एवं दीर्घायुःप्रभृतिष्वप्युदाहार्यम् ॥

२१६६ सर्वैकान्यकियत्तदः काले दा ॥ १५ ॥ सर्वादिभ्यः प्रातिपदिकेभ्यो दा स्यात् सप्तम्यर्थे काले ॥ सर्वस्मिन्काले सर्वदा एकदा अन्यदा कदा यदा तदा ॥

२१६७ इदमो र्हिल् ॥ १६ ॥ इदमः सप्तम्यन्तात्काले वर्तमानात् र्हिल् स्यात् । हस्यापवादः ॥ अस्मिन्काले एतर्हि ॥

२१६८ अधुना ॥ १७ ॥ इदमोऽश्भावोऽधुनाच प्रत्ययः ॥

२१६९ दानीं च ॥ १८ ॥ इदमः सप्तम्यन्तात्काले वर्तमानात् 'दानीम्' स्यात् ॥ अस्मिन्काले इदानीम् ॥

२१७० तदो दा च ॥ १९ ॥ तदः सप्तम्यन्तात्काले वर्तमानात् 'दा' स्याद्दानीं च ॥ तस्मिन्काले तदा तदानीम् ।

२१७१ तयोर्दार्हिलौ च छन्दसि ॥ २० ॥ तयोरिदमः तदश्च यथासंख्यं दार्हिलौ प्रत्ययौ स्तः छन्दसि ॥ चाद्यथाप्राप्तम् ॥ इदावत्सरीय. । तर्हि । इदानीम् तदानीम् ।

२१७२ अनद्यतने र्हिलन्यतरस्याम् ॥ २१ ॥ किं सर्वनाम बहुभ्यः सप्तम्यन्तेभ्योऽनद्यतने कालविशेषे वर्तमानेभ्यो र्हिल्प्रत्ययः स्याद्वा ॥ कर्हि कदा । यर्हि यदा । तर्हि तदा ॥

२१७३ सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ २२ ॥ सद्यः प्रभृतयः शब्दा निपात्यन्ते प्रकृतिः प्रत्यय आदेशः कालविशेष इति सर्वमेतन्निपातनाल्लभ्यते ॥ समानेऽहनि सद्यः । पूर्वस्मिन्संवत्सरे परुत् । पूर्वतरे संवत्सरे परारि । अस्मिन्संवत्सरे ऐषमः । परस्मिन्नहनि परेद्यवि । अस्मिन्नहनि अद्य । पूर्वस्मिन्नहनि पूर्वेद्युः । अन्यस्मिन्नहनि अन्येद्युः । अधरस्मिन्नहनि अधरेद्युः । उभयोरह्नोः उभयेद्युः । उत्तरस्मिन्नहनि उत्तरेद्युः

* द्युश्चोभयाद्वक्तव्यः । उभयद्युः ॥

२१७४ प्रकारवचने थाल् ॥ २३ ॥ प्रकारवृत्तिभ्यः किंसर्वनामबहुभ्यः स्वार्थे थाल् स्यात् ॥ येन प्रकारेण यथा तथा सर्वथा ॥

२१७५ इदमस्थमुः ॥ २४ ॥ 'इदम्' शब्दात्प्रकारवचने थमुः ॥ अनेन प्रकारेण इत्थम् ॥

२१७६ किमश्च ॥ २५ ॥ किंशब्दात्प्रकारवचने थमुः स्यात् ॥ केन प्रकारेण कथम् ।

२१७७ था हेतौ च छन्दसि ॥ २६ ॥ किंशब्दाद्धेतौ वर्तमानात्था स्यात्प्रकारवचने छन्दसि ॥ कथा ग्रामं न पृच्छसि' केन हेतुना न पृच्छसीत्यर्थः । कथा देवा

॥३५॥ उत्तराधरदक्षिणशब्देभ्य एनप् स्यादाऽस्तातेरर्थेऽदूरे चेदवधिमानवधेर्भवति। विभक्तित्रये प्रकृतेऽपञ्चम्या इति पञ्चमी पर्युदस्यते। तेनात्र सप्तमीप्रथमे साक्षाद्विधीयते॥ उत्तरेण वसति उत्तराद्वसति उत्तरतो वसति। उत्तरेण रमणीयम् उत्तराद्रमणीयम् उत्तरतो रमणीयम्। अधरेण वसति अधराद्वसति अधस्ताद्वसति। अधरेण रमणीयम्। अधराद्रमणीयम् अधस्ताद्रमणीयम्। दक्षिणेन वसति दक्षिणाद्वसति दक्षिणतो वसति। दक्षिणेन रमणीयम्॥ दक्षिणाद्रमणीयम् दक्षिणतो रमणीयम्॥

२१८७ दाक्षिणादाच् ॥३६॥ दक्षिणशब्दादाच् स्यादस्तातेरर्थे॥ दक्षिणा वसति दक्षिणा रमणीयम्॥

२१८८ आहि च दूरे ॥३७॥ दक्षिणशब्दादाहिः स्यादस्तातेरर्थे। चादाच्। दूरे चेदवधिमानवधेर्भवति। दक्षिणाहि वसति दक्षिणा वसति। दक्षिणाहि रमणीयम्॥

२१८९ उत्तराच्च ॥३८॥ उत्तरशब्दादाजाही प्रत्ययौ स्तोऽस्तातेरर्थे। दूरे चेदवधिमानवधेर्भवति॥ उत्तरा वसति उत्तराहि वसति। उत्तरा रमणीयम्। उत्तराहि रमणीयम्॥

२१९० पूर्वाधरावराणामसि पुरधवश्चैषाम् ॥३९॥ एभ्योऽसि प्रत्ययोऽस्तातेरर्थे तत्सन्नियोगेन चैषां यथासंख्यं पुर् अध् अव् एते आदेशाः स्युः॥ पुरो वसति पुर आगतः पुरो रमणीयम्। अधो वसति अध आगतः अधो रमणीयम्। अवो वसति अव आगतः अवो रमणीयम्॥

२१९१ अस्ताति च ॥४०॥ अस्ताति प्रत्यये परतः पूर्वादीनां यथासंख्यं पुरादय आदेशाः। इदमेवादेशविधानं ज्ञापकमस्तातिरेभ्यो भवति। पुरस्ताद्वसति पुरस्तादागतः पुरस्ताद्रमणीयम्। अधस्ताद्वसति अधस्तादागतः अधस्ताद्रमणीयम्॥

२१९२ विभाषावरस्य ॥४१॥ अवरस्यास्तातौ वा 'अव्' स्यात्। अवस्ताद्वसति अवस्तादागतः अवस्ताद्रमणीयम् अवरस्ताद्वसति अवरस्तादागतः अवरस्ताद्रमणीयम्॥

२१९३ संख्याया विधार्थे धा ॥४२॥ संख्यावाचिभ्यो विधार्थे वर्तमानेभ्यो धा स्यात् स्वार्थे॥ विधा प्रकारः। स च क्रियाविषय एव गृह्यते। एकधा भुङ्क्ते। द्विधा[1] (ऋ० सं० १।५६।६) गच्छति। त्रिधा (ऋ० सं० १।११७।२४)। चतुर्धा (ऋ० सं० ४।३५।२)। पञ्चधा॥

२१९४ अधिकरणविचाले च ॥४३॥

कुरु। अणुधा कुरु। अनेकधा कुरु॥

अधिकरणविचाले गम्यमाने संख्याया स्वार्थे धा स्यात्॥ एकं राशिं पञ्चधा

१ द्विधा—त्रिधा इत्यनयोः प्रत्ययस्वरो न वैकल्पिकत्वात् छन्दसि सर्वविधीनाम्।

च्चति अयमेषामतिशयेन पचति पचतितमाम् ॥ जल्पतितमाम् ॥

२२०८ द्विवचनविभज्योपपदे तरबीयसुनौ ॥ ५७ ॥ द्वयोरर्थे विभज्ये चोपपदे प्रातिपदिकात्तिङन्ताच्चातिशयने तरबीयसुनौ स्तः ॥ द्वाविमावाढ्यौ अयमनयोरतिशयेनाढ्यतरः । सुकुमारतरः । पचतितराम् जल्पतितराम् । द्वाविमौ पटू अयमनयोरतिशयेन पटुः पटीयान् लघीयान् । विभज्योपपदे माथुराः पाटलिपुत्रकेभ्य आढ्यतराः अभिरूपतराः पटीयांसः लघीयांसः ॥

२२०९ अजादी गुणवचनादेव ॥ ५८ ॥ इष्ठनीयसुनावजादी सामान्येन विहितौ तयोरयं विषयनियमः क्रियते । गुणवचनादेव तौ भवतः, नान्यस्मादिति । पटीयान् लघीयान् पटिष्ठः लघिष्ठः ॥

२२१० तुश्छन्दसि ॥ ५९ ॥ तृन्तात्तृजन्तात् छन्दसि अजादी प्रत्ययौ स्तः ॥ 'आसुतिं करिष्ठः' । 'दोहीयसी धेनुः' ॥

२२११ प्रशस्यस्य श्रः ॥ ६० ॥ प्रशस्यशब्दस्य श्र इत्ययमादेशः स्यादजाद्योः प्रत्यययोः ॥ अयमेषामतिशयेन प्रशस्यः—श्रेष्ठः । उभाविमौ प्रशस्यौ अयमनयोरतिशयेन प्रशस्यः—श्रेयान् ॥

२२१२ ज्य च ॥ ६१ ॥ प्रशस्य शब्दस्य ज्य इत्ययमादेशः स्यादजाद्योः प्रत्यययोः ॥ अयमतिशयेन प्रशस्य ज्येष्ठः, ज्यायान् ॥

२२१३ वृद्धस्य च ॥ ६२ ॥ वृद्धस्य ज्य इत्ययमादेशः स्यादजाद्योः । सर्वे इमे वृद्धाः, अयमेषामतिशयेन वृद्धः—ज्येष्ठः । उभाविमौ वृद्धौ अयमनयोरतिशयेन वृद्धः ज्यायान् । वर्षिष्ठः वर्षीयान् ॥ इति ॥

२२१४ अन्तिकबाढयोर्नेदसाधौ ॥ ६३ ॥ अन्तिकबाढयोर्यथासंख्येन नेद साध इत्येतावादेशौ स्तोऽजाद्योः । सर्वाणीमान्यन्तिकानि इदमेषामतिशयेन—नेदिष्ठम् नेदीयः । सर्वे इमे बाढमधीयते अयमस्मात्साधीयोऽधीते ॥

२२१५ युवाल्पयोः कनन्यतरस्याम् ॥ ६४ ॥ युवाल्पयोः कनादेशो वा स्यादजाद्योः ॥ सर्वे इमे युवानः, अयमेषामतिशयेन, कनिष्ठः द्वाविमौ युवानौ अयमनयोरतिशयेन कनीयान् यविष्ठः यवीयान् ॥ सर्वे इमेऽल्पाः अयमेषामतिशयेन कनिष्ठः उभाविमौ अल्पौ अयमनयोरतिशयेन कनीयान् अयमस्मात्कनीयान् अल्पिष्ठः अल्पीयान् इति ॥

२२१६ विन्मतोर्लुक् ॥ ६५ ॥ विनो मतुपश्च लुक् स्यादजाद्योः ॥ सर्वे इमे स्रग्विणः अयमेषामतिशयेन—स्रजिष्ठः । उभाविमौ स्रग्विणौ अयमनयोरतिशयेन स्रजीयान् अयमस्मात्स्रजीयान् । सर्वे इमे त्वग्वन्तः अयमेषामतिशयेन त्वचिष्ठः उभाविमौ त्वग्वन्तौ अयमनयोरतिशयेन त्वचीयान् अयमस्मात्त्वचीयान् ॥

२२१७ प्रशंसायां रूपप् ॥ ६६ ॥ प्रशंसाविशिष्टेऽर्थे वर्तमानात्स्वार्थे रूपप् स्यात् ॥ प्रशस्तो वैयाकरणो वैयाकरणरूपः, याज्ञिकरूपः, पचतिरूपम् पचतोरूपम् ।

२२२७ अनुकम्पायाम् ॥ ७६ ॥ कारुण्येनाभ्युपपत्तिः परस्यानुकम्पा तस्यां गम्यमानायां सुबन्तात्तिङन्ताच्च यथाविहितं प्रत्ययः स्यात् । पुत्रकः. वत्सकः. दुर्बलकः. बुभुक्षितकः ॥ विश्वसितकि । स्वपितकि ।

२२२८ नीतौ च तद्युक्तात् ॥ ७७ ॥ सामदानादिरुपायो नीतिः । नीतौ च गम्यमानायामनुकम्पायुक्ताद्यथाविहितं प्रत्ययः स्यात् हन्त ते धानकाः । हन्त ते तिलकाः । एहकि अद्धकि । अनुकम्प्यमाने धानकादावर्थे ॥

२२२९ बह्वचो मनुष्यनाम्नष्ठज्वा ॥ ७८ ॥ बह्वचः प्रातिपदिकान्मनुष्यनामधेयाट्ठच् स्यात् अनुकम्पायां नीतौ च ॥ देविकः देवदत्तकः । यज्ञिकः. यज्ञदत्तकः ॥

२२३० घनिलचौ च ॥ ७९ ॥ बह्वचो मनुष्यनाम्नो घन् इलच् इत्येतौ स्तः । चार्थ्यात् प्राप्तम् । देवियः देविलः देविकः देवदत्तकः । यज्ञियः यज्ञिलः यज्ञिकः यज्ञदत्तकः ॥

२२३१ प्राचामुपादेरडज्वुचौ च ॥ ८० ॥ उपादेः प्रातिपदिकाद्बह्वचो मनुष्यनाम्नोऽडच्वुचौ प्रत्ययौ स्तः चाद्घनिलचौ ठज्वा ॥ उपडः उपकः उपियः उपिलः उपिकः उपेन्द्रदत्तकः ॥

२२३३ अजिनान्तस्योत्तरपदलोपश्च ॥ ८२ ॥ अजिनशब्दान्तात्प्रातिपदिकान्मनुष्यनाम्नोऽनुकम्पायां कन् स्यात्तस्य चोत्तरपदलोपश्च ॥ व्याघ्राजिनोऽनुकम्पितः व्याघ्रकः सिंहकः ॥

२२३४ ठाजादावूर्ध्वं द्वितीयादचः ॥ ८३ ॥ अस्मिन्प्रकरणे यष्ठोऽजादिश्च प्रत्ययस्तस्मिन्परे प्रकृतेर्द्वितीयादचः ऊर्ध्वं यच्छब्दरूपं तस्य लोपः स्यात् ॥ अनुकम्पितो देवदत्तः देविकः देवियः देविलः । उपडः उपकः उपेन्द्रदत्तक । ठग्रहणमुको द्वितीयाच्काचधानार्थं अजादिलक्षणे हि यानि ठकादिघटप्रसङ्गः वायुदत्तः वायुकः । पितृदत्तः पितृकः ॥

*

द्वयोरिति समुदायान्निर्द्धारणं भवति ॥ एकस्येति निर्धार्यवाचनिर्देशः ॥

२२३३ वा बहूनां जातिपरिप्रश्ने डतमच् ॥ ९३ ॥ बहूनां मध्ये एकस्य निर्द्धारणे जातिपरिप्रश्नविषयेभ्यः किमादिभ्यो वा डतमच् ॥ कतमो भवतां कठः, यतमः कठ, ततम आगच्छतु। वावचनमकजर्थम्। यको भवतां कठः सक आगच्छतु। महाविभाषा च प्रत्ययविकल्पार्थाऽनुवर्तत एव। यो भवतां कठः यो भवतां कठः स आगच्छतु।

२२३४ एकाच्च प्राचाम् ॥ ९४ ॥ एकशब्दात्प्राचामाचार्याणां मते डतरच्डतमचौ स्यातां स्तः। द्वयोर्निर्द्धारणे डतरच्, बहूनां निर्द्धारणे डतमच् ॥ जातिपरिप्रश्ने इति नानुवर्तते एकतरो भवतोर्देवदत्तः एकतमो भवतां देवदत्तः ॥

२२३५ अवक्षेपणे कन् ॥ ९५ ॥ अवक्षेपणे वर्तमानात् प्रातिपदिकात्कन्स्यात्। व्याकरणकेन नाम त्व गर्वित, याज्ञिक्यकेन नाम त्व गर्वितः। परस्य कुत्सार्थं यदुपादीयते तदिहोदाहरणम् यत्पुनः स्वयमेव कुत्सित तत्र 'कुत्सिते' इत्यनेन कन् देवदत्तकः यज्ञदत्तकः ॥

इति प्रागिवीयस्य पूर्णोऽवधिः ॥

२२३६ इवे प्रतिकृतौ ॥ ९६ ॥ इवार्थे यत्प्रातिपदिक तस्मात्कन्स्यात् इवार्थः सादृश्य तस्य विशेषण प्रतिकृतिग्रहणम् ॥ प्रतिकृतिः प्रतिरूपकम् प्रतिच्छन्दकम्। अश्व इव अयमश्वप्रतिकृतिः अश्वकः उष्ट्रकः गर्दभकः ॥

२२३७ संज्ञायां च ॥ ९७ ॥ इवार्थे गम्यमाने कन्स्यात् समुदायेन चेत्संज्ञा गम्यते। अश्वकः उष्ट्रकः गर्दभकः ॥

२२३८ लुम्मनुष्ये ॥ ९८ ॥ संज्ञायां विहितस्य कनो मनुष्येऽभिधेये लुप् स्यात् ॥ चञ्चेव मनुष्यः चञ्चा दासी खरकुटी ॥

२२३९ जीविकार्थे चापण्ये ॥ ९९ ॥ जीविकार्थं यदपण्य तस्मिन्नभिधेये कनो लुप्। विक्रीयते यत्तत्पण्यम् ॥ वासुदेवः शिव स्कन्द विष्णु। आदित्यः। देवलकादीनां जीविकार्था देवप्रतिकृतय उच्यन्ते ॥

२२४० देवपथादिभ्यश्च ॥ १०० ॥ इवे प्रतिकृतौ संज्ञायां च विहितस्य कनो देवपथादिभ्यश्च उत्तरस्य लुप्स्यात्। आदिशब्दः प्रकारे ॥ आकृतिगणश्चायम्। देवपथः हंसपथ ॥

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च।
इवे प्रतिकृतौ लोप कनो देवपथादिषु ॥

अर्चासु तावत् शिवः विष्णुः। चित्रकर्मणि अर्जुनः दुर्योधन। ध्वजेषु कपिः गरुडः सिंहः। देवपथः हंसपथः ॥

२२४१ वस्तेर्ढञ् ॥ १०१ ॥ इतः प्रभृति प्रत्ययाः सामान्ये भवन्ति प्रतिकृतौ चाप्रतिकृतौ च। वस्तिशब्दादिवार्थे द्योत्ये ढञ्स्यात् ॥ वस्तिरिव वास्तेय वास्तेयी ॥

२२४२ शिलाया ढः ॥ १०२ ॥ शिलाशब्दादिवार्थे ढ स्यात् ॥ शिलेव शिलेय दधि ॥ योगविभागाड्ढञपीष्यते शैलेयम् ॥

२२४३ शाखादिभ्यो यत् ॥ १०३ ॥ शाखेव

ग्रहणमेव । टकारो ङीबर्थः । सेनास्त्रिया मिति नानुवर्तते ॥ कौण्डीवृस्यः कौण्डीवृस्यौ कौण्डीवृसाः । क्षौद्रक्यः क्षौद्रक्यौ क्षुद्रकाः । मालव्यः मालव्यौ मालवाः । तथा कौण्डीवृसी क्षौद्रकी मालवी ।

२२५५ वृकाट्टेण्यण् ॥११५॥ वृकशब्दा दायुधजीविवाचिनः स्वार्थे टेण्यण् स्यात् । वार्केण्यः वार्केण्यौ वृकाः ॥

२२५६ दामन्यादित्रिगर्तषष्ठाच्छः ॥११६॥ दामन्यादिभ्यः त्रिगर्तषष्ठेभ्य श्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः स्यात् ॥ येषामायुधजीविनां सङ्घानां षड्वर्गाः । तत्र च त्रिगर्तः षष्ठः त्रिगर्तः षष्ठो येषां ते त्रिगर्तषष्ठाः इत्युच्यन्ते तेषु चेयं स्मृतिः-

आहुस्त्रिगर्तषष्ठास्तु कौण्डोपरथदाण्डकी ।
क्रौष्टकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जानकि

इति

दामन्यादिभ्यस्तावत् दामनीयः दामनीयौ दामनयः । औलपीयः औलपीयौ उलपयः । त्रिगर्तषष्ठेभ्यः खल्वपि-कौण्डोपरथीयः कौण्डोपरथीयौ कौण्डोपरथाः । दाण्डकीयः दाण्डकीयौ दाण्डकयः । क्रौष्टकीयः जालमानीयः ब्रह्मगुप्तीयः जानकीयः ॥

२२५७ पर्श्वादियौधेयादिभ्यामणञौ ॥११७॥ पर्श्वादिभ्यो यौधेयादिभ्यश्चा युधजीविसङ्घवाचिभ्यः स्वार्थेऽणञौ प्रत्ययौ स्तः ॥ पार्शवः पार्शवौ पर्शवः । यौधेयः यौधेयौ यौधेयाः ॥

२२५८ अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ॥११८॥ अभिजिदादिभ्योऽणन्तेभ्यः प्रातिपदिकेभ्यः स्वार्थे यञ्प्रत्ययः स्यात् ॥ आभिजित्यः आभिजित्यौ आभिजिताः । वैदभृत्यः वैदभृत्यौ वैदभृताः । शालावत्यः शालावत्यौ शालावताः । शैखावत्यः । शामीवत्यः और्णावत्यः । श्रौमत्यः ॥ गोत्रप्रत्ययस्याणो ग्रहणमिष्यते । आभिजितो मुहूर्तः । आभिजितः स्थालीपाक इत्यत्र न भवति ॥

२२५९ ञ्यादयस्तद्राजाः ॥ ११९ ॥ 'पूगाञ्ञ्यो ग्रामणीपूर्वात्' इत्यतः प्रभृति ये प्रत्ययास्ते तद्राजसंज्ञाः स्युः । तथा चैवोदाहृतम् ॥ तद्राजप्रदेशाः-'तद्राजस्य बहुष्वित्येवमादयः अङ्गाः । वङ्गाः कलिङ्गाः इत्यादि ।

इति पञ्चमाध्यायस्य तृतीयःपादः समाप्तः ।

२२६० पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च ॥ १ ॥ 'पादशताःतस्य संख्यादेः प्रातिपदिकस्य वीप्सायां द्योत्यायां वुन्स्यात् तत्सन्नियोगेन चान्तस्य लोपः स्यात् । यस्येति लोपेनैव सिद्धे पुनर्वचनमनैमित्तिकार्थम् । यस्येति लोपः परनिमित्तकः तस्य स्थानिवद्भावात् 'पादः पत्' इति पद्भावो न स्यात् । अस्य त्वनैमित्तिकत्वात्र स्थानिवत्त्वम् । द्वौ द्वौ पादौ ददाति द्विपादिकां ददाति । द्वे द्वे शते ददाति द्विशतिकां ददाति 'तद्धिताश्च इति

स्यात्तस्थानेन नैतस्थानाख्यसमर्थवद्वर्धति सस्थान इति तुल्य उच्यते । समान स्थानमस्येति कृत्वा॥ पितुः तुल्यः पितृस्थानीयः पितृस्थानः मातृस्थानीयो मातृस्थानः । राजस्थानीयो राजस्थानः ॥

२२७० किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ॥ ११ ॥ किम एकारान्तात् तिङन्तादव्ययेभ्यश्च यो घः, तदन्तात् प्रातिपदिकादामु प्रत्ययः स्वार्थे, नतु द्रव्यप्रकर्षे । किंतराम् किंतमाम् ॥

पूर्वाह्णेतराम् पूर्वाह्णेतमाम् । पचतितराम् पचतितमाम् । उच्चैस्तराम् उच्चैस्तमाम् ॥

२२७१ अमु च छन्दसि ॥ १२ ॥ किमेत्तिङव्ययघादद्रव्यप्रकर्षेऽमु स्याच्छन्दसि चादामु । 'प्रतरं नय आयुः' प्रतरां वस्यः ।

२२७२ अनुगादिनष्ठक् ॥ १३ ॥ अनुगादिन शब्दात्स्वार्थे ठक् स्यात् ॥ आनुगादिकः ॥

२२७३ णचः स्त्रियामञ् ॥ १४ ॥ णजन्तात्स्त्रियामञ् स्वार्थे ॥ व्यावक्रोशी व्यावहासी वर्तते ।

२२७४ अणिनुणः ॥ १५ ॥ इनुणन्तात्स्वार्थेऽण् ॥ सांराविणं वर्तते सांकूटिनम् ॥

२२७५ विसारिणो मत्स्ये ॥ १६ ॥ विसारिशब्दात्स्वार्थेऽण् स्यान्मत्स्येऽभिधेये ॥ वैसारिणो मत्स्यः ॥

२२७६ संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ॥ १७ ॥ संख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः स्वार्थे कृत्वसुच्स्यात् ॥ पौनःपुन्यम् अभ्यावृत्तिः एककर्तृकाणां तुल्यजातीयानां क्रियाणां जन्मसंख्यानं क्रियाभ्यावृत्तिगणनं तत्र प्रत्ययः ॥ पञ्चवारान्भुङ्क्ते पञ्चकृत्वः । सप्तकृत्वः ॥

२२७७ द्वित्रिचतुर्भ्यः सुच् ॥ १८ ॥ एभ्यः संख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः सुच्स्यात् ॥ द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते चतुर्भुङ्क्ते ॥

२२७८ एकस्य सकृच्च ॥ १९ ॥ एकशब्दस्य सकृदित्ययमादेशः सुच्च प्रत्ययः स्यात् क्रियागणने ॥ अभ्यावृत्तिर्लिङ्गेन न सम्भवति ॥ सकृद्भुङ्क्ते सकृदधीते ॥

२२७९ विभाषा बहोर्धाऽविप्रकृष्टकाले ॥ २० ॥ बहुशब्दात्क्रियाभ्यावृत्तिगणने वर्तमानाद्विभाषा धा स्यात् ॥ बहुधा दिवसस्य भुङ्क्ते । बहुकृत्वो दिवसस्य भुङ्क्ते ॥

२२८० तत्प्रकृतवचने मयट् ॥ २१ ॥ प्रथमासमर्थात्प्रकृतवचने वर्तमानात्स्वार्थे मयट् स्यात् ॥ अन्नं प्रकृतम्-अन्नमयम् अपूपमयम् । प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनम् । भावेऽधिकरणे वा ल्युट् । भावे उदाहृतम् । अधिकरणे-अन्नं प्रकृतम्-अन्नमयो यज्ञः ॥

२२८१ समूहवच्च बहुषु ॥ २२ ॥ बहुषु प्रकृतेषूच्यमानेषु समूहवत्प्रत्ययाः स्युः, चान्मयट् ॥ मोदकाः प्रकृताः मौदकिकम्

२२९१ रक्ते ॥३२॥ लाक्षादिना रक्ते यो लोहितशब्दस्तस्मात्कन्स्यात्स्वार्थे । लोहितकः कम्बलः । लोहितकः पटः ।

* लोहिताल्लिङ्गबाधनं वा वक्तव्यम् लोहितिका लोहिनिका शाटी ।

२२९२ कालाच्च ॥३३॥ कालशब्दादनित्ये वर्तमानाद्रक्ते च कन्स्यात् ॥ कालकं मुखं वैलक्ष्येण ॥ रक्ते, कालकः पटः कालिका शाटी ।

२२९३ विनयादिभ्यष्ठक् ॥३४॥ एभ्यः स्वार्थे ठक् स्यात् । विनय एव वैनयिकः सामयिकः औपयिकः ॥

२२९४ वाचो व्याहृतार्थायाम् ॥३५॥ व्याहृतः प्रकाशितोऽर्थो यस्याः तस्यां वाचि वर्तमानाद्वाक्शब्दात्स्वार्थे ठक् स्यात् । वाचिकं कथयति वाचिकं श्रद्दधे

२२९५ तद्युक्तात्कर्मणोऽण् ॥३६॥ व्याहृतार्थया वाचा यत्कर्म युक्तं तदभिधायिनः कर्मशब्दात्स्वार्थेऽण् स्यात् ॥ कर्मैव कार्मणम् । वाचिकं श्रुत्वा तथैव यत्कर्म क्रियते तत्कार्मणमित्युच्यते ।

* अण् प्रकरणे कुलाल वरुड निषाद कर्मारचण्डाल मित्रामित्रेभ्यश्छन्दस्युपसंख्यानम् । कुलाल एव कौलालः । वारुडः । नैषादः । कार्मारः । चाण्डालः । मैत्रः । आमित्रः ॥

* सान्नाय्यानुजावरानुषूकानुष्टुभचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनाः एतेऽणन्ताः स्वार्थिकाश्छन्दसि भाषायां चेष्यन्ते ॥

२२९६ ओषधेरजातौ ॥ ३७ ॥ ओषधिशब्दादजातौ वर्तमानात्स्वार्थेऽण् स्यात् । औषधं पिबति ॥

२२९७ प्रज्ञादिभ्यश्च ॥ ३८ ॥ प्रज्ञ इत्येवमादिभ्यः स्वार्थेऽण्स्यात् ॥ प्रज्ञ एव प्राज्ञः प्राज्ञी स्त्री ॥

२२९८ मृदस्तिकन् ॥ ३९ ॥ मृच्छब्दात्स्वार्थे तिकन्स्यात् । मृदेव मृत्तिका ।

२२९९ सस्नौ प्रशंसायाम् ॥ ४० ॥ प्रशंसोपाधिके वर्तमानान्मृच्छब्दात्सस्नौ स्तः ॥ प्रशस्ता मृद् मृत्सा मृत्स्ना ॥

२३०० वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि ॥ ४१ ॥ वृकज्येष्ठाभ्यां प्रशंसोपाधिके वर्तमानाभ्यां तिल्तातिलौ स्तश्छन्दसि । वृकतिः (ऋ० ४।४१।७)। ज्येष्ठतातिम् (ऋ० स० ५।४४।१) ।

२३०१ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥ ४२ ॥ बह्वर्थादल्पार्थाच्च कारकाभिधायिनः शस्स्याद्वा । बहूनि ददाति बहुशो ददाति । अल्पं ददाति अल्पशो ददाति । भूरिशो ददाति स्तोकशो ददाति ॥

* बह्वल्पार्थान्मङ्गलामङ्गलवचनम् बहुशो ददाति आभ्युदयिकेषु कर्मसु ॥ अल्पशो ददात्यनिष्टेषु कर्मसु ॥

२३०२ संख्यैकवचनाच्च वीप्सायाम् ॥ ४३ ॥ संख्यावाचिभ्य एकवचनान्तप्रातिपदिकेभ्यश्च वीप्सायां द्योत्यायाम् शस्स्या-

द्वौ द्वौ द्वौ मोदकौ ददाति द्विशः। त्रिशः॥ एकवचनादप्यस्यापि—कार्षापणं ददाति कार्षापणशः। माषशः। पादशः॥

२३०३ प्रतियोगे पञ्चम्यास्तसिः॥४४॥ प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः स्यात्। प्रद्युम्नो वासुदेवतः प्रति॥

* तसिप्रकरणे आद्यादिभ्य उपसंख्यानम्। आदौ आदितः। मध्यतः पार्श्वतः पृष्ठतः। आकृतिगणोऽयम्।

२१०४ अपादाने चाहीयरुहोः॥४५॥ अपादाने या पञ्चमी तस्याः पञ्चम्या वा तसिः स्यात्। न चेदपादानं हीयरुहोः सम्बन्धि न भवति। ग्रामत आगच्छति ग्रामात्। चोरतो बिभेति चौरात्। अध्ययनतः पराजयते अध्ययनात्॥

२३०५ अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः॥४६॥ अतिक्रम्य ग्रहोऽतिग्रहः अचलनमव्यथनम्, क्षेपो निन्दा। अतिग्रहादिविषये या तृतीया तदन्ताद्वा तसिः स्यात्सा चेत्कर्तरि न स्यात्। वृत्तेनातिगृह्यते वृत्ततोऽतिगृह्यते। चारित्रेणातिगृह्यते चारित्रतोऽतिगृह्यते। अन्यानतिक्रम्य वृत्तेन गृह्यत इत्यर्थः॥ अव्यथने—वृत्तेन न व्यथते वृत्ततो न व्यथते। चारित्रेण न व्यथते चारित्रतो न व्यथते वृत्तेन न चलतीत्यर्थः। क्षेपे—वृत्तेन क्षिप्तः वृत्ततः क्षिप्तः। चारित्रेण क्षिप्तः चारित्रतः क्षिप्तः। वृत्तेन निन्दित इत्यर्थः॥

२३०६ हीयमानपापयोगाच्च॥४७॥ हीयमानेन पापेन च योगो यस्य तद्वाचिनः शब्दात्परा या तृतीया विभक्तिरकर्तरि तदन्ताद्वा तसिः स्यात्॥ वृत्तेन हीयते वृत्ततो हीयते। चारित्रेण हीयते चारित्रतो हीयते॥ पापयोगात्-वृत्तेन पापः वृत्ततः पापः चारित्रेण पापः चारित्रतः पापः॥

२३०७ षष्ठ्या व्याश्रये॥४८॥ नानापक्षसमाश्रयो व्याश्रयः। व्याश्रये गम्यमाने षष्ठ्यन्ताद्वा तसिः स्यात्। देवा अर्जुनतोऽभवन् आदित्याः कर्णतोऽभवन्। षष्ठी चात्र पक्षापेक्षैव। अर्जुनस्य पक्षे। कर्णस्य पक्षे इत्यर्थः॥

२३०८ रोगाच्चापनयने॥४९॥ रोगो व्याधिः तद्वाचिनः शब्दाद्या षष्ठी तदन्ताद्वा तसिः स्यादपनयने गम्यमाने। प्रवाहिकातः कुरु। कासतः कुरु। छर्दिकातः कुरु। प्रतीकारमस्याः कुर्वित्यर्थः।

२१०९ अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः॥५०॥ संपद्यकर्तरि वर्तमानात्प्रातिपदिकादभूततद्भावे गम्यमाने कृभ्वस्तिभिर्धातुभिर्योगे च्विः स्यात्। अशुक्लः शुक्लः संपद्यते तं करोति शुक्लीकरोति। शुक्लीस्यात्। शुक्लीभवति॥

२३१० अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च॥५१॥ एषामरुरादीनामन्त्यस्य लोपः स्याच्च्विश्च। अनरुः अरुः संपद्यते तं करोति अरूकरोति। अरू स्यात्। उन्मनी करोति। उन्मनी करोति विमनी करोति।

विरक्षी करोति, विरजी करोति, विरजी भवति, विरजा स्यात् ॥

२३११ विभाषा साति कार्त्स्न्ये ॥५२॥ पूर्वस्मिन्विषये वा सातिः स्यात् कार्त्स्न्ये गम्यमाने ॥ यदि प्रकृतिः कृत्स्ना विकारात्मतामापद्यते इत्यर्थः ॥ अग्निसाद्भवति शस्त्रम्, अग्नी भवति शस्त्रम् । उदकसाद्भवति लवणम् उदकी भवति लवणम् ॥

२३१२ अभिविधौ संपदा च ॥ ५३ ॥ अभिविधौ गम्यमाने च्विविषये सातिः स्यात्संपदा योगे । चकारात् कृभ्वस्तिभिश्च ॥ विभाषाग्रहणानुवृत्तेश्च्विरप्यनुज्ञायते । स च कृभ्वस्तियोग एव भवति, न संपदा । अग्निसात्संपद्यते अग्निसाद्भवति । उदकसात्संपद्यते उदकसाद्भवति लवणम् । अग्नी भवति उदकी भवति ॥

२३१३ तदधीनवचने ॥ ५४ ॥ स्वामिविशेषवाचिनः प्रातिपदिकादीशितव्येऽभिधेये सातिः स्यात् । कृभ्वस्तिभिः संपदा च योगे ॥ राजाधीनं करोति राजसात्करोति राजसाद्भवति । राजसात्स्यात् राजसात् संपद्यते । ब्राह्मणसात्करोति ब्राह्मणसाद्भवति, स्यात्, संपद्यते वा ।

२३१४ देये त्रा च ॥५५॥ दातव्यं देयम् तदधीने देये त्रा स्यात् । चात् सातिश्च कृभ्वस्तिभिः संपदा च योगे ॥ ब्राह्मणेभ्यो देयमिति यद्विद्यात तदयदा तेषां समर्पणेन तदधीनं क्रियते तदा त्रा प्रत्ययः । ब्राह्मणाधीनं देयं करोति ब्राह्मणसात्करोति ब्राह्मणत्रा करोति, भवति, स्यात्, संपद्यते ॥

२३१५ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ॥ ५६ ॥ देवादिभ्यो द्वितीयासप्तम्यन्तेभ्यस्त्रा वा स्यात् ॥ देवान् गच्छति देवत्रा गच्छति । देवेषु वसति देवत्रा वसति । मनुष्यत्रा गच्छति मनुष्यत्रा वसति ॥ पुरुषत्रा गच्छति पुरुषत्रा वसति । पुरुत्रा गच्छति पुरुत्रा वसति । मर्त्यत्रा गच्छति मर्त्यत्रा वसति ॥ बहुलग्रहणादन्यत्रापि भवति --'बहुत्रा जीवतो मनः ।'

२३१६ अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् ॥५७॥ यस्याव्यक्तस्यानुकरणे क्रियमाणे सुष्ठु न्यूनमर्धं द्व्यच्कं संपद्यते तस्मादव्यक्तानुकरणाद् अनितिपराद् डाच् स्यात् । कृभ्वस्तियोग इत्यनुवर्तते । यस्य च द्विर्वचने कृते द्व्यजवरार्धं तत्र प्रत्ययः ॥

* डाचि बहुलं द्वे भवत इति वक्तव्यम् । डाचि विवक्षिते द्विर्वचनमेव पूर्वं क्रियते पश्चात्प्रत्ययः । पटपटा करोति, पटपटा भवति, पटपटा स्यात् ॥

२३१७ कृञो द्वितीयतृतीयशम्बबीजात् कृषौ ॥ ५८ ॥ द्वितीयादिभ्यः कृषावभिधेयायां डाच्स्यात्कृञो योगे ॥ द्वितीया करोति, द्वितीयं कर्षणं विलेखनं करोतीत्यर्थः । तृतीया करोति । शम्बा करोति, अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कृषतीत्यर्थः । बीजा करोति, सह बीजेन विलेखनं करोतीत्यर्थः ॥

२३२८ न पूजनात् ॥ ६९ ॥ पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा अतिराजा ॥

* पूजायां स्वतिग्रहणं कर्तव्यम् । इह मा भूत्—परमराजः परमगवः ॥

* प्राग् बहुव्रीहिग्रहणं च कर्तव्यम् । 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्येवमादौ प्रतिषेधो न भवति सुसक्थः अतिसक्थः स्वक्षः अत्यक्षः ॥

२३२९ किमः क्षेपे ॥ ७० ॥ क्षेपे यः किम्शब्दः, ततः परस्य समासान्तो न स्यात् ॥ किंराजा यो न रक्षति । किंसखा योऽभिद्रुह्यति । किंगौर्यो न वहति । 'किं क्षेपे' इति समासः ॥

२३३० नञस्तत्पुरुषात् ॥ ७१ ॥ नञः परे वक्ष्यमाणा ये राजादयः तदन्तात्तत्पुरुषात्समासान्तो न स्यात् । अराजा । असखा । अगौः ॥

२३३१ पथो विभाषा ॥ ७२ ॥ नञः परो यः पथिन्शब्दस्तदन्तात्तत्पुरुषात्समासान्तो वा स्यात् ॥ अपथः। अपथम्॥

२३३२ बहुव्रीहौ संख्येये डजबहुगणात् ॥७३॥ संख्येये यो बहुव्रीहिस्तस्माद्बहुगणान्ताड्डच् स्यात् ॥ उपदशाः उपविंशाः। उपत्रिंशाः आसन्नदशाः अदूरदशाः अधिकदशाः द्वित्राः ॥ पञ्चषाः पञ्चदशाः ॥

* डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थम् । निर्गतानि त्रिंशतः निस्त्रिंशानि वर्षाणि निश्चत्वारिंशानि यज्ञदत्तस्य ॥ निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः ॥

२३३३ ऋक्पूरब्धूःपथामानक्षे ॥७४॥ ऋगाद्यन्तानां समासानामकारः प्रत्ययः समासान्तः । अक्षे न ॥ सामर्थ्याद्धुर एतद्विशेषणम्, नऋगादीनाम् । अक्षसम्बन्धिनी या धूस्तदन्तस्य न ॥ अनृचः बह्वृचः । अर्धर्चः । ललाटपुरम् । द्वीपम् अन्तरीपम् । राजधुरा महाधुरा । जलपथः ।

'अनृचो माणवे बह्वृचश्चरणाख्यायाम्' अनृचो माणवकः बह्वृचो ब्राह्मणः । अनृक् साम बह्वृक् सूक्तमित्यत्र न भवति ।

२३३४ अच् प्रत्यन्ववपूर्वात्सामलोम्नः ॥ ७५ ॥ प्रति अनु अव इत्येवंपूर्वात्सामान्ताल्लोमान्ताच्च समासादच् स्यात् । प्रतिसामम् अनुसामम् अवसामम् । अनुलोमम् अवलोमम् ।

[ कृष्णोदक्पाण्डुपूर्वाया भूमेरच् प्रत्ययः स्मृतः । गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि ॥ कृष्णभूमः उदग्भूमः पाण्डुभूमः । सप्तगोदावरम् पञ्चनदम् ॥ भूमेरपि संख्यापूर्वाया अच्प्रत्यय इष्यते । द्विभूमः प्रासादः । त्रिभूमः । दशभूमकं सूत्रम् । अन्यत्रापि च दृश्यते पद्मनाभः ऊर्णनाभः दीर्घरात्रः समरात्रः अरात्रः । तदेतत्सर्वमिह योगविभागं कृत्वा साधयन्ति । ] ( काशिका ) ॥

२३३५ अक्ष्णोऽदर्शनात् ॥ ७६ ॥ दर्शनादन्यत्र योऽक्षिशब्दस्तदन्तादच् स्यात् ॥ लवणाक्षम् पुष्कराक्षम् ॥

२३३६ अचतुरविचतुरसुचतुरस्त्रीपुंसधे-

वमिधेया भवति । अच्प्रत्ययविलोपः समासश्च निपात्यते । यावती प्रकृतौ वेदिस्ततो द्विगुणा त्रिगुणा वा कस्याञ्चिच्चितौ तत्रेदं निपातनम् । द्विस्तावा त्रिस्तावा वेदिः ॥ द्विस्तावती रज्जुः ।

२३४४ उपसर्गादध्वनः ॥ ८५ ॥
उपसर्गात्परो योऽध्वन्शब्दस्तदन्तात्समासादच् स्यात् ॥ प्रगतोऽध्वानं प्राध्वो रथः ॥

२३४५ तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ॥ ८६ ॥ अङ्गुलिशब्दान्तस्य तत्पुरुषस्य संख्यादेरव्ययादेश्चाच् स्यात् ॥ द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलं ध्यङ्गुलम् । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ॥ तत्पुरुषाधिकारश्च 'द्वन्द्वाच्चुदषहान्तात्' इति यावत् ॥

२३४६ अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ॥ ८७ ॥ अहरादिभ्यः परो यो रात्रिशब्दस्तदन्तस्य तत्पुरुषस्याच् स्यात् । चात्संख्याव्ययादेः ॥ अहर्ग्रहणं द्वन्द्वार्थम् । अहश्च रात्रिश्च अहोरात्रः । सर्वरात्रः पूर्वं रात्रेः पूर्वरात्रः अपररात्रः संख्यातरात्रः । द्वे रात्री समाहृते द्विरात्रः । त्रिरात्रः । अतिक्रान्तो रात्रिमतिरात्रः । नीरात्रः ।

२३४७ अह्नोऽह्न एतेभ्यः ॥ ८८ ॥
सर्वादिभ्यः परस्याहन्शब्दस्याह्नादेशः स्यात् ॥ द्वयोरह्नोर्भवः द्व्यह्नः त्र्यह्नः अहरतिक्रान्तः अत्यह्नः निरह्नः सर्वाह्नः अपराह्नः संख्याताह्नः ।

२३४८ न संख्यादेः समाहारे ॥ ८९ ॥
संख्यादेस्तत्पुरुषस्य समाहारे वर्तमानस्याहन्शब्दस्य अह्नादेशो न स्यात् ॥ द्वे अहनी समाहृते द्व्यहः त्र्यहः ।

२३४९ उत्तमैकाभ्यां च ॥ ९० ॥
उत्तमैकशब्दाभ्यां च परस्याह्न इत्ययमादेशो न स्यात् ॥ उत्तमशब्दोऽन्त्यवचनः पुण्यशब्दमाचष्टे । पुण्यग्रहणमेव न कृतं वैचित्र्यार्थम् । पुण्याहः एकाहः ॥ केचित्तूपोत्तमस्यापि प्रतिपत्त्यर्थं वर्णयन्ति । तेन संख्यातशब्दादपि परस्य न भवति-'संख्याताहः' इति ॥

२३५० राजाहस्सखिभ्यष्टच् ॥ ९१ ॥
राजन्नहन्सखि इत्येवमन्तात्प्रातिपदिकाट्टच् स्यात् । महाराजः मद्रराजः परमराजः । उत्तमाहः । राज्ञः सखा राजसखः । ब्राह्मणसखः ॥

२३५१ गोरतद्धितलुकि ॥ ९२ ॥
गोऽन्तात्तत्पुरुषाट्टच् स्यान्न तु तद्धितलुकि ॥ परमगवः । पञ्चगवम् ॥

२३५२ अग्राख्यायामुरसः ॥ ९३ ॥
उरःशब्दान्तात्तत्पुरुषाट्टच् स्यादुरस चेदुरःशब्दोऽग्राख्यायाम् । अश्वानामुरः अश्वोरसम् मुख्योऽश्व इत्यर्थः ।

२३५३ अनोऽश्मायस्सरसां जातिसंज्ञयोः ॥ ९४ ॥ एतदन्तात्तत्पुरुषाट्टच् स्याज्जातौ संज्ञायां च ॥ उपानसम् । महानसम् । अमृताश्मः । पिण्डाश्मः । कालायसः । लोहितायसम् । मण्डूकसरसम् जलसरसम्

२३५४ ग्रामकौटाभ्यां च तक्ष्णः ॥ ९५ ॥
ग्रामकौटाभ्यां परो यस्तक्षन्शब्दस्तदन्ता-

उपशरदम् । उपविपाशम् ।

२३६७ अनश्च ॥ १०८ ॥ अन्नन्तादव्ययीभावाट्टच् स्यात्समासान्तः ॥ उपराजम् । अध्यात्मम् । प्रत्यात्मम् ॥

२३६८ नपुंसकादन्यतरस्याम् ॥१०९॥ अन्नन्तं यत्क्लीबं तदन्तादव्ययीभावाद्वा टच् स्यात् ॥ प्रतिचर्मम् प्रतिचर्म ॥

२३६९ नदीपौर्णमास्याग्रहायणीभ्यः ॥ ११० ॥ एतदन्तादव्ययीभावाद्वा टच् स्यात् ॥ नद्याः समीपं उपनदम् उपनदि । उपपौर्णमासम् उपपौर्णमासि । उपाग्रहायणम् उपाग्रहायणि ॥

२३७० झयः ॥ १११ ॥ झयन्तादव्ययीभावाद्वा टच् स्यात् ॥ उपसमिधम् उपसमित् ॥

२३७१ गिरेश्च सेनकस्य ॥ ११२ ॥ गिर्यन्तादव्ययीभावाट्टज्वा स्यात् सेनकस्य मतेन ॥ अन्तर्गिरम् अन्तर्गिरि ॥ उपगिरम् उपगिरि ॥

२३७२ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ॥ ११३ ॥ स्वाङ्गवाची यः सक्थिशब्दोऽक्षिशब्दश्च तदन्ताद् बहुव्रीहेः षच् स्यात् समासान्तः ॥ दीर्घे सक्थिनी यस्य दीर्घसक्थः । कल्याणाक्षः । जलजाक्षी ॥

१ 'अनश्च' इत्यत्र प्रायेणास्य पाठः । अत एव "आचार्यप्रवृत्तिर्ज्ञापयति 'न सन्निपातेऽन्यो भवति' इति । यच्च विपाशब्दस्य शरत्प्रभृतिषु पठति" इति तस्यापाठात्सूत्रे भाष्यं समाधत्ते ॥ इति दासिमयाः ॥

२३७३ अङ्गुलेर्दारुणि ॥ ११४ ॥ अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्यात्समासान्तः ॥ दारुणि समासार्थे ॥ द्व्यङ्गुलं दारु । पञ्चाङ्गुलम् ॥

२३७४ द्वित्रिभ्यां ष मूर्ध्नः ॥ ११५ ॥ द्वित्रिभ्यां परो यो मूर्धन्शब्दस्तदन्ताद् बहुव्रीहेः षः समासान्तः ॥ द्विमूर्धः, त्रिमूर्धः ॥

२३७५ अप्पूरणीप्रमाण्योः ॥ ११६ ॥ पूरण्यन्तात् प्रमाण्यन्ताच्च बहुव्रीहेरप्स्यात्समासान्तः ॥ कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः ॥

* अपि प्रधानपूरणीग्रहणम् । यत्रान्यपदार्थे पूरणप्रत्ययार्थविशति न केवलं वर्तिपदार्थमेव, तत्र पूरण्याः प्राधान्यम् ॥ पुंवद्भावप्रतिषेधेऽपि प्रधानपूरण्येव गृह्यते । इह न भवति कल्याणी पञ्चमी अस्मिन्पक्षे कल्याणपञ्चमीकः पक्षः ॥ स्त्री प्रमाणी येषां ते स्त्रीप्रमाणाः ॥

* नेतुर्नक्षत्र उपसंख्यानम् । मृगो नेता यासां रात्रीणाम् मृगनेत्रा रात्रयः । पुष्यनेत्राः ॥

* छन्दसि च नेतुरुपसंख्यानम् । बृहस्पतिनेत्रा देवाः । सोमनेत्राः ॥

* मासाद्भृतिप्रत्ययपूर्वपदाट्ठञ्विधिः पञ्चको मासोऽस्य पञ्चमासिकः कर्मकरः । षाण्मासिकः 'सोऽस्यांशवस्नभृतयः' इति । 'संख्याया अतिशदन्ताया कन्' ॥

२३७६ अन्तर्बहिर्भ्यां च लोम्नः ॥ ११७

२३८४ जम्भा सुहरिततृणसोमेभ्यः ॥ १२५ ॥ बहुव्रीहौ समासे स्वादिभ्यः पर जम्भेति कृतानिजन्तमुत्तरपदं निपात्यते ॥ जम्भशब्दोऽभ्यवहार्यवाची दन्तविशेषवाची च ॥ शोभनो जम्भोऽस्य सुजम्मा देवदत्तः। हरितजम्भा ॥ तृणजम्भा। सोमजम्भा ॥

२३८५ दक्षिणेर्मा लुब्धयोगे ॥ १२६ ॥ दक्षिणेर्मा इति कृतानिजन्तो बहुव्रीहौ निपात्यते लुब्धयोगे ॥ दक्षिणमिर्ममस्य दक्षिणेर्मा मृगः ॥ इर्मं व्रणमुच्यते। दक्षिणभङ्गं व्रणितमस्य व्याधेनेत्यर्थः ॥

२३८६ इच् कर्मव्यतिहारे ॥ १२७ ॥ कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच्स्यात्। 'तत्र तेनेदमिति सरूपे' इत्ययं बहुव्रीहिर्गृह्यते। केशेषु केशेषु गृहीत्वा [illegible] युद्धं प्रवृत्तं केशाकेशि। कचाकचि। मुसलैर्मुसलैः प्रहृत्य इदं युद्धं प्रवृत्तं मुसलामुसलि। दण्डादण्डि ॥ तिष्ठद्गुप्रभृतिष्वयमिच्प्रत्ययः पठ्यते ॥

२३८७ द्विदण्ड्यादिभ्यश्च ॥ १२८ ॥ द्विदण्ड्यादयः शब्दा इच्प्रत्ययान्ताः साधवः स्युः ॥ द्विदण्ड्यादिभ्य इति तादर्थ्ये एषा चतुर्थी। द्विदण्ड्याद्यर्थमिच्प्रत्ययस्तथा भवति यथा द्विदण्ड्यादयः सिध्यन्तीत्यर्थः। समुदायनिपातनाच्चार्थविशेषेऽवरुध्यन्ते। द्विदण्डि प्रहरति। द्विमुसलि प्रहरति। इह न भवति–द्विदण्डा शालेति। बहुव्रीह्यधिकारेऽपि तत्पुरुषात्कचिद्विधान-मिच्छन्ति। निकुच्य कर्णौ धावति 'निकुच्यकर्णि धावति' प्रोह्यपादि हस्तिनं वाहयति। मयूरव्यंसकादित्वात्समासः ॥

२३८८ प्रसंभ्यां जानुनो ज्ञुः ॥ १२९ ॥ 'प्र सम्' इत्येताभ्यामुत्तरस्य जानुशब्दस्य ज्ञुरादेशः स्यात्समासान्तो बहुव्रीहौ ॥ प्रकृष्टे जानुनी अस्य प्रज्ञुः। संज्ञुः ॥

२३८९ ऊर्ध्वाद्विभाषा ॥ १३० ॥ ऊर्ध्वशब्दात्परस्य जानुशब्दस्य विभाषा ज्ञुरित्ययमादेशः स्यात् ॥ ऊर्ध्वे जानुनी अस्य ऊर्ध्वजानुः ऊर्ध्वज्ञुः ॥

२३९० ऊधसोऽनङ् ॥ १३१ ॥ ऊधस्शब्दान्तस्य बहुव्रीहेरनङादेशः स्यात्समासान्तः ॥ कुण्डमिव ऊधोऽस्याः सा कुण्डोध्नी। घटोध्नी ॥

* ऊधसोऽनङि स्त्री ग्रहणं कर्तव्यम्। इह माभूत्—महोधाः पर्जन्यः। घटोध्नो धैनुकम् ॥

२३९१ धनुषश्च ॥ १३२ ॥ धनुस्शब्दान्तस्य बहुव्रीहेरनङादेशः स्यात् ॥ शार्ङ्गं धनुरस्य शार्ङ्गधन्वा ॥ गाण्डीवधन्वा ॥

२३९२ वा संज्ञायाम् ॥ १३३ ॥ धनुःशब्दान्ताद्बहुव्रीहेरनङादेशो वा स्यात्संज्ञायां विषये ॥ शतधनुः शतधन्वा। दृढधनुः दृढधन्वा ॥

२३९३ जायाया निङ् ॥ १३४ ॥ जायाशब्दान्तस्य बहुव्रीहेर्निङादेशः स्यात्। युवतिर्जाया यस्य युवजानिः। वृद्धजानिः ॥

२३९४ गन्धस्येदुत्पूतिसुसुरभिभ्यः

॥ १४६ ॥ ककुदशब्दान्तस्य बहुव्रीहेर्लोपः स्यात्समासान्तोऽवस्थायाम् । असंजातं ककुदमस्य असंजातककुत् पूर्णककुत् उन्नतककुत् ॥

२४०६ त्रिककुत्पर्वते ॥ १४७ ॥ त्रिककुदिति बहुव्रीहौ ककुदशब्दस्य लोपः समासान्तो निपात्यते पर्वतेऽभिधेये । त्रीणि ककुदान्यस्य त्रिककुत्पर्वतः ॥

२४०७ उद्विभ्यां काकुदस्य ॥ १४८ ॥ आभ्यां परस्य काकुदस्य लोपः स्याद्बहुव्रीहौ । उद्गतं काकुदमस्य उत्काकुत् । विकाकुत् । तालु काकुदमित्युच्यते ॥

२४०८ पूर्णाद्विभाषा ॥ १४९ ॥ पूर्णात्परस्य काकुदस्य वा लोपो बहुव्रीहौ पूर्णकाकुत् पूर्णकाकुदः ॥

२४०९ सुहृद्दुर्हृदौ मित्रामित्रयोः ॥ १५० ॥ सुहृद् दुर्हृद् इति निपात्यते यथासंख्य मित्रामित्रयोरभिधेययोः ॥ शोभनं हृदयमस्य सुहृत् मित्रम् । दुष्टं हृदयमस्य दुर्हृद् अमित्रः ॥

२४१० उरःप्रभृतिभ्यः कप् ॥ १५१ ॥ उरःप्रभृत्यन्ताद्बहुव्रीहेः कप्स्यात् । व्यूढमुरोऽस्य व्यूढोरस्कः प्रियसर्पिष्क ॥

२४११ इनः स्त्रियाम् ॥ १५२ ॥ इनन्ताद्बहुव्रीहेः कप् स्यात् स्त्रियाम् । बहवो दण्डिनो यस्यां बहुदण्डिका शाला बहुछत्रिका ॥

२४१२ नद्यृतश्च ॥ १५३ ॥ नद्युत्तरपदाद् बहुव्रीहेर्ऋकारान्ताच्च कप्स्यात् । बहव कु- मार्यो ऽस्मिन् बहुकुमारीको देशः । बहुब्रह्मबन्धूकः बहुकर्तृकः ॥

२४१३ शेषाद्विभाषा ॥ १५४ ॥ यस्माद्बहुव्रीहेः समासान्तो न विहितः शेषस्तस्माद्वा कप्स्यात् ॥ बहवः खट्वा अस्मिन्बहुखट्वकः बहुमालकः बहुवीणकः बहुखट्वः बहुमालः बहुवीणः ॥

२४१४ न संज्ञायाम् ॥ १५५ ॥ संज्ञायां बहुव्रीहौ समासे कप् न स्यात् ॥ विश्वे देवा अस्य विश्वदेवः विश्वयशाः ॥

२४१५ ईयसश्च ॥ १५६ ॥ ईयसन्ताद्बहुव्रीहेः कप् न स्यात् । बहवः श्रेयांसोऽस्य बहुश्रेयान् बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी ॥

२४१६ वन्दिते भ्रातुः ॥ १५७ ॥ वन्दितेऽर्थे यो भ्रातृशब्दस्तदन्ताद्बहुव्रीहेः कप् न स्यात् ॥ शोभनो भ्राताऽस्य सुभ्राता ॥

२४१७ ऋतश्छन्दसि ॥ १५८ ॥ ऋदन्ताद्बहुव्रीहेश्छन्दसि विषये कप् स्यात् ॥ हता माताऽस्य हतमाता । हतपिता ॥

२४१८ नाडीतन्त्र्योः स्वाङ्गे ॥ १५९ ॥ स्वाङ्गे यो नाडीतन्त्रीशब्दौ तदन्ताद्बहुव्रीहेः कप् न स्यात् । बह्व्यो नाड्योऽस्य बहुनाडी कायः । बहुतन्त्रीः ग्रीवा ॥

२४१९ निष्प्रवाणिश्च ॥ १६० ॥ निष्प्रवाणिरिति बहुव्रीहौ कपः प्रतिषेधो निपात्यते प्रोयतेऽस्यामिति प्रवाणी प्रवयन्ति तया इति वा प्रवाणी । अधिकर-

दरिद्रति । चकासति । शासति । दीध्यते वेव्यते ॥

२४२६ तुजादीनां दीर्घोऽभ्यासस्य ॥७॥ तुजादीनामिति प्रकारे आदि शब्दः । कश्च प्रकारः ? तुजादीनाम् दीर्घोऽभ्यासस्य न विहितः, दृश्यते च । ये तथाभूतास्ते तुजादयस्तेषामभ्यासस्य दीर्घः साधुर्भवति ॥ 'तूतुजानः' (ऋ० सं० १।३।६) । मामहानः (............) । दाधार ( ऋ० सं० १ । ६६ । २ ) । दूनाव (ऋ० सं० १ । ६४ । २) । दीर्घश्चैषा छन्दसि प्रत्ययविशेषे एव दृश्यते । ततोऽन्यत्र न भवति 'तुतोज शवकान्' ।

२४२७ लिटि धातोरनभ्यासस्य ॥८॥ लिटि परेऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचः ( आदिभूतादचः परस्य सति सम्भवे द्वितीयस्यैव यथा योगं ) द्वे स्तः ॥ पपाच, पपाठ । ऊर्णुनाव ।

* द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम् 'यो जागार तमृचः कामयन्ते' (ऋ० सं० ५ । ४४ । १४) ॥ 'दाति प्रियाणि' (ऋ० सं० ४ । ८ । ३ ।

२४२८ सन्यङोः ॥ ९ ॥ सन्नन्तस्य यङन्तस्य चानभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचः (अजादेर्द्वितीयस्यैव यथा योगं) द्वे स्तः ॥ पिपक्षति अरिरिषति उन्दिदिषति । पापच्यते । अटाट्यते । यायज्यते । अरार्यते । ऊर्णोनूयते ॥

२४२९ श्लौ ॥१०॥ श्लौ विषयेऽनभ्यासस्य धातोरवयवस्य (प्रथमस्यैकाच अजादेर्द्वितीयस्यैव यथायोग ) द्वे भवतः ॥ जुहोति । बिभेति । जिह्रेति ॥

२४३० चङि ॥११॥ चङि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाच, अजादेर्द्वितीयस्यैव यथायोग द्वे भवत ॥ अपीपचत् । अपीपठत् । आटिटत् । आशिशत् । आर्दिदत् ॥

२४३१ दाश्वान्साह्वान्मीढ्वांश्च ॥१२॥ दाश्वान् साह्वान् मीढ्वान् इत्येते शब्दा निपात्यन्ते । 'दाशृ दाने' इत्येतस्य धातोः क्वसौ द्विर्वचनमनिट्त्वं च । 'दाश्वांसो दाशुषः सुतम्' ( ऋ० १।३।७ ) ॥ 'षह मर्षणे' इत्येतस्य परस्मैपदमुपधादीर्घत्वं द्विर्वचनाभावोऽनिट्त्वं च निपात्यते । साह्वान् ॥ मिह सेचने इत्यस्याद्विर्वचनमनिट्त्वमुपधादीर्घत्वं ढत्वं च निपात्यते । मीढ्वस्तोकाय तनयाय मृड । ऋ० २।३३। १४ ) ॥ एतच्छन्दस्येव ॥

* कृञादीनां के द्वे भवत इति वक्तव्यम् ॥ क्रियतेऽनेनेति चक्रम् । चिक्लिदम् ।

* चरि चलि पति वदीनां द्वित्वमच्याक्चाभ्यासस्य ॥ चरादीनां धातूनामचि प्रत्यये द्वे भवतः अभ्यासस्याऽऽगमो भवति । आगमविधानसामर्थ्याद्धलादिशेषो न ; चराचर चलाचल पतापत वदावद ॥

* वेति वक्तव्यम् ॥ तेन चरः, चलः पतः वद ॥

२४४२ स्त्यः प्रपूर्वस्य॥ २३॥ स्त्या इत्येतस्य प्रपूर्वस्य निष्ठायां संप्रसारणं स्यात् ॥ प्रस्तीतः प्रस्तीतवान् ॥

२४४३ द्रवमूर्तिस्पर्शयोः श्यः ॥२४॥ द्रवमूर्तौ द्रवकाठिन्ये स्पर्शे वर्तमानस्य श्यैङो निष्ठायां संप्रसारणं स्यात् ॥ शीनं घृतम्, शीना वसा। शीनं मेदः।

२४४४ प्रतेश्च ॥२५॥ प्रतेरुत्तरस्य श्यायतेर्निष्ठायां संप्रसारणं स्यात्। प्रतिशीनः प्रतिशीनवान् ॥

२४४५ विभाषाऽभ्यवपूर्वस्य ॥ २६ ॥ अभि अव इत्येवंपूर्वस्य श्यायतेर्निष्ठायां वा संप्रसारणं स्यात्। अभिशीनम् अभिश्यानम्। अवशीनम् अवश्यानम् ॥

२४४६ शृतं पाके ॥२७॥ श्राश्रपयत्योः शृतमिति वा निपात्यते ॥ शृतं क्षीरम्। शृतं हविः। श्राणा यवागूः श्रपिता यवागूरिति ॥

२४४७ प्यायः पी ॥२८॥ प्यायतेर्निष्ठायां वा पीभावः स्यात् ॥ पीनं मुखम् ॥ पीनौ बाहू। पीनमुरः ॥ इयमपि व्यवस्थितविभाषैव। तेनानुपसर्गस्य नित्यम्, सोपसर्गस्य तु नैव भवति—प्रप्यान आप्यानश्चन्द्रमा ॥

* आङ्पूर्वस्यान्धूधसोर्भवत्येव ॥ आपीनोऽन्धुः आपीनमूधः इति ॥

२४४८ लिड्यङोश्च ॥ २९ ॥ प्यायः पीत्ययमादेशः स्याल्लिटि यङि च ॥ आपिप्ये आपिप्यिरे। आपेपीयते ॥

२४४९ विभाषा श्वेः ॥ ३० ॥ लिटि यङि च श्वयतेर्धातोर्वा संप्रसारणं स्यात्। शुशाव शुशुवतुः। शिश्वाय शिश्वियतुः। शोशूयते शेश्वीयते ॥

२४५० णौ च संश्चङोः ॥३१ ॥ सन्परे चङ्परे च णौ श्वयतेर्वा संप्रसारणम्॥ शुशावयिषति शिश्वाययिषति। अशूशवत् अशिश्वयत् ॥

२४५१ ह्वः संप्रसारणम् ॥ ३२ ॥ सन्परे चङ्परे च णौ ह्वः संप्रसारणं स्यात् ॥ जुहावयिषति अजूहवत् ॥

२४५२ अभ्यस्तस्य च ॥ ३३ ॥ अभ्यस्तीभविष्यतो ह्वः संप्रसारणं स्यात्। जुहाव जोहूयते जुहूषति ॥

२४५३ बहुलं छन्दसि ॥ ३४ ॥ छन्दसि ह्वेञ्धातोर्वा संप्रसारणं स्यात् ॥ 'हुवे' (ऋ सं. ३।१९।४) ह्वेञो लडात्मनेपदोत्तमैकवचने बहुलं छन्दसीति शपो लुकि कृते संप्रसारणमुवङादेशश्च ॥ न च भवति—ह्वयामि (ऋ. सं. १।३५।१) ॥

२४५४ चायः की ॥ ३५ ॥ चायतेर्धातोश्छन्दसि बहुलं कीत्ययमादेशः स्यात् ॥ 'न्यन्यं चिकियुर्न नि चिक्युरन्यम् (ऋ. सं. १।१६४।३८) चिक्युरिति रूपम् ॥ न भवति निचाय्यः—(ऋ सं.१।१०५।१८) ॥

२४५५ अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताःश्रितमाशीराशीर्ताः॥३६॥ छन्दसीति वर्तते। 'स्पर्धसङ्घर्षे' इत्यस्य

सहते । षड्वदति ॥ 'आदेशप्रत्यययो'रित्यत्र षत्वव्यापारार्थं पाद्यो धातवः केचिदुपदिश्यन्ते । के पुनस्ते? ये तथा पठ्यन्ते अथवा लक्षणं क्रियते—अजदन्त्यपराः सादयः षोपदेशाः । स्मिङ्स्विदिस्वदिस्वञ्जिस्वपयश्च ॥ सकारपकारयोरनक्ष्वन्त्यत्वान्न सपतीति प्रत्यये विधानम् । सृपिसृजिस्तृस्त्यासेकृसृवर्जम् ॥

* सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः। षोडीयति षण्डीयति । ष्वष्कते । ष्ठिवु इत्यस्य द्वितीयस्थकारस्तकारश्चेष्यते । तेन तेष्ठीव्यते टेष्ठीव्यते इति भवति ॥

२४८४ णो नः ॥ ६५ ॥ धात्वादेर्णस्य नकारादेशः स्यात् ॥ णयति नमति नहति सुब्धातोरप्ययमिष्यते णकारमिच्छति नकारीयति ॥ 'उपसर्गादसमासेऽपि णोपदेशस्ये'त्यत्र णत्वार्थं पाद्यो धातवः केचिदुपदिश्यन्ते ॥ के पुनस्ते? ये तथा पठ्यन्ते अथवा लक्षणं क्रियते 'सर्वे णादयो णोपदेशाः नृतिनन्दिनर्दिनक्किनाटि नाथनाथृवर्जम् ॥

२४८५ लोपो व्योर्वलि ॥६६॥ वकारयकारयोर्लोपो वलि परे । दिव्-दिदिवान् । ऊयी 'ऊतम्' । 'क्नूयी क्नूतम्' । 'गोधाया ढ्रक्' गौधेरः पचेरन् ॥ वकारस्य 'जीवे रदानुक्' जीरदानुः । स्रिव आस्रेमाणम् । 'कृषादयो बहुलम्' इति बहुलवचनात् ऊठ्यो शूद्रलुनासिके चेति ऊठ् न भवति ॥

२४८६ वेरपृक्तस्य ॥६७॥ अपृक्तस्य वेर्लोपः स्यात् । ब्रह्महा भ्रूणहा घृतस्पृक् अर्धभाक् ॥

२४८७ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ॥६८॥ हलन्तात्परं, दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते ॥ राजा तक्षा ऊढवान् । कुमारी गौरी शार्ङ्गरवी खट्वा बहुराजा कारीषगन्ध्या ॥ हलन्तादेव तिलोपः सिलोपश्च । तत्र तिलोपस्तावत्-अबिभः अभिनत् । सिलोपः—अभिनोऽत्र । मतोर्नान्तस्य लोपे हि नलोपादिर्न सिध्यति तस्मात्तेनैव लोपः स्याद्धल्ङ्यादिभ्यस्तु दीयते ॥

२४८८ एङ्ह्रस्वात्सम्बुद्धेः ॥ ६९ ॥ एङन्ताद्ध्रस्वान्ताच्चाङ्गात् परो हल्लुप्यते स चेत्सम्बुद्धेरवयवः । हे अग्ने, हे वायो, हे देवदत्त, हे नदि, हे वधु, हे कुण्ड ॥ अङ्गग्रहणात्तु नेह—हे कतरत् ॥

२४८९ शेश्छन्दसि बहुलम् ॥ ७० ॥ 'शि' इत्येतस्य छन्दसि बहुलं लोपः ॥ 'अग्ने या ते धामानि यो सधस्था' (ऋ० सं० १।२०।२) । 'अग्ने यानि ते धामानि यानि सधस्थानि' इति प्राप्ते ॥

२४९० ह्रस्वस्य पिति कृति तुक् ॥७१॥ पिति कृति परतो ह्रस्वस्य तुगागमः स्यात् ॥ अग्निचित् । सोमसुत् प्रकृत्य । प्रहृत्य । उपस्तुत्य ॥

२४९१ संहितायाम् ॥ ७२ ॥ अधि-

यजुषि एङ् प्रकृत्या स्यात् ॥ 'ओ रुद्रेभ्यो सचपथाः' ।

२५४० सर्वत्र विभाषा गोः ॥१२१॥ छन्दसि भाषायां चाचि परतो गोरेङ् प्रकृत्या वा स्यात् । गोअग्रम् गोऽग्रम् । छन्दसि 'अपशवो वा अन्ये गोअश्वेभ्यः, पशवो गोअश्वाः' ।

२५४१ अवङ् स्फोटायनस्य ॥१२२॥ अचीति निवृत्तम् । सर्वोत्येतदनुवर्तते एव । अचि परतो गोरवङादेशो वा स्यात् ॥ गोअग्रम् गवाग्रम् । गवोदनम् गवौदनम् ॥

२५४२ इन्द्रे च ॥ १२३ ॥ इन्द्रशब्दस्थेऽचि गोर्नित्यमवङादेशः स्यात् ॥ गवेन्द्रः गवेन्द्रयज्ञश्वरः ।

२५४३ प्लुतप्रगृह्या अचि नित्यम् ॥१२४॥ प्लुताश्च प्रगृह्याश्चाचि नित्यं प्रकृत्या स्युः । देवदत्ता ३ अत्रागच्छ । यज्ञदत्ता ३ इममानय । अग्नी इति । वायू इति । खट्वे इति । पचेते इति ॥

२५४४ आङोऽनुनासिकश्छन्दसि ॥१२५ आङोऽचि परतः संहितायां छन्दसि अनुनासिकादेशः स्यात्, स च प्रकृत्या स्यात् ॥ अभ्र आँ अप (ऋ० सं० ५।४८।१) 'गभीर आँ उग्रपुत्रे जिघांसतः' (ऋ० सं० ८।६७।११) ॥

२५४५ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ १२६ ॥ इकोऽसवर्णेऽचि परतो वा प्रकृत्या स्युः ह्रस्वश्च तस्यैव स्थाने स्यात् ॥ दधि अत्र, दध्यत्र ॥ कुमारि अत्र कुमार्यत्र ॥

* सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः ॥ सिति 'ऋत्वियः' (ऋ.सं.१।१३५।३) नित्यसमासे-'व्याकरणम्' । 'कुमार्यर्थम्' ॥

* ईषाअक्षादिषु छन्दसि प्रकृतिभावमात्रं वाच्यम् 'ईषा अक्षः' (ऋ सं.८।५।२९) ॥

२५४६ ऋत्यकः ॥ १२७ ॥ ऋति परे अकः प्रकृत्या वा स्युः, तत्स्थाने ह्रस्वश्च ॥ ब्रह्मऋष्यः ब्रह्मर्ष्यः । कुमारि ऋक्षः ॥

२५४७ अप्लुतवदुपस्थिते ॥ १२८ ॥ उपस्थितमनार्ष इति शब्दः । तस्मिन्प्लुतोऽप्लुतवद्भवति ॥ सुश्लोका ३ इति 'सुश्लोकेति' (शु० य० प० क्रम० २०।३) ॥

२५४८ ई३ चाक्रवर्मणस्य ॥ १२९ ॥ ई३ प्लुतोऽचि परेऽप्लुतवद्वा ॥ उभयत्र विभाषेयमिति काशिका ॥ 'चिनु हीदम् चिनु ही३ इदम्' ॥ इकारादन्यत्राप्ययमप्लुतवद्भाव इष्यते-'वशा३ + इयम्' 'वशेयम्' (अथर्वसं० १२।४।४२) ॥

२५४९ दिव उत् ॥ १३० ॥ दिवः पदस्योकारादेशः स्यात् । द्युकामः । द्युमान् विमलद्युस्याम् । द्युभिः ।

२५५० एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ॥ १३१ ॥ अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि, न तु नञ्समासे ॥ एष ददाति । स ददाति । एषः भुङ्क्ते । स भुङ्क्ते ॥

२५५१ स्यश्छन्दसि बहुलम् । १३२ ॥ स्य इत्येतस्य छन्दसि हलि परे बहुलं सोर्लोपः स्यात् ॥ एष स्य वाजी क्षिपणिं

तत्ये गम्यमाने ॥ अपरस्पराः सार्था गच्छन्ति ॥ सततमविच्छेदेन गच्छन्तीत्यर्थः ॥

लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि ।
समो वा हिततयोर्मांसस्य पचियुड्घञोः ॥

२५६२ गोष्पदं सेवितासेवितप्रमाणेषु ॥ १४३ ॥ गोष्पदमिति सुट् निपात्यते तस्य च षत्वं सेवितेऽसेविते प्रमाणे च विषये ॥ गोष्पदो देशः ॥ अगोष्पदान्यरण्यानि गोष्पदमात्रं क्षेत्रम् ॥

२५६३ आस्पदं प्रतिष्ठायाम् ॥१४४॥ आत्मयापनाय स्थानं प्रतिष्ठा, तस्यामास्पदमिति सुट् निपात्यते । आस्पदमनेन लब्धम् ॥

२५६४ आश्चर्यमनित्ये ॥ १४५ ॥ अनित्यतया विषयभूतया अद्भुतत्वमिह लक्ष्यते तस्मिन्नाश्चर्यं निपात्यते ॥ 'चरेराङि चागुरौ' इति यत्प्रत्यये कृते निपातनात्सुट् । आश्चर्यं यदि स भुञ्जीत ॥

२५६५ वर्चस्केऽवस्करः ॥ १४६ ॥ कुत्सितं वर्चो वर्चस्कमन्नमलम्, तस्मिन्नभिधेयेऽवस्कर इति निपात्यते । अवपूर्वस्य किरतेः कर्मणि 'ऋदोरप्' इत्यप्, निपातनात्सुट् ॥ अवकीर्यते इत्यवस्करोऽन्नमलम् ॥

२५६६ अपस्करो रथाङ्गम् ॥ १४७ ॥ अपस्कर इति निपात्यते रथाङ्गं चेत् भवति । अपस्करो रथावयवः ॥

२५६७ विष्किरः शकुनौ वा ॥१४८॥ विष्किर इति किरतेर्विपूर्वस्य 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्यये विहिते सुट् निपात्यते शकुनिश्चेद्भवति विष्किरशब्दाभिधेयो वा शकुनिर्भवति । 'सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटादृते ॥' विष्किरो वा शकुनाविति वा ग्रहणादेव सुट् विकल्पे सिद्धे विष्किरग्रहणमिह तस्यापि शकुनेरन्यत्र प्रयोगो मा भूत् ॥ इति वृत्तिः । तन्न भाष्यविरोधात् ॥

२५६८ ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ॥१४९॥ चन्द्रशब्दे उत्तरपदे ह्रस्वात्परः सुडागमो भवति मन्त्रविषये ॥ सुश्चन्द्रो युष्मान् ॥

२५६९ प्रतिष्कशश्च कशेः ॥ १५० ॥ 'कश गतिशासनयोरित्यस्य प्रतिपूर्वस्य पचाद्यचि कृते सुट् निपात्यते तस्य च षत्वम् ॥ 'ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः' वार्तापुरुषः सहायः पुरोयायी वा 'प्रतिष्कशः' इत्यभिधीयते ॥

२५७० प्रस्कण्वहरिश्चन्द्रावृषी ॥१५१॥ प्रस्कण्व हरिश्चन्द्र इति सुट् निपात्यते ऋषी चेदभिधेयौ भवतः ॥ प्रस्कण्व ऋषिः हरिश्चन्द्र ऋषिः ॥ हरिश्चन्द्रग्रहणममन्त्रार्थम् ॥

२५७१ मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥१५२॥ मस्कर, मस्करिन् इत्येतौ वेणौ परिव्राजके च निपात्येते ॥ मस्करशब्दो ह्यव्युत्पन्नं प्रातिपदिकम् । तस्य वेणावभिधेये सुट् निपात्यते, परिव्राजके त्विनिरिति ॥ मस्करो वेणुः । मस्करी परिव्राजकः ॥

२५७६ उञ्छादीनां च ॥ १५७ ॥ उञ्छ इत्येवमादीनामन्त उदात्तः ॥ उञ्छः म्लेच्छः ॥

२५७७ अनुदात्तस्य च यत्रोदात्तलोपः ॥ १५८ ॥ यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात् । कुमार + ई कुमारी ॥

२५७८ धातोः ॥ १५९ ॥ धातोरन्त उदात्तः ॥ पचति पठति ऊर्णोति । गोपायति । याति ॥

२५७९ चितः ॥ १६० ॥ चितोऽन्त उदात्तः ॥ भङ्गुरम् भासुरम् मेदुरम् ॥

* चिति प्रकृतिप्रत्ययसमुदायान्तस्य उदात्त इष्यते ॥ बहुपटवः ॥

२५८० तद्धितस्य ॥ १६१ ॥ चितस्तद्धितस्यान्त उदात्तः स्यात् ॥ कौञ्जायनाः ॥

२५८१ कितः ॥ १६२ ॥ तद्धितस्य कितोऽन्त उदात्तः स्यात् । नाडायनः ॥

२५८२ तिसृभ्यो जसः ॥ १६३ ॥ तिसृभ्य उत्तरस्य जसोऽन्त उदात्तः स्यात् ॥ तिस्रस्तिष्ठन्ति ॥

२५८३ चतुरः शसि ॥ १६४ ॥ चतुरः शसि परतोऽन्त उदात्तः ॥ चतुरः पश्य ॥

२५८४ सावेकाचस्तृतीयादिर्विभक्तिः ॥ १६५ ॥ साविति सप्तमीबहुवचनस्य ग्रहणम् । तत्र यो य एकाच् तस्मात्परा तृतीयादिर्विभक्तिरुदात्ता स्यात् । वाचा । वाग्भ्याम् । वाग्भिः ॥

२५८५ अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ १६६ ॥ नित्यसमासादन्यत्रानित्यसमासे यदुत्तरपदमन्तोदात्तमेकाच् तस्मात्परा तृतीयादिविभक्तिर्वोदात्ता स्यात् ॥ परमवाचा परमवाचा । परमवाचे । परमवाचे ॥ यदा विभक्तिरुदात्ता न भवति तदा समासान्तोदात्तत्वमेव ॥

२५८६ अञ्चेश्छन्दस्यसर्वनामस्थानम् ॥ १६७ ॥ अञ्चेः परासर्वनामस्थानविभक्तिरुदात्ता छन्दसि विषये ॥ 'इन्द्रः दधीच अस्थऽभिः' (ऋ० प० १।८४।१३) ॥

२५८७ ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ॥ १६८ ॥ ऊठ्, इदम्, पदादि, अप्, पुम्, रै, दिव्, इत्येतेभ्योऽसर्वनामस्थानविभक्तिरुदात्ता ॥ ऊठ् प्रष्ठौहः प्रष्ठौहा ।

* ऊठ्युपधाग्रहणं कर्तव्यम् । इह मा भूत् अक्षद्युवा अक्षद्युवे ॥ इदम् आभ्याम् एभिः । अन्तोदात्तादित्यधिकारादन्वादेशे न भवति 'अथो आभ्यां निपुणमधीतमिति' ॥ पदादय पद्दन्नोमासित्येवमादयो निशपर्यन्ता इह गृह्यन्ते । 'नि पद्भश्चतुरो जहि' 'या

दुपोत्तम तदुदात्त स्यात्। सप्तभिः, तिसृभिः॥

२५९७ विभाषा भाषायाम्॥१७८॥ षट्त्रिचतुर्भ्यो या झलादिविभक्तिः, तदन्ते पदे उपोत्तममुदात्त वा स्याद्भाषायाम्। पञ्चभिः तिसृभिः चतसृभिः पञ्चभिः सप्तभिः तिसृभिः चतसृभिः॥

२५९८न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः॥१७९॥ गो, श्वन्, प्रथमैकवचने यदवर्णान्तम्, राड्, अङ्, क्रुङ्, कृद्, इत्येतेभ्यो यदुक्तं तन्न स्यात्। यथा गोभ्यामिति 'सावेकाचस्तृतीयादिर्विभक्ति' इति प्राप्तिः प्रतिषिध्यते॥ सुगवा 'अन्तोदात्तादुत्तरपदात्' इति प्राप्ति॥ श्वन् 'शुना' 'श्वभ्याम् परमशुना परमशुने परमश्वभ्याम् पूर्ववत्प्राप्ति॥ सावर्वण—येभ्यः तेभ्यः केभ्यः॥ राड्—राजा परमराजः॥ अङ्—अञ्चतिः पूजार्थक एवालुप्तनकारो गृह्यते—प्राङ्भिः। प्राङ्क्षु॥ गत्यर्थकस्याञ्चतेस्तु लुप्तनकारत्वाद् अङ्पदत्वाभावेन नैव निषेधः—प्राग्भ्याम् प्राक्षु॥ क्रुङ्—क्रुञ्चा॥ कृत् करोति। तिर्यो किबन्तः कृता परमकृता॥

२५९९ दिवो झल्॥१८०॥ दिवः परा झलादिविभक्तिर्नोदात्ता भवति॥ द्युभ्याम् द्युभिः 'सावेकाच' इति, 'ऊडिदंपदाद्यप्पुम्रै' द्युभ्यः इति वा प्राप्तिः प्रतिषिध्यते।

२६०० नृ चान्यतरस्याम्॥१८१॥ नृ इत्येतस्मात्परा झलादिविभक्तिर्वा नोदात्ता नृभ्याम् नृभिः नृभ्याम् नृभिः॥

२६०१ तित्स्वरितम्॥१८२ तिदन्तं स्वरितं स्यात्॥ यथा—चिकीर्ष्यम् जिहीर्ष्यम्॥ ऋहलोर्ण्यत्' कार्यम् हार्यम् कर्तव्यम्॥

२६०२ तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः॥१८३॥ तासेः, अनुदात्तेतो, ङितो, ऽकारान्तोपदेशाच्च, शब्दात्परं लसार्वधातुकमनुदात्तं स्यात्॥ ह्नुङ् इङ् इत्येताभ्यां परं वर्जयित्वा॥ तासेः—कर्ता कर्तारौ कर्तारः प्रत्ययस्वरापवादोऽयम्। अनुदात्तेत—आसः 'आस्ते' (ऋ० सं० ।७।५५।६)। वस 'वस्ते' (ऋ० सं० ४।२५।२) ङित् षूङ् 'सूते' अदुपदेशात् तुदतः। पचत (ऋ०सं० ।५।३४।१)। अनुबन्धस्यानेकान्तत्वाद् अकारोऽन्त्योपदेश एव शप्॥ यजमानः। (ऋ० सं० १।२४।११) यद्यत्र लुक् अकारमात्रस्य स्यात्तदा लसार्वधातुकमदुपदेशादनन्तरमिति सिद्धो नियात। अथाकारान्तस्याङ्गस्य तथापि लसार्वधातुकमनुदा-

स्वपमेव । लायते लायते वा स्वयमेव । लायते लायते वा स्वयमेव ॥

२६१२ थलि च सेटीडन्तो वा ॥१९३॥ सेटि थलि इड् वोदात्तोऽन्तो वादिर्वा ॥ लुलविथ लुलविथ । लुलविथ ॥ यदा नैते त्रयः स्वरास्तदा लिति प्रत्ययात्पूर्वमुदात्तं स्यात् लुलविथ । तेनैते चत्वारः स्वराः पर्यायेण भवन्ति ॥

२६१३ ञ्नित्यादिर्नित्यम् ॥ १९४ ॥ ञिति निति च नित्यमादिरुदात्तः स्यात् । गार्ग्यः वात्स्यः वासुदेवकः भर्जुनकः ॥

२६१४ आमन्त्रितस्य च ॥ १९५ ॥ आमन्त्रितस्यादिरुदात्तः स्यात् । देवदत्त देवदत्तौ देवदत्ताः ॥

२६१५ पथिमथोः सर्वनामस्थाने॥१९६॥ पथिमथोः सर्वनामस्थाने परत आदिरुदात्तः स्यात् ॥ पन्थाः पन्थानौ पन्थानः । मन्थानौ मन्थानः ।

२६१६ अन्तश्च तवै युगपत् ॥१९७॥ तवैप्रत्ययान्तः चशब्दादादिश्च युगपदुदात्तौ स्तः । एतवै ( ऋ० सू० १।४६।१० )

२६१७ क्षयो निवासे ॥ १९८ ॥ क्षयशब्दो निवासे आद्युदात्तः स्यात् ॥ क्षये (निवासे) आगृहि प्रयाम्यत् । अन्यत्र–'क्षयो (नाशो ) वर्तते दस्यूनाम्' ॥

२६१८ जयः करणम् ॥१९९॥ जयशब्दः करणवाची आद्युदात्तः ॥ जयन्ति तेनेति जयः(अश्वः) ॥ अन्यत्र–'जयो वर्तते ब्राह्मणानाम् ॥'

२६१९ वृषादीनां च ॥ २०० ॥ वृष इत्येवमादीनामादिरुदात्तः स्यात् । वृषः । जयः । आकृतिगणोऽयम् ॥

२६२० संज्ञायामुपमानम् ॥ २०१ ॥ उपमानशब्दः संज्ञायामाद्युदात्तः स्यात् । चञ्चा वध्रिका खरकुटी दासी ॥

२६२१ निष्ठा च द्व्यजनात् ॥ २०२ ॥ निष्ठान्तं च द्व्यच्कमाद्युदात्तं स्यात्तच्चेदाकारान्तं न ॥ दत्तः गुप्तः बुद्धः ॥ अन्यत्र–त्रातः आप्तः ॥

२६२२ शुष्कधृष्टौ ॥ २०३ ॥ शुष्कधृष्टौ इत्येतावाद्युदात्तौ स्तः ॥ शुष्कः धृष्टः ।

२६२३ आशितः कर्ता ॥ २०४ ॥ आशितशब्दः कर्तृवाची आद्युदात्तः स्यात् ॥ आशितो देवदत्तः ॥

२६२४ रिक्ते विभाषा ॥ २०५ ॥ रिक्तशब्दो वादिरुदात्तः ॥ रिक्तः । रिक्तः ॥

२६२५ जुष्टार्पिते च छन्दसि ॥२०६॥ जुष्ट अर्पित इत्येते शब्दरूपे छन्दसि विषये वाद्युदात्ते स्तः ॥ जुष्टः जुष्टः अर्पितः अर्पितः ॥

२६२६ नित्यं मन्त्रे ॥ २०७ ॥ जुष्ट अर्पित इत्येते शब्दरूपे मन्त्रविषये नित्यमाद्युदात्ते स्तः ॥ जुष्टं देवानाम् अर्पितं पितॄणाम् ॥

२६२७ युष्मदस्मदोर्ङसि ॥ २०८ ॥ युष्मदस्मदी मपर्यन्तप्रत्ययान्ते अन्तोदात्ते तयोर्ङसि परतः आदिरुदात्तः स्यात् ॥ तव स्वम् । मम स्वम् ॥

दात्तः ॥ 'यूपवल्कजः' यूपशब्द आद्युदात्तः ॥ ब्रह्मचारिपरिस्कन्दः ॥

२६४१ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ॥ २ ॥ सप्तैते पूर्वपदभूतास्तत्पुरुषे प्रकृत्या ॥ तुल्यश्वेतः । किरिणा काणः किरिकाणः ।

पञ्चम्यन्मन्दुयतसंज्ञम् (अ०सू० १।४।७) मन्यति मद्के इन्द्रे सप्तेति सप्तमीतत्पुरुषः ॥ शस्त्रीश्यामा ॥

*अव्यये नञ्कुनिपातानाम् । 'अयज्ञः अपठः' 'कुब्राह्मणः' 'प्रकृत्य' ॥ परिगणनं किम् ? स्नात्वाकालकः । मुहूर्तसुखम् । भोज्यलवणम् ॥

२६४२ वर्णो वर्णेष्वनेते ॥ ३ ॥ वर्णवाचिन्युत्तरपदे एतशब्दवर्जिते वर्णवाचि पूर्वपदं प्रकृत्या तत्पुरुषे ॥ कृष्णसारङ्गः । लोहितकल्माषः । कृष्णशब्दो नक्प्रत्ययान्तः । लोहितशब्द इतन्नन्तः ॥

२६४३ गाधलवणयोः प्रमाणे ॥४॥ एतयोरुत्तरपदयोः प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् ॥ अरित्रगाधम् उदकम् 'गोलवणम्' यावद्गवे दीयते तावदित्यर्थः । अरित्रशब्द इत्रान्तो मध्योदात्तः। प्रमाणमियत्तापरिच्छेदमात्रम्, न पुनरायाम एव ॥

२६४४ दायाद्यं दायादे ॥५॥ तत्पुरुषे प्रकृत्या ॥ धनदायादः । धनशब्दः क्युत्प्रत्ययान्तः, प्रत्ययस्वरेणाद्युदात्तः ॥

२६४५ प्रतिबन्धि चिरकृच्छ्रयोः ॥६॥ प्रतिबन्धिवाचि पूर्वपदं प्रकृत्या एतयोः परतस्तत्पुरुषे ॥ गमनचिरम् व्याकरणकृच्छ्रम् ॥ गमनं कारणविकलतया चिरकालभावि कृच्छ्रयोगि वा प्रतिबन्धि जायते ॥

२६४६ पदेऽपदेशे ॥७॥ व्याजवाचिनि पदशब्द उत्तरपदे पूर्वपदं प्रकृत्या स्यात् तत्पुरुषे ॥ मूत्रपदेन प्रस्थितः । उच्चारपदेन ॥ मूत्रशब्दो घञन्तः । उच्चारशब्दो घञन्तस्थाथादिस्वरेणान्तोदात्तः ॥

२६४७ निवाते वातत्राणे ॥८॥ निवातशब्दे परे वातत्राणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या ॥ कुटीनिवातम् कुड्यनिवातम् ॥ कुटीशब्दो गौरादिङीषन्तः । कुड्यशब्दो यगन्तोऽन्तोदात्तः ॥

२६४८ शारदेऽनार्तवे ॥९॥ ऋतौ भवमार्तवम् तदन्यवाचिनि शारदशब्दे परे तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात् ॥ रज्जुशारदमुदकम् । शारदशब्दो नूतनार्थः । तस्यास्वपदविग्रहः सद्यो रज्जुसमुद्धृतम् ॥ रज्जुशब्दः 'सृजेरसुम् च' इत्याद्युदात्तो व्युत्पादितः ॥

२६४९ अध्वर्युकषाययोर्जातौ ॥१०॥ एतयोः परतो जातिवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम् ॥ कठाध्वर्युः । कठशब्दः पचाद्यजन्तः । तस्माद् वैशम्पायनान्ते-

ऽन्तरो यतिः प्रकृत्या । प्रभूतौ (ऋ. सं. १।१२।१) । संभूति गोः ॥

२६९० तवै चान्तश्च युगपत् ॥ ५१ ॥ तवैप्रत्ययान्तस्यान्त उदात्तः, गतिश्चानन्तरः प्रकृत्या युगपच्चोभयं स्यात् ॥ अन्वेतवा उ ॥

२६९१ अनिगन्तोऽञ्चतौ वप्रत्यये ॥५२॥ अनिगन्तो गतिर्वप्रत्ययान्तेऽञ्चतौ परे प्रकृत्या ॥ ये पराञ्चस्तान् । इत्यत्र स्वरितत्वादयमेव ॥ अहि पूर्वाणि इत्यादि पराञ्चः (ऋ. सं. प० १।१०।१)

२६९२ न्यधी च ॥ ५३ ॥ वप्रत्यया न्यधी प्रकृत्या ॥ न्यङ्ङुदात्तः उदात्तस्वरितयोर्यण इति अध्यङ् ॥

२६९३ ईषदन्यतरस्याम् ॥ ५४ ॥ ईषत्कडारः ईषदित्ययमन्तोदात्तः ॥ पक्षे ईषत्कडारः ॥ ईषद्भेद इत्यादौ कृत्स्वर एव ॥

२६९४ हिरण्यपरिमाणं धने ॥ ५५ ॥ सुवर्णपरिमाणवाचि पूर्वपदं वा प्रकृत्या धने । द्वे सुवर्णे परिमाणमस्येति द्विसुवर्णं तदेव धनं द्विसुवर्णधनम् द्विसुवर्णधनम् ॥ बहुव्रीहावपि परत्वाद्द्विकाप एव ॥

२६९५ प्रथमोऽचिरोपसंपत्तौ ॥ ५६ ॥ प्रथमशब्दो वा प्रकृत्याभिनवत्वे ॥ प्रथमवैयाकरणः । संप्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः । प्रथमशब्दः प्रथेरमजन्तः । पक्षे प्रथमवैयाकरणः ॥

२६९६ कतरकतमौ कर्मधारये ॥ ५७ ॥ वा प्रकृत्या ॥ कतरकठः कतमकलापः ॥ पक्षे कतरकठः कतरकलापः ॥

२६९७ आर्यो ब्राह्मणकुमारयोः ॥ ५८ ॥ कर्मधारये ॥ आर्यकुमारः आर्यब्राह्मणः । आर्यो ण्यदन्तत्वात्स्वरितः ॥ पक्षे- आर्यब्राह्मणः आर्यकुमारः ॥

२६९८ राजा च ॥ ५९ ॥ ब्राह्मणकुमारयोः परतो वा प्रकृत्या कर्मधारये ॥ राजब्राह्मणः । राजकुमारः ॥ पक्षे राजब्राह्मणः राजकुमारः ॥

२६९९ षष्ठी प्रत्येनसि ॥ ६० ॥ षष्ठ्यन्तो राजा प्रत्येनसि परे वा प्रकृत्या ॥ राजप्रत्येनाः ॥ पक्षे- राजप्रत्येनाः ॥

२७०० क्ते नित्यार्थे ॥ ६१ ॥ क्तान्ते परे नित्यार्थे समासे पूर्वं वा प्रकृत्या ॥ नित्यप्रहसितः । कालाः इति द्वितीया समासोऽयम् ॥ नित्यशब्दस्त्यबन्त आद्युदात्तः । इति पाथादित्वादन्तोदात्तः ॥ पक्षे नित्यप्रहसितः ॥

२७०१ ग्रामः शिल्पिनि ॥ ६२ ॥
वा प्रकृत्या ॥ ग्रामनापितः ॥ ग्रामशब्दः आद्युदात्तः ॥ पक्षे—ग्रामनापितः ॥

२७०२ राजा च प्रशंसायाम् ॥६३ ॥
शिल्पिनि वाचिनि परे प्रशंसार्थं राजपदं वा प्रकृत्या ॥ राजनापितः । 'राजकुलालः पक्षे—राजनापितः । राजकुलालः ॥

२७०३ आदिरुदात्तः ॥ ६४ ॥
अधिकारोऽयम् ॥

२७०४ सप्तमी हारिणौ धर्म्येऽहरणे ॥६५॥
सप्तम्यन्तं हारिवाचि च आद्युदात्तं धर्म्ये परे ॥ देयं यः स्वीकरोति स हारीत्युच्यते । धर्म्यमित्याचारनियतं देयम् ॥ मुकुटे कार्षापणम् । हलेद्विपदिका ।'संज्ञायामिति सप्तमीसमासः' । 'कारनाम्नि च' इत्यलुक् ॥ याज्ञिकाश्वः वैयाकरणहस्ती ॥ कस्मिंश्च- ाचारे मुकुटादिषु कार्षापणादि दातव्यम् -याज्ञिकादीनां त्वश्वादिरिति ॥

२७०५ युक्ते च ॥ ६६॥ कर्तव्ये तत्परो युक्तः ॥ युक्तवाचिनि समासे पूर्वमाद्युदात्तम् ॥ गोवल्लवः ॥ अश्ववल्लवः ॥

२७०६ विभाषाऽध्यक्षे ॥ ६७ ॥
गवाध्यक्षः । गवाध्यक्षः ॥ अश्वाध्यक्षः अश्वाध्यक्षः ॥

२७०७ पापं च शिल्पिनि ॥ ६८ ॥
पापनापितः । पापनापितः ।

२७०८ गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ॥ ६९ ॥ भार्यासौश्रुतः सुश्रुतापत्यस्य भार्याप्रधानतया क्षेपः। अन्तेवासी- कुमारीदाक्षः । ओदनपाणिनीयाः कुमार्या- दिलाभकामा ये दाक्ष्यादिभिः प्रोक्तानि शास्त्राण्यधीयते ते एवं क्षिप्यन्ते ।'भिक्षा- माणवः' भिक्षां लप्स्येऽहमिति माणवः ॥ 'भयब्राह्मणः' भयेन ब्राह्मणः संपद्यते ॥

२७०९ अङ्गानि मैरेये ॥ ७० ॥
मद्यविशेषो मैरेयः । मधुमैरेयः ॥ मधु- विकारस्य तस्य मध्वङ्गम् ॥

२७१० भक्ताख्यास्तदर्थेषु ॥ ७१ ॥
भक्तमन्नम् ॥ भिक्षाकंसः । भाजीकंसः ॥ भिक्षादयोऽन्नविशेषाः ॥

२७११ गोबिडालसिंहसैन्धवेषूपमाने ॥ ७२ ॥ धान्यगवः । गोबिडालः । तृणा- सिंहः । सक्तुसैन्धवः ॥ धान्यं गौरिवेति विग्रहः। व्याघ्रादित्वात्समासः ॥गवाकृत्या संनिवेशितं धान्यं धान्यगवशब्देनोच्यते ॥

२७१२ अके जीविकार्थे ॥७३॥ 'दन्त- लेखकः' । यस्य दन्तलेखनेन जीविका ॥ 'नित्यं क्रीडा' इति समासः ।

२७१३ प्राचां क्रीडायाम् ॥ ७४ ॥
प्राग्देशवासिनां या क्रीडा तद्वाचिनि स- मासेऽकप्रत्ययान्ते परे पूर्वमाद्युदात्तं स्यात्

उद्दालकपुष्पभञ्जिका॥ संज्ञायामिति ण्वुल्॥

२७१४ अणि नियुक्ते ॥ ७५ ॥ अण्णन्ते परे नियुक्तवाचिनि समासे पूर्वमाद्युदात्तम्॥ छत्रधारः ॥

२७१५ शिल्पिनि चाकृञः ॥ ७६ ॥ शिल्पिवाचिनि समासे अण्णन्ते परे पूर्वमाद्युदात्तम्, स चेदण् कृञः परो न भवति ॥ तन्तुवायः ॥

२७१६ संज्ञायां च ॥ ७७ ॥ अण्णन्ते परे ॥ तन्तुवायो नाम कृमिः॥ अकृञ इत्येव रथकारो नाम ब्राह्मणः ॥

२७१७ गोतन्तियवं पाले ॥७८॥ गोपालः तन्तिपालः यवपालः ॥

२७१८ णिनि ॥ ७९ ॥ पुष्पहारी ॥

२७१९ उपमानं शब्दार्थप्रकृतावेव॥८०॥ उपमानवाचि पूर्वपदं णिन्यन्ते परे आद्युदात्तम्॥ उष्ट्रक्रोशी ध्वाङ्क्षरावी [illegible]॥

२७२० युक्तारोह्यादयश्च ॥ ८१ ॥ आद्युदात्ताः ॥ युक्तारोही। आगतयोधी। क्षीरहोता ॥

२७२१ दीर्घकाशतुषभ्राष्ट्रवटं जे ॥८२॥ कुटीजः। काशजः। तुषजः। भ्राष्ट्रजः। वटजः ॥

२७२२ अन्त्यात्पूर्वं बह्वचः ॥ ८३ ॥ बह्वचः पूर्वपदस्यान्त्यात्पूर्वमुदात्तं जे उत्तरपदे। उपसरजः आमलकीजः ॥

२७२३ ग्रामेऽनिवसन्तः ॥ ८४ ॥ ग्रामे परे पूर्वपदमाद्युदात्तं तच्चेन्न निवसद्वाचि न॥ मल्लग्रामः। ग्रामशब्दोऽत्र समूहवाची। देवग्रामः देवस्वामिकः ॥

२७२४ घोषादिषु च ॥ ८५ ॥ दाक्षिघोषः दाक्षिकटः दाक्षिह्रदः ॥

२७२५ छात्र्यादयः शालायाम् ॥८६॥ छात्रिशाला व्याडिशाला ॥

२७२६ प्रस्थेऽवृद्धमकर्क्यादीनाम् ॥८७॥ प्रस्थशब्दे उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं स्यात् ॥ इन्द्रप्रस्थः ॥

२७२७ मालादीनां च ॥ ८८ ॥ मालाप्रस्थः। शोणाप्रस्थः ॥

२७२८ अमहन्नवं नगरेऽनुदीचाम्॥८९॥ नगरे परे महन्नववर्जितं पूर्वपदमाद्युदात्तं स्यात् तच्चेदुदीचां न ॥ ब्रह्मनगरम् ॥

२७२९ अर्मे चावर्णं द्व्यच् त्र्यच् ॥९०॥ अर्मे परे द्व्यच् त्र्यच् पूर्वपदमवर्णान्तमाद्युदात्तम् ॥ गुप्तार्मम् कुक्कुटार्मम् ॥

२७३० न भूताधिकसंजीवमद्राश्मकज्जलम् ॥ ९१ ॥ अर्मे परे नैतान्याद्युदात्तानि ॥ भूतार्मम् अधिकार्मम् संजीवार्मम् ॥

*महाश्मग्रहणं संघातविगृहीतार्थम् महार्मम् अश्मार्मम् महाश्मार्मम् कज्जलार्मम् ॥

*आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्। दिवो दासाय दाशुषे ॥

२७३१ अन्तः ॥ ९२ ॥ अधिकारोयम् प्रागुत्तरपदादि ग्रहणात् ॥

२७३२ सर्वं गुणकात्स्न्र्ये ॥ ९३ ॥

सर्वशब्द पूर्वपदमन्तोदात्तम् ॥ सर्वश्वेत सर्वमहान् ॥

२७३३ संज्ञायां गिरिनिकाययोः ॥९४॥ एतयो परत पूर्वपदमन्तोदात्तं संज्ञायाम् ॥ अञ्जनागिरिः। मौण्डिनिकाय ॥

२७३४ कुमार्यां वयसि ॥ ९५ ॥

पूर्वपदमन्तोदात्तम्। वृद्धकुमारी । कुमारी शब्द पुंसा सहासम्प्रयोगमात्र प्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिः समानाधिकरणः । अत्र वय इह गृह्यते, न कुमारत्वमेव ॥

२७३५ उदकेऽकेवले ॥ ९६ ॥ अकेवल मिश्रम् तद्वाचिनि समासे उदके परे पूर्वपदमन्तोदात्तम्। गुडोदकम् स्वरे कृतेऽत्रैकादेशः ॥ 'स्वरितो वाऽनुदात्ते पदादौ' इति पक्षे स्वरित ॥ ॥ गुडोदकम्।

२७३६ द्विगौ क्रतौ ॥९७॥ द्विगा उत्तर पदे क्रतुवाचिनि समासे पूर्वपदमन्तोदात्तम् गर्गत्रिरात्रः ॥

२७३७ सभायां नपुंसके ॥ ९८ ॥ सभायां परतो नपुंसकलिङ्गे समासे पूर्वपदमन्तोदात्तम् ॥ गोपालसभम् । स्त्रीसभम् ॥

२७३८ पुरे प्राचाम् ॥ ९९ ॥ देवदत्तपुरम्। नान्दीपुरम् ॥

२७३९ अरिष्टगौडपूर्वे च ॥ १०० ॥ पुरे परे अरिष्टगौडपूर्वे समासे पूर्वपदमन्तोदात्तम् ॥ अरिष्टपुरम् । गौडपुरम् ॥

२७४० न हास्तिनफलकमार्देयाः ॥१०१॥ पुरे परे नैतान्यन्तोदात्तानि ॥ हास्तिनपुरम् फलकपुरम्। मार्देयपुरम् ॥

२७४१ कुसूलकूपकुम्भशालं बिले॥१०२ एतान्यन्तोदात्तानि बिले परे ॥ कुसूलबिलम् कूपबिलम् कुम्भबिलम् शालबिलम्

२७४२ दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ॥ १०३ ॥ दिक्शब्दा अन्तोदात्ता स्युरेषु परेषु ॥ पूर्वेषुकामशमी॥ अपरकृष्णमृत्तिका। जनपद पूर्वपञ्चालाः आख्यान-पूर्वयायातम्। पूर्वचानराटम्।

२७४३ आचार्योपसर्जनश्चान्तेवासिनि ॥ १०४ ॥ आचार्योपसर्जनान्तेवासिनि परे दिक्शब्दा अन्तोदात्ता भवन्ति ॥ पूर्वपाणिनीयाः ॥

सुमनाः सुवर्चाः ॥

२७५७ क्रत्वादयश्च ॥११८॥ सोः परे आद्युदात्ताः स्युः ॥ साम्राज्यम् सुक्रतुः । सुप्रतीकाः । सुहव्यः ॥

२७५८ आद्युदात्तं द्व्यच् छन्दसि ॥११९॥ यदाद्युदात्तं द्व्यच् तत्सोरुत्तरं बहुव्रीहावाद्युदात्तमेव ॥ अधा स्वश्वाः । सुरथा । आतिथिग्वे (ऋ० सं० ८।६८।१६) नित्स्वरेणाश्वरथावाद्युदात्तौ ॥

२७५९ वीरवीर्यौ च ॥१२०॥ सोः परौ बहुव्रीहौ छन्दस्याद्युदात्तौ ॥ सुवीरेण सुवीर्यस्य ॥ वीर्यशब्दो यत्प्रत्ययान्तः तत्र 'यतोऽनावः' इत्याद्युदात्तत्वं नेति वीर्यग्रहणं ज्ञापकम् । तत्र हि सति पूर्वेणैव सिद्धं स्यात् ॥

२७६० कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥ १२१ ॥ उत्तरपदमाद्युदात्तम् ॥ उपकूलम् । उपतीरम् । उपतूलम् । उपशालम् । उपाक्षम् । सुषमम् । निःषमम् । तिष्ठद्गुप्रभृतिष्वेते ॥

२७६१ कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ॥१२२॥ उत्तरपदमाद्युदात्तम् ॥ द्विकंसः द्विमन्थः द्विशूर्पः द्विपाय्यम् । द्विकाण्डम् ॥

२७६२ तत्पुरुषे शालायां नपुंसके ॥१२३॥ शालाशब्दान्ते तत्पुरुषे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तम् ॥ ब्राह्मणशालम् ॥

२७६३ कन्था च ॥१२४॥ तत्पुरुषे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तम् ॥ सौशमिकन्थम् । आह्वरकन्थम् ॥

२७६४ आदिश्चिहणादीनाम् ॥१२५॥ कन्थान्ते तत्पुरुषे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तः ॥ चिहणकन्थम् मड्डरकन्थम् ॥ आदिरिति वर्तमाने पुनरादिग्रहणं पूर्वपदस्याद्युदात्तार्थम् ॥

२७६५ चेलखेटकटुककाण्डं गर्हायाम् ॥१२६॥ चेलादीन्युत्तरपदान्याद्युदात्तानि ॥ पुत्रचेलम् । नगरखेटम् । दधिकटुकम् । प्रजाकाण्डम् । चेलादि सादृश्येन पुत्रादीनां गर्हा । व्याघ्रादित्वात्समासः ॥

२७६६ चीरमुपमानम् ॥ १२७ ॥ उपमानवाचि चीरमुत्तरपदं तत्पुरुषे समासे आद्युदात्तं स्यात् ॥ वस्त्रं चीरमिव वस्त्रचीरम् कम्बलचीरम् ॥

२७६७ पललसूपशाकं मिश्रे ॥१२८॥ घृतपललम् । घृतसूपः । घृतशाकम् । 'भक्ष्येण मिश्रीकरणम्' इति समासः ॥

२७६८ कूलसूदस्थलकर्षाः संज्ञायाम् ॥ १२९ ॥ आद्युदात्तास्तत्पुरुषे संज्ञायाम् ॥ दाक्षिकूलम् । शाण्डिसूदम् दाण्डायनस्थलम् । दाक्षिकर्षः ॥ ग्रामसंज्ञा एताः ॥

२७६९ अकर्मधारये राज्यम् ॥१३०॥ कर्मधारयवर्जिते तत्पुरुषे राज्यमुत्तरपदमाद्युदात्तम् ॥ ब्राह्मणराज्यम् ॥

'शचीभिः' ( ऋ० १।३०।१५ ) इति दर्शनात् ॥ तनूनपात् (ऋ० स ३।२९।११) । नराशंसः (ऋ० स० २।३।२) निपातनाद्दीर्घः ॥ शुनःशेपः (ऋ०।स० १।२४।१२) ॥

२७८० देवताद्वन्द्वे च ॥ १४१ ॥

उभे युगपत्प्रकृत्या स्तः ॥ आ व इन्द्रावरुणौ । इन्द्रा बृहस्पती (ऋ० स० ४।४९।५)

२७८१ नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ॥ १४२ ॥

पृथिव्यादिवर्जितेऽनुदात्तादावुत्तरपदे प्रागुक्तं न ॥ इन्द्राग्निभ्याम् (ऋ० सं० १।१०९।३) ॥ अपृथिव्यादौ किम् 'द्यावापृथिवी' । आद्युदात्ता 'द्यावा' निपात्यते । पृथिवीत्यन्तोदात्त ॥ सोमारुद्रौ 'रोदेर्णिलुक्चे'ति रगन्तो रुद्रशब्दः ॥ इन्द्रापूषणौ । 'श्वन्नुक्षन्पूषन्' इति पूषा अन्तोदात्तो निपात्यते ॥ शुक्रामन्थिनौ' मन्थिन्निन्नन्तत्वादन्तोदात्तः ॥ उत्तरपदग्रहणमनुदात्तादावित्युत्तरपदविशेषणं यथा स्यात्, द्वन्द्वविशेषणं मा भूत् । अनुदात्तादाविति विधिप्रतिषेधयोर्विषयविभागार्थम् ॥

२७८२ अन्तः ॥ १४३ ॥

अधिकारोऽयम् ॥

२७८३ थाथघञ्क्ताजबित्रकाणाम् ॥ १४४ ॥

थ अथ घञ्, क्त, अच्, अप्, इत्र, क, एतदन्तानां गतिकारकोपपदात्परेषामन्त उदात्तः ॥ प्रभृथस्य । आवसथः । प्रभेदः । पुरुष्टुतः । प्रक्षयः प्रजवः । प्रलवित्रम् । गोवृषः ॥ 'गतिकारकोपपदा'दित्येव । सुस्तुतं भवता ॥

२७८४ सूपमानात् क्तः ॥ १४५ ॥

सोरुपमानाच्च परं क्तान्तमन्तोदात्तम् ॥ सुकृतस्य । शशप्लुतः ॥

२७८५ संज्ञायामनाचितादीनाम् ॥ १४६ ॥

गतिकारकोपपदात् क्तान्तमन्तोदात्तमाचितादीन्वर्जयित्वा । उपहूतः । शाकलपः । परिजग्धः कौण्डिन्यः ॥

२७८६ प्रवृद्धादीनां च ॥ १४७ ॥

एषां क्तान्तमुत्तरपदमन्तोदात्तम् ॥ प्रवृद्धः । प्रयुक्तः । असंज्ञार्थोऽयमारम्भः ॥ आकृतिगणः ॥

२७८७ कारकाद्दत्तश्रुतयोरेवाशिषि ॥ १४८ ॥

संज्ञायामन्त उदात्तः ॥ देवदत्तः । विष्णुश्रुतः ।

२७८८ इत्थंभूतेन कृतमिति च ॥ १४९ ॥

इत्थंभूतेन कृतमित्येतस्मिन्नर्थे यः समासस्तत्र क्तान्तमुत्तरपदमन्तोदात्तं स्यात् ॥ सुप्तप्रलपितम् प्रमत्तगीतम् । कृतमिति क्रिया सामान्ये । करोतिर्नाभूतप्रादुर्भाव एव तेन प्रलपितादपि कृतं भवति । तृतीया कर्मणि त्यस्यापवादः ॥

उक्-अनाभासुकः । इष्णुच्-अनलंकरिष्णुः ॥ इष्णुच्ग्रहणे खिष्णुचो ह्यनुबन्धकस्यापि ग्रहणमिकारादेर्विधानसामर्थ्यात् । अनाढ्यं भविष्णुः । चार्वादि अचारुः असाधुः ॥

* राजान्होश्छन्दसि अराजा ।अनहः ॥ भाषायां नञ् स्वर एव ॥

२८०० विभाषा तृन्नन्नतीक्ष्णशुचिषु ॥१६१॥ तृन्-अकर्ता । अन्न—अनन्नम् अतीक्ष्णम् । अशुचि ॥ पक्षेऽव्ययस्वरः ।

अकर्ता अनन्नम् अतीक्ष्णम् अशुचि ॥

२८०१ बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥१६२॥ एभ्योऽन्त उदात्तः ॥ इदं प्रथममस्य इदंप्रथमः एतद्द्वितीय । तत्पञ्चमः ॥ 'बहुव्रीहौ' इत्यधिकारः 'वन समासे' इत्यतः प्राग् बोध्यः ॥

२८०२ संख्यायाः स्तनः ॥ १६३ ॥ बहुव्रीहावन्तोदात्तः । द्विस्तना चतुस्तना ॥

२८०३ विभाषा छन्दसि ॥ १६४ ॥ द्विस्तना द्विस्तना ॥

२८०४ संज्ञायां मित्राजिनयोः ॥१६५॥ देवमित्रः । कृष्णाजिनम् ॥

* ऋषिप्रतिषेधो मित्रे । विश्वामित्र ऋषिः ॥

२८०५ व्यवायिनोऽन्तरम् ॥१६६॥ व्यवधानवाचकात्परमन्तरमन्तोदात्तम् । वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः ॥

२८०६ मुखं स्वाङ्गम् ॥१६७॥ स्वाङ्गं मुखमुत्तरपदं बहुव्रीहावन्तोदात्तम् ॥ गौरमुखः ॥

२८०७ नाव्ययदिक्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ॥१६८॥ उच्चैर्मुखः । प्राङ्मुखः । गोमुखः महामुखः । स्थूलमुखः । मुष्टिमुखः । पृथुमुखः । वत्समुखः पूर्वपदप्रकृतिस्वरोऽत्र । गोमुखिवत्स पूर्वपदस्योपमानलक्षणोऽपि विकल्पोऽनेन बाध्यते ॥

२८०८ निष्ठोपमानादन्यतरस्याम् ॥ निष्ठान्तादुपमानवाचिनश्च परं मुखं स्वाङ्गं वान्तोदात्तं बहुव्रीहौ ॥ प्रक्षालितमुखः । पक्षे 'निष्ठोपसर्गेति पूर्वपदान्तोदात्तत्वे (प्रक्षालितमुखः) पूर्वपदप्रकृति स्वरत्वेन गति स्वरोऽपि भवति ॥ (प्रक्षालितमुखः) उपमानात् सिंहमुखः ॥

२८०९ जातिकालसुखादिभ्योऽनाच्छादनात्क्तोऽकृतमितप्रतिपन्नाः ॥१७०॥ आच्छादनवर्जिताज्जातिवाचिनः कालवाचिनः सुखादिभ्यश्च परं क्तान्तं कृतमित प्रतिपन्नान् वर्जयित्वा बहुव्रीहावन्तोदात्तम् ॥ सारङ्गजग्धः । मासजातः । सुखजातः । दुःखजातः ॥

२८१० जाते ॥१७१॥ जाति काल सुखादिभ्यः परो जातशब्दो वान्तोदात्तः ।

२८२५ अपाङ्ग ॥ १८६ ॥ सुखमन्तोदात्तम् ॥ अपमुखम् ॥ योगविभाग उत्तरार्थः ॥

२८२६ स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनाम नाम च ॥ १८७ ॥ अपाद्विमान्यन्तोदात्तानि ॥ अपस्फिगम् । अपपूतम् अपवीणम् । अञ्जस् अपाञ्जः । अध्वन् अपाध्वा । 'उपसर्गादध्वन' इत्यस्याभाव इदम् ॥ एतदेव च ज्ञापकं समासान्तानित्यत्वे ॥ अपकुक्षिः । सीरनाम–अपसीरम् अपहलम् । नाम अपनाम ॥

२८२७ अधेरुपरिस्थम् ॥ १८८ ॥ अध्यारूढो दन्तः अधिदन्तः ॥ दन्तस्योपरिजातो दन्तः ॥

२८२८ अनोरप्रधानकनीयसी ॥ १८९ ॥ अनोः परमप्रधानवाचि कनीयश्चान्तोदात्तम् ॥ अनुगतो ज्येष्ठम् अनुज्येष्ठः । पूर्वपदार्थप्रधानः प्रादिसमासः ॥ 'अनुगतः कनीयान् अनुकनीयान् । उत्तरपदार्थप्रधानः ॥ प्रधानार्थं च कनीयोग्रहणम् ॥

२८२९ पुरुषश्चान्वादिष्टः ॥ १९० ॥ अनोः परोऽन्वादिष्टवाची पुरुषोऽन्तोदात्तः ॥ अन्वादिष्टः पुरुषः अनुपुरुषः ॥

२८३० अतेरकृत्पदे ॥ १९१ ॥ अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तः । अत्यङ्कुशो नागः । अतिपदा गायत्री ॥

* अतेर्धातुलोप इति वाच्यम् ॥ इह मा भूत्—शोभनो गार्ग्यः = अतिगार्ग्यः । इह च स्यात् अतिक्रान्तः कारकम् – अतिकारकः ॥

२८३१ नेरनिधाने ॥ १९२ ॥ नेः परमुत्तरपदमन्तोदात्तम् ॥ निधानमप्रकाशता ततोऽन्यदनिधानं प्रकाशनमित्यर्थः ॥ निमूलम् न्यक्षम् ॥

२८३२ प्रतेरंश्वादयस्तत्पुरुषे ॥ १९३ ॥ प्रतेः परेंऽश्वादयोऽन्तोदात्ताः । प्रतिगतोंऽशुः प्रत्यंशुः । प्रतिजनः ॥ प्रतिराजा समासान्तस्यानित्यत्वान्न टच् ॥

२८३३ उपाद् द्व्यजजिनमगौरादयः ॥ १९४ ॥ उपात्परं यद् द्व्यचकमजिनं चान्तोदात्तं तत्पुरुषे गौरादीन्वर्जयित्वा ॥ उपदेवः । उपेन्द्रः उपाजिनम् ॥

२८३४ सोरवक्षेपणे ॥ १९५ ॥ तत्पुरुषे सुशब्दात् परमुत्तरपदमन्तोदात्तम् निन्दायाम् ॥ सुस्थण्डिले सुस्फीतास्याम् । सुप्रत्यवसितः ॥ सुरत्र पूजायामेव ॥ वाक्यार्थस्त्वत्र निन्दा, यद्यथा तथाऽभिधानात् ॥

२८३५ विभाषोत्पुच्छे ॥ १९६ ॥ तत्पुरुषे ॥ उत्क्रान्तः पुच्छात् उत्पुच्छः उत्पुच्छः ॥ यदा पुच्छमुदस्यति उत्पुच्छयते । एरच् । उत्पुच्छः तदा थाथादिस्वरेण नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयम् । सेयमुभयत्रविभाषा ॥

इति वाच्यम् ॥ आत्मनस्तृतीयाया अलुक् पूरणप्रत्ययान्ते उत्तरपदे॥ आत्मनापञ्चमः।

२८४५ वैयाकरणाख्यायां चतुर्थ्याः॥७॥ आत्मनश्चतुर्थ्या अलुक् वैयाकरणाख्यायाम्॥ आत्मनेपदम्। आत्मनेभाषा॥

२८४६ परस्य च ॥८॥ परस्य च या चतुर्थी तस्या वैयाकरणाख्यायाम् अलुक्॥ परस्मैपदम्। परस्मैभाषा॥

२८४७ हलदन्तात् सप्तम्याः संज्ञायाम् ॥९॥ हलन्तादद‍न्ताच्च सप्तम्या अलुक् संज्ञायाम्॥ युधिष्ठिरः। अरण्येतिलकः॥

२८४८ कारनाम्नि च प्राचां हलादौ ॥१०॥ प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हलदन्तात्सप्तम्या अलुक् सूपेशाणः। दृषदिमाषकः। हलेद्विपदिका। कारविशेषस्य संज्ञा एता। तत्र पूर्वेणैव सिद्धे नियमार्थम्॥

२८४९ मध्याद्गुरौ ॥११॥ मध्यात्स सप्तम्या अलुक् उत्तरपदे गुरौ॥ मध्येगुरुः।

* अन्ताच्चेति वक्तव्यम्॥ अन्तेगुरुः॥

२८५० अमूर्द्धमस्तकात्स्वाङ्गादकामे ॥१२॥ मूर्द्धमस्तकवर्जितात्स्वाङ्गात्सप्तम्या अलुक् स्यादकाम उत्तरपदे॥ कण्ठेकालः। उरसिलोमा॥

२८५१ बन्धे च विभाषा ॥१३॥ बन्धे उत्तरपदे हलदन्तात्सप्तम्या अलुग्वा। हस्तेबन्धः हस्तबन्धः। चक्रेबन्धः चक्रबन्धः॥

२८५२ तत्पुरुषे कृति बहुलम् ॥१४॥ तत्पुरुषे समासे कृदन्त उत्तरपदे सप्तम्या बहुलमलुक्स्यात्॥ स्तम्बेरमः। कर्णेजपः॥ न च भवति—कुरुचरः मद्रचरः॥

२८५३ प्रावृट्शरत्कालदिवां जे ॥१५॥ एषां जे उत्तरपदे सप्तम्या अलुक्॥ प्रावृषिजः। शरदिजः। कालेजः। दिविजः। पूर्वस्यवायं प्रपञ्चः॥

२८५४ विभाषा वर्षक्षरशरवरात् ॥१६॥ एभ्यः सप्तम्या अलुक् विभाषोत्तरपदे॥ वर्षेजः वर्षजः। क्षरेजः क्षरजः। शरेजः शरजः। वरेजः वरजः॥

२८५५ घकालतनेषु कालनाम्नः ॥१७॥ घसञ्ज्ञके प्रत्यये परे, कालशब्दे तनप्रत्यये च कालनाम्न सप्तम्या विभाषा अलुक्॥ घ-पूर्वाह्णेतरे पूर्वाह्णतरे। पूर्वाह्णेतमे पूर्वाह्णतमे। पूर्वाह्णेकाले पूर्वाह्णकाले। पूर्वाह्णेतने पूर्वाह्णतने॥

२८५६ शयवासवासिष्वकालात् ॥१८॥ शयवासवासिन्नित्येतेषूत्तरपदेष्वकालवाचिनः सप्तम्या विभाषा अलुक् स्यात्॥ खेशयः खशयः। ग्रामेवासः ग्रामवासः। ग्रामेवासी ग्रामवासी॥

* अपो योनि यन्मतिषु सप्तम्या अलुग्वक्तव्यः॥ अप्सुयोनिः। अप्सव्यः। अप्सुमतिः॥ हरदत्तस्तु 'मतुपु' इति पठित्वा अप्सुमन्ती इत्युदाजहार॥

२८५७ नेन्सिद्धबध्नातिषु च ॥१९॥

शिवैश्रवणौ' इत्येवमादौ न भवति ॥

* उभयत्र वायोः प्रतिषेधो वक्तव्यः । अग्निवायू । वाय्वग्नी ॥

२८६५ ईदग्नेः सोमवरुणयोः ॥ २७ ॥ सोमवरुण इत्येतयोर्देवताद्वन्द्वेऽग्नेरीकारादेशः । आग्नीषोमौ । आग्नीवरुणौ ।

२८६६ इद्वृद्धौ ॥२८॥ वृद्धिमत्युत्तरपदेऽग्नेरिदादेशः स्यात् । आग्निवारुणीमनड्वाहीमालभेत । आग्निमारुतं क्रियते । अग्नीवरुणौ देवता यस्य अग्नामरुतौ देवताऽस्येति च विग्रहः । तत्र 'देवताद्वन्द्वे चे'त्युभयपदवृद्धौ कृतायाम् आनङ् ईत्वं च बाधितुमिकारः क्रियते ।

* इद्वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः । आग्नावैष्णवं चरुं निर्वपेत् ।

२८६७ दिवो द्यावा ॥ २९ ॥ दिवित्येतस्य द्यावा इत्ययमादेशः स्याद् देवताद्वन्द्वे उत्तरपदे । द्यावाक्षमा । द्यावाभूमी ।

२८६८ दिवसश्च पृथिव्याम् ॥ ३० ॥ पृथिव्यामुत्तरपदे देवताद्वन्द्वे दिवो दिवसित्ययमादेशः । चाद् द्यावा ॥ दिवस्पृथिव्यौ द्यावापृथिव्यौ । अकारोच्चारणं सकारस्य विकाराभावप्रतिपत्त्यर्थम् । तेन रुत्वादीनि न भवन्ति ॥ कथं 'द्यावा चिदस्मै पृथिवी नमेते' इति ? कर्तव्योऽत्र यत्नः ॥

२८६९ उषासोषसः ॥३१॥ उषस उषासा इत्ययमादेशो देवताद्वन्द्वे उत्तरपदे ॥ उषासासूर्यम् । उषासानक्ता ।

२८७० मातरपितरावुदीचाम् ॥३२॥ उदीचां मते मातरपितरौ निपात्येते । मातापितरौ ।

२८७१ पितरामातरा च छन्दसि ॥३३॥ पितरामातरा इति छन्दसि निपात्यते । आ मा गन्तां पितरामातरा च ॥

२८७२ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ ३४ ॥ भाषितपुंस्कादनूङ् ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात्समानाधिकरणे पूरणीप्रियादिवर्जिते स्त्रीलिङ्गे उत्तरपदे ॥ दर्शनीयभार्यः । श्लक्ष्णचूडः । दीर्घजङ्घः । दृढभक्तिरित्येवमादिषु—

* पूर्वपदे स्त्रीत्वस्याविवक्षितत्वात्सिद्धमिति समाधेयम् ॥

२८७३ तसिलादिष्वाकृत्वसुचः ॥३५॥ 'पञ्चम्यास्तसिल्' इत्यतः प्रभृति 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति प्रागेतस्मात् ये प्रत्ययास्तेषु भाषितपुंस्कादनूङ् स्त्रियाः पुंवद्भवन्ति । तसिलादिषु परिगणनं कर्तव्यम् त्रतसौ, तरप्तमपौ, चरट्जातीयरौ, कल्पब्देश्यदेशीयरः, रूपप्पाशपौ, थम्थालौ दार्हिलौ तिल्थ्यनौ ॥ तस्याः शालायाः 'ततः' । तस्याम् 'तत्र' ।

* शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः । बह्वीभ्यो देहि बहुशो देहि । अल्पाभ्यो देहि अल्पशो देहि ।

घादिषु ह्रस्वो वा । ब्रह्मबन्धुतरा ब्रह्मबन्धूतरा स्त्रियतरा स्त्रीतरा ॥

* कृन्नद्याः प्रतिषेधः लक्ष्मीतरा ॥

२८८३ उगितश्च ॥ ४५ ॥ उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात् ॥ विदुषितरा विदुषीतरा ।

२८८४ आन्महतः समानाधिकरणजातीययोः ॥ ४६ ॥ समानाधिकरणे उत्तरपदे जातीये च प्रत्यये परतो महत आकारादेशः स्यात् ॥ महादेवः महाब्राह्मणः महाबाहुः । महाजातीयः ॥

* महदात्वे घासकरविशिष्टेषूपसंख्यानम् । पुंवद्वचनं चासमानाधिकरणार्थम् । महत्या घासः महाघासः । महाकरः । महाविशिष्टः ॥

* अष्टन आत्वे कपाले हविष्युपसंख्यानम् । अष्टाकपालं चरुं निर्वपेत् ॥

* गवि च युक्तेऽष्टन उपसंख्यानम् । अष्टागवेन शकटेन ॥

२८८५ द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥ ४७ ॥ द्वि अष्टन् इत्येतयोरात्वम् आकारादेशः स्यात्संख्यायामुत्तरपदेऽबहुव्रीह्यशीत्योः ॥ द्वादश द्वाविंशतिः द्वात्रिंशत् । अष्टादश अष्टाविंशतिः अष्टात्रिंशत् ॥

* प्राक् शतादिति वक्तव्यम् ॥ इह मा भूत् द्विशतम् द्विसहस्रम् अष्टशतम् अष्टसहस्रम् ॥

२८८६ त्रेस्त्रयः ॥ ४८ ॥ त्रि इत्येतस्य त्रयस् इत्ययमादेशः स्यात्संख्यायामबहुव्रीह्यशीत्योः ॥ त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् ॥

* प्राक् शतादित्येव । त्रिशतम् त्रिसहस्रम् ॥

२८८७ विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ४९ ॥ चत्वारिंशत्प्रभृतौ संख्यायामुत्तरपदेऽबहुव्रीह्यशीत्योः सर्वेषां द्वि अष्टन् त्रि इत्येतेषां यदुक्तं तद्वा स्यात् ॥ द्वाचत्वारिंशत् द्विचत्वारिंशत् । त्रिपञ्चाशत् त्रयःपञ्चाशत् । अष्टापञ्चाशत् अष्टपञ्चाशत् ॥ प्राक् शतादित्येव । द्विशतम् । अष्टशतम् । त्रिशतम् ॥

२८८८ हृदयस्य हृल्लेखयदण्लासेषु ॥ ५० ॥ हृदयस्य हृदादेशः स्यात् लेख यत् अण् लास इत्येतेषु परतः ॥ हृदयं लिखतीति हृल्लेखः । हृदयस्य प्रियं हृद्यम् । हृदयस्येदं हार्दम् । हृदयस्य[1] लासो हृल्लासः । लेख इत्यणन्तस्य ग्रहणमिष्यते घञि तु हृदयलेखः ॥

२८८९ वा शोकष्यञ्रोगेषु ॥ ५१ ॥ एषु हृदयस्य हृदादेशो वा ॥ हृच्छोकः हृदयशोकः । सौहार्दम् सौहृदय्यम् । हृद्रोगः हृदयरोगः ॥ हृदयशब्देन समानार्थो 'हृद्'

१ 'मद्ये तैले तथा भाषे वैद्ये ज्योतिषिके द्विजे । यात्रायां पथि निद्रायां महच्छन्दो न दीयते ॥' (स्मर्यते) । इत्युक्त्या विपरीतलक्षणया निन्दार्थक एव ॥

* अभ्रुकुंसादीनामिति वक्तव्यम् भ्रुकुंसः भ्रुकुटिः ॥ अपर आह—

* भ्रकुंसादीनामकारो भवतीति वक्तव्यम्। भ्रकुंसः भ्रकुटिः ॥

२९०० एक तद्धिते च ॥६२॥

एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च परे। एकस्या आगतमेकरूप्यम्। एकक्षीरम् ॥

२९०१ ङ्यापोः संज्ञाछन्दसोर्बहुलम् ६३

ङ्यन्तस्याबन्तस्य च संज्ञाछन्दसोर्बहुलं ह्रस्वः स्यात् ॥ रेवतिपुत्रः। रोहिणिपुत्रः। भरणिपुत्रः। न च भवति—'नान्दीकरः, नान्दीघोषः ॥ छन्दसि—कुमारिदा। प्रद्‌विदा न च भवति—"फाल्गुनीपौर्णमासी" 'जगतीछन्दः' ॥ शिलवहम्' 'शिलप्रस्थम्। न च भवति—'ऊर्मिकाण्डम्' 'ऊर्मकाण्डम्' ॥ अजक्षीरेण जुहोति' 'ऊर्णम्रदा पृथिवी दक्षिणावतम्' ॥ न च भवति—'ऊर्णासूत्रेण कवयो वयन्ति ॥

२९०२ त्वे च ॥ ६४॥ त्वप्रत्यये ङ्यापो-र्बहुलं ह्रस्वः स्यात्। अजाया भावः 'अजत्वम्' अजात्वम् ॥ रोहिण्या भावः 'रोहिणित्वम्' रोहिणीत्वम् ॥

२९०३ इष्टकेषीकामालानां चिततूलभारिषु ६५ इष्टकादीनां चितादिषु ह्रस्वः स्यात्। इष्टकचितम्। इषीकतूलम्। मालभारिणी कन्या ॥

२९०४ खित्यनव्ययस्य ६६ खिदन्ते उत्तरपदेऽनव्ययस्य ह्रस्वः स्यात् ॥ कालिंमन्या ॥

२९०५ अरुर्द्विषदजन्तस्य मुम् ॥६७॥ अरुस्द्विषत् इत्येतयोरजन्तानां च खिदन्ते उत्तरपदे मुमागमः स्यात् न त्वव्ययस्य ॥ अरुन्तुदः। द्विषन्तपः कालिंमन्या ॥

२९०६ इच एकाचोऽम्प्रत्ययवच्च ॥६८॥ इजन्तस्यैकाचः खिदन्ते उत्तरपदेऽमागमो भवति स च स्यादिवत् ॥ गांमन्यः स्त्रियंमन्यः। श्रियंमन्यः। भुवंमन्यः ॥

२९०७ वाचंयमपुरंदरौ च ॥ ६९ ॥ वाचंयमपुरंदर इत्येतौ निपात्येते ॥ 'वाचंयमः'। पुरंदरः ॥

२९०८ कारे सत्यागदस्य ॥ ७० ॥ कारशब्दे उत्तरपदे सत्य अगद इत्येतयोर्मुमागमः स्यात्। सत्यंकारः, अगदंकारः ॥

* अस्तु सत्यागदस्य कारे इति वक्तव्यम्। अस्तुंकारः ॥

* भक्षस्य छन्दसि कारे मुम्वक्तव्यः। भक्षंकारः ॥

* धेनोर्भव्यायाम्। धेनुंभव्या ॥

* लोकस्य पृणे। लोकंपृणः ॥

* इत्येऽनभ्याशस्य। अनभ्याशमित्यः ॥

* भ्राष्ट्राग्न्योरिन्धे। भ्राष्ट्रमिन्धः अग्निमिन्धः ॥

* गिलेऽगिलस्य। तिमिंगिलः ॥

२९२० वोपसर्जनस्य ॥८२॥ बहुव्रीह्य वयवस्य सहस्य सः स्याद्वा ॥ स पुत्रः । सहपुत्रः ॥

२९२१ प्रकृत्याऽऽशिषि ॥ ८३ ॥

* अगवादिषु सहशब्दः प्रकृत्या स्यादाशिषि गवोवत्सहलेषु । स्वस्ति देवदत्ताय 'सहपुत्राय' 'सछात्र' 'सवत्साय' 'सहलाय' ॥

२९२२ समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु ॥८४॥ समानस्य [illegible] इत्ययमादेश स्याच्छन्दसि उत्तरपदे मूर्द्धादीन् वर्जयित्वा ॥ अनुभ्राता सगर्भ्यं । अनुसखा सयूथ्यः । 'यो नः सनुत्य' ॥

२९२३ ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ॥८५॥ एषूत्तरपदेषु समानस्य स इत्ययमादेश स्यात् । सज्योतिः । सजनपद । सरात्रिः ॥ सनाभि । सनामा । सगोत्रः । सरूपः । सस्थान । सवर्णः सवयाः । सवचन । सबन्धु ॥

२९२४ चरणे ब्रह्मचारिणि । ८६ ॥ चरणे गम्यमाने ब्रह्मचारिण्युत्तरपदे समानस्य स इत्यत्यमादेशः । समानो ब्रह्मचारी सब्रह्मचारी ॥

२९२५ तीर्थे ये ॥८७॥ तीर्थे उत्तरपदे यादिप्रत्ययान्ते समानस्य स इत्ययमादेशः ॥ सतीर्थ्यः ॥

२९२६ विभाषोदरे ॥ ८८ ॥ उदरशब्दे उत्तरपदे यत्प्रत्ययान्ते समानस्य स इत्ययमादेशो वा ॥ सोदर्यः समानोदर्यः ॥

२९२७ दृग् दृशवतुषु ॥८९॥ एषु परतः समानस्य स इत्ययमादेशः स्यात् ॥ सदृक् । सदृश ॥

*दृक्षे चेति वक्तव्यम् । सदृक्षः । वतुग्रहण मुत्तरार्थम् ॥

२९२८ इदंकिमोरीश्की ॥९०॥ अनयोः ईश् की इत्येतावादेशौ स्तः दृग् दृश् वतुषु । ईदृक् । ईदृशः । इयान् ॥ कीदृक् । कीदृशः कियान् ॥

* दृक्षे चेतिवक्तव्यम् ईदृक्षः कीदृक्षः ॥

२९२९आ सर्वनाम्नः ॥९१॥ सर्वनाम्न आकारादेशः स्यात् दृग् दृशवतुषु ॥ तादृक् तादृशः तावान् । यादृक् यादृशः यावान् ॥

*दृक्षे चेति वक्तव्यम् । तादृक्षः यादृक्षः ॥

२९३० विश्व(ष्व)ग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ॥९२॥ विश्व(ष्व)ग्देवयोः सर्वनाम्नश्च टेरद्रीत्ययमादेशः स्यात् वप्रत्ययान्तेऽञ्चतौ उत्तरपदे ॥ विश्व(ष्व)गञ्चतीति विश्व (ष्व) द्र्यङ् । देवद्र्यङ् । तद्र्यङ् । यद्र्यङ् ॥

२९३१ समः समि ॥९३॥ सम् इत्येतस्य समि इत्ययमादेश स्यात् 'व' प्रत्ययान्ते

२९४४ विभाषा पुरुषे ॥१०६॥ पुरुष शब्दे उत्तरपदे वा को कादेश ॥ कापुरुषः कुपुरुष ॥

२९४५ कवं चोष्णे ॥१०७॥ उष्णशब्दे उत्तरपदे को 'कवम्' इत्यादेशः का च वा ॥ कवोष्णम् । कोष्णम् । कदुष्णम् ॥

२९४६ पथि च छन्दसि ॥१०८॥ पथि शब्दे उत्तरपदे छन्दसि को कव का इत्येतावादेशौ वा । कवपथः । कापथः । कुपथः ॥

२९४७ पृषोदरादीनि यथोपदिष्टम् ॥१०९॥ पृषोदरादीनि शब्दरूपाणि, येषु लोपा-गमवर्णविकाराः शास्त्रेण न विहिताः, दृश्यन्ते च, तानि) यथोपदिष्टानि साधूनि स्युः । यानि यथोपदिष्टानि शिष्टैरुच्चारितानि प्रयुक्तानि तथैव अनुगन्तव्यानि ॥ पृषत् उदरं पृषोदरम् । वारिवाहको । बलाहक । जीवनस्य मूत जीमूत । शवानां शयन श्मशानम् ॥

२९४८ संख्याविसायपूर्वस्याह्नस्या-हन्नन्यतरस्यां ङौ ॥११०॥ संख्यादि-पूर्वस्याह्नस्याहन्नित्यादेशो वा ङौ ॥ द्वयो-रह्नोर्भव द्व्यह्न । त्र्यह्न । द्व्यह्नि द्व्यहनि द्व्यह्ने । त्र्यह्नि त्र्यहनि त्र्यह्ने । व्यह्नि व्यहनि व्यह्ने ॥ सायाह्नि सायाहनि सायाह्ने ॥

२९४९ ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥१०१॥ ढकाररेफयोर्लोपो यस्मिन्स ढ्रलोप तस्मिन् पूर्वस्याणो दीर्घः ॥ लीढम् मीढम् ॥ ऊढ ॥ नीरक्तः । अग्नी रथः ॥

२९५० सहिवहोरोदवर्णस्य ॥११२॥ अनयोरवर्णस्योत्स्याद् ढलोपे सति ॥ सोढा । सोढुम् । सोढव्यम् ॥ वोढा । वोढुम् । वोढव्यम् ॥

२९५१ साढ्यै साढ्वा साढेति निगमे ॥११३॥ एते वेदे निपात्यन्ते ॥ 'साढ्यै' समन्तात् । साढ्वा शत्रून् । साढा ॥

२९५२ संहितायाम् ॥११४॥ अयमधि-कारः ॥

२९५३ कर्णे लक्षणस्याविष्टाष्टपञ्चमणि-भिन्नछिन्नछिद्रस्रुवस्वस्तिकस्य ॥११५॥ कर्णे शब्दे उत्तरपदे लक्षणवाचिनो दीर्घः स्यात् विष्टादीन् वर्जयित्वा ॥ दात्राकर्णः द्विगुणाकर्णः । त्रिगुणाकर्णः ॥ विष्टकर्णः । अष्टकर्णः । पञ्चकर्णः । मणिकर्णः । भिन्न-कर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुव-कर्णः । स्वस्तिककर्णः ॥

२९५४ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥११६॥ क्विप्रत्ययान्तेषु एषु पूर्वपदस्य दीर्घः स्यात्संहितायाम् ॥ उपानत् । परीणत् । नीवृत् । प्रावृट् । मर्मा-वित् । नीरुक् । अभीरुट् । परीतत् ॥

२९५५ वनगिर्योः संज्ञायां कोटरकिं-शुलकादीनाम् ॥११७॥ कोटरादीनां वने परे, किंशुलकादीनां गिरौ परे, दीर्घः स्यात्संज्ञायाम् ॥ कोटरावणम् मिश्रका-वणम् । सिध्रकावणम् । शारिकावणम् ।

णाम् ॥ १३३ ॥ ऋचि विषये एषां दीर्घः स्यात् । 'आ तू न' 'नू करणे' 'घा स्याशात् मक्षू गोमन्तमीमहे । तङ् 'भरता जातवेदसम्' इति थादेशस्य ङित्वपक्षे ग्रहणम् । तेनेह न 'शृणोत ग्रावाणः' । कुमनः । 'अत्रा धीः । 'उरुष्य । यत्रेऽजनैः ॥

२९७२ इकः सुञि ॥ १३४ ॥ इगन्तस्य सुञि परतो मन्त्रे दीर्घः स्यात् ॥ अभी षु णः । ऊर्ध्व ऊ षु णः ॥

२९७३ द्व्यचोऽतस्तिङः ॥ १३५ ॥ द्व्यचस्तिङन्तस्यात ऋग्विषये दीर्घः स्यात् । 'विद्मा हि त्वा' ।

२९७४ निपातस्य च ॥ १३६ ॥ निपातस्य च ऋग्विषये दीर्घ आदेशः स्यात् ॥ एवा ते । अच्छा ते ॥

२९७५ अन्येषामपि दृश्यते ॥ १३७ ॥ अन्येषामपि दीर्घो दृश्यते स शिष्टप्रयोगादनुगन्तव्यः । केशाकेशि । कचाकचि । अष्टापाद् । नारक । पूरुष ।

*श्वनोदन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु । श्वादन्तः । श्वादंष्ट्रः । श्वाकर्णः श्वाकुन्दः । श्वावराहः । श्वापुच्छः । श्वापद् ।

२९७६ चौ ॥ १३८ ॥ चौ परतो दीर्घः स्यात् पूर्वस्य । 'चौ' इत्यनेन लुप्ताकारनकारोऽञ्चतिर्गृह्यते । दधीचः मधूच पश्य । दधीचा मधूचा ॥

२९७७ संप्रसारणस्य च ॥ १३९ ॥ संप्रसारणान्तस्य पूर्वपदस्योत्तरपदे परे दीर्घः स्यात् ॥ कारीषगन्धीपुत्रः कारीषगन्धीपतिः ॥ कौमुदगन्धीपुत्रः ॥

इति षष्ठाध्यायस्य तृतीयः पादः ।

२९७८ अङ्गस्य ॥ १ ॥ अधिकारोऽयमा सप्तमाध्यायपरिसमाप्तेः ॥

२९७९ हलः ॥ २ ॥ अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्याङ्गस्य दीर्घः स्यात् ॥ हूतः । जीनः । संवीतः ॥

२९८० नामि ॥ ३ ॥ नामि परेऽजन्ताङ्गस्य दीर्घः स्यात् ॥ घटानाम् ॥ अग्नीनाम् वायूनाम् पितॄणाम् ॥

२९८१ न तिसृचतसृ ॥ ४ ॥ तिसृचतसृ इत्येतयोर्नामि दीर्घो न स्यात् ॥ तिसृणाम् । चतसृणाम् ॥

२९८२ छन्दस्युभयथा ॥ ५ ॥ तिसृचतसृ एतयोर्नामि दीर्घो वा छन्दसि । तिसृणां मध्यन्दिने (तिसॄणाम्) । चतसृणां मध्यन्दिने चतसॄणां मध्यन्दिने ॥

२९८३ नृ च ॥ ६ ॥ नृ इत्येतस्य नामि दीर्घो वा ॥ त्वं नृणां नृपते । त्वं नॄणां नृपते ॥

२९८४ नोपधायाः ॥ ७ ॥ नान्तस्याङ्गस्योपधाया नामि परतो दीर्घः स्यात् ॥ पञ्चानाम् । सप्तानाम् ॥

२९८५ सर्वनामस्थाने चासंबुद्धौ ॥ ८ ॥ नान्तस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने ॥ राजा राजानौ राजानः राजानं

२०२२ सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ ४५ ॥ सनोतेरङ्गस्य क्तिचि आकारादेशो लोपश्चास्य वा ॥ सातिः सतिः ॥

२०२३ आर्द्धधातुके ॥ ४६ ॥ अधिकारोऽयम् 'न ल्यपी'ति प्राक् ॥

२०२४ भ्रस्जो रोपधयोरमन्यतरस्याम् ॥ ४७ ॥ भ्रस्जो रेफस्योपधायाश्च स्थाने रमागमो वाऽऽर्द्धधातुके ॥ स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः ॥ मित्वादन्त्यादचः परः ॥ भर्ष्टा भ्रष्टा भर्ष्टुम् भ्रष्टुम् भर्ष्टव्यम् भ्रष्टव्यम् ॥

२०२५ अतो लोपः ॥ ४८ ॥ अकारान्तस्यार्द्धधातुके लोपः स्यात् ॥ बुभूषिता ॥

२०२६ यस्य हलः ॥ ४९ ॥ लोप आर्द्धधातुके ॥ बेभिदिता ॥

२०२७ क्यस्य विभाषा ॥ ५० ॥ हलः परस्य क्यस्य लोपो वा स्यादार्द्धधातुके ॥ समिधिता समिध्यिता ॥

२०२८ णेरनिटि ॥ ५१ ॥ अनिडादावार्द्धधातुके णेर्लोपः स्यात् ॥ अततक्षत् आशिशत् । कारणा हारणा ॥ कार्यते ॥

२०२९ निष्ठायां सेटि ॥ ५२ ॥ सेटि निष्ठायां णेर्लोपः स्यात् । कारितम् । कारितवान् ॥

२०३० जनिता मन्त्रे ॥ ५३ ॥ जनिता इति मन्त्रविषये इडादौ णिलोपो निपात्यते ॥ यो नः पिता जनिता ॥ अमन्त्रे तु जनयिता ॥

२०३१ शमिता यज्ञे ॥ ५४ ॥ यज्ञकर्मणि शमितेति इडादौ णिलोपो निपात्यते ॥ शृतं हविः शमिता ॥

२०३२ अयामन्ताल्वाय्येत्न्विष्णुषु ५५ एषु णेरयादेशः स्यात् । कारयाञ्चकार । गण्डयन्तः । स्पृहयालुः । स्पृहयाय्यः । स्तनयित्नुः । पोषयिष्णवः ॥

२०३३ ल्यपि लघुपूर्वात् ॥ ५६ ॥ ल्यपि लघुपूर्वात्परस्य णेरयादेशः स्यात् ॥ प्रणमय्य गतः । प्रबेभिदय्य गतः ॥

२०३४ विभाषाऽऽपः ॥ ५७ ॥ आप उत्तरस्य णेर्ल्यपि वा अयादेशः स्यात् ॥ प्रापय्य गतः प्राप्य गतः ॥

२०३५ युप्लुवोर्दीर्घश्छन्दसि ॥ ५८ ॥ एतयोर्ल्यपि छन्दसि दीर्घः स्यात् ॥ दान्त्यनुपूर्वं वियूय । यत्रा वो दक्षिणा परिप्लूय ॥

२०३६ क्षियः ॥ ५९ ॥ क्षियश्च दीर्घो ल्यपि ॥ प्रक्षीय ॥

२०३७ निष्ठायामण्यदर्थे ॥ ६० ॥ ण्यतः कृत्यस्यार्थौ भावकर्मणी ताभ्यामन्यत्र या निष्ठा तस्यां क्षियो दीर्घः स्यात् ॥ आक्षीणो देवदत्तः ।

२०३८ वाऽऽक्रोशदैन्ययोः ॥ ६१ ॥ आक्रोशे दैन्ये च क्षियो निष्ठायामण्यदर्थे दीर्घो वा स्यात् ॥ क्षितायुरेधि क्षीणायुरेधि ॥ क्षितोऽयं तपस्वी क्षीणोऽयं तपस्वी ।

२०३९ स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६२ ॥ उपदेशे योऽच् तदन्तानां ह

२०५२ बहुलं छन्दस्यमाङ्योगेऽपि ॥७५॥ छन्दसि माङ्योगेऽपि बहुलमडाटौ स्तः ॥ अमाङ्योगेऽपि न स्तः ॥ जनिष्ठा उग्रः । कामम॒नयीत् । मा॒मम॒र्द्धयीत् । मा वः क्षेत्रे परबीजान्यवाप्सुः । मा अभित्थाः । मा आवः ॥

२०५३ इरयो रे ॥ ७६ ॥ इरेइत्यस्य छन्दसि विषये बहुलं रेभावः स्यात् ॥ गर्भं प्रथमं दध्र आपः । धाऽऽस्य पक्षिदध्रे ॥ न च भवति—'पृश्नम्यां यद्योर्ग्निकर्माणि चक्रिरे । अत्ररेशब्दस्य 'इरि' कृते पुनरपि रेभावस्तदर्थमिरयोरिति द्विवचननिर्देशः ॥

२०५४ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ७७ ॥ श्नुप्रत्ययान्तस्याङ्गस्य, धातोरिवर्णोवर्णान्तस्य, भ्रू इत्येतस्येयङुवङौ स्तोऽचि ॥ आप्नुवन्ति । चिक्षियतुः । लुलुवतुः । भ्रुवौ भ्रुवः ॥

* इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानम् । तन्वं, पुषेम तनुवं पुषेम । विषुवं पुषेम ॥ त्र्यम्बकं यजामहे त्रियम्बकं यजामहे ॥

२०५५ अभ्यासस्यासवर्णे ॥ ७८ ॥ अभ्यासस्येवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि ॥ इयेष उवोष । इयर्ति ॥

२०५६ स्त्रियाः ॥ ७९ ॥ स्त्रीशब्दस्येयङ् स्यादजादौ ॥ स्त्रियौ ॥ स्त्रियः ॥

२०५७वाम्शसोः ॥८०॥ अमि शसि च स्त्रिया वेयङादेशः स्यात् ॥ स्त्रीं पश्य स्त्रियं पश्य । स्त्रीः पश्य स्त्रियः पश्य ॥

२०५८ इणो यण् ॥८१॥ इणोऽङ्गस्य यण् स्यादजादौ प्रत्यये ॥ यन्ति यन्तु ॥

२०५९ एरनेकाचोऽसंयोगपूर्वस्य ॥८२॥ धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि ॥ निन्यतुः निन्युः । उन्न्यौ उन्न्यः । ग्रामण्यौ ग्रामण्यः ॥

२०६० ओः सुपि ८३ ॥ धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि ॥ खलप्वौ खलप्वः खलप्वौ ॥

२०६१ वर्षाभ्वश्च ॥ ८४ ॥ अस्योवर्णस्य यण् स्यादचि सुपि ॥ वर्षाभ्वौ वर्षाभ्वः ॥

* वर्षादनकारपुनःपूर्वस्य भुव इति वक्तव्यम् । दृन्भ्वौ दृन्भ्वः । कारभ्वौ कारभ्वः । पुनर्भ्वौ पुनर्भ्वः ।

२०६२ न भूसुधियोः ॥ ८५ ॥ एतयोर्यण् न स्यादचि सुपि ॥ प्रतिभुवौ प्रतिभुवः । सुधियौ सुधियः ॥

२०६३ छन्दस्युभयथा ॥ ८६ ॥ छन्दसि विषये भूसुधी इत्येतयो रुभयथा दृश्यते ॥ वनेषु चित्रं विभ्वम् ॥ विभ्वं विभुवम् । सुध्यो हव्यमग्ने, सुधियो हव्यमग्ने ॥

२०६४ हुश्नुवोः सार्वधातुके ॥ ८७ ॥ हु इत्येतस्य श्नुप्रत्ययान्तस्यानेकाचोऽसं-

२०७८ हुझल्भ्यो हेर्धिः ॥ १०१ ॥ होर्झलन्तेभ्यश्च हेर्धिः स्यात्। जुहुधि। भिन्धि छिन्धि।

२०७९ श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥१०२॥ एभ्यो हेर्धिः स्याच्छन्दसि। श्रुधी हवमिन्द्र। शृणुधी गिरः। पूर्धि। उरु णस्कृधि। अपावृधि॥

२०८० अङितश्च ॥ १०३ ॥ अङितश्च हेर्धिरादेशः स्यात्। 'वा छन्दसीति पित्त्वेनाङित्त्वम्। सोम रारन्धि। अस्मे तद्धयश्व प्रयन्धि। युयोध्यस्मज्जुहुराणमेनः॥

२०८१ चिणो लुक् ॥ १०४ ॥ चिणः परस्य प्रत्ययस्य लुक् स्यात्। अकारि। अहारि। अकारितराम् अहारितरामित्यत्र तलोपस्यासिद्धत्वात्तरप्तमपोर्न लुक्। 'चिणो लुगित्येतद्विषयभेदाद्भिद्यते॥

२०८२ अतो हेः ॥ १०५ ॥ अदन्तादङ्गाद्धेर्लुक् स्यात्। पच पठ गच्छ॥

२०८३ उतश्च प्रत्ययादसंयोगपूर्वात् ॥ १०६ ॥ असंयोगपूर्वात्प्रत्ययोतो हेर्लुक् स्यात्। चिनु। सुनु। कुरु॥

* उतश्च प्रत्ययाच्छन्दो वावचनम्। धानुहि यातुधानान्। धिनुहि यज्ञपतिम्। तेन मा भागिनं कृणुहि॥

२०८४ लोपश्चास्यान्यतरस्यां म्वोः॥१०७॥ असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा स्यान्म्वोः परयोः। सुन्वः सुनुवः। सुन्मः सुनुमः॥

२०८५ नित्यं करोतेः ॥ १०८ ॥ करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यान्म्वोः परयोः। कुर्वः कुर्मः॥

२०८६ ये च ॥ १०९ ॥ यकारादौ प्रत्यये करोतेरुकारस्योकार प्रत्ययस्य नित्यं लोपः स्यात्। कुर्यात् कुर्याताम् कुर्युः॥

२०८७ अत उत्सार्वधातुके ॥ ११० ॥ उप्रत्ययान्तस्य करोतेरकारस्य स्थाने उकार आदेशः स्यात्सार्वधातुके क्ङिति॥ कुरुतः कुर्वन्ति॥

२०८८ श्नसोरल्लोपः ॥ १११ ॥ श्नस्यास्तेश्चाऽकारस्य लोपः स्यात्सार्वधातुके क्ङिति॥ रुन्धः। रुन्धन्ति। भिन्त्तः। भिन्दन्ति॥

२०८९ श्नाभ्यस्तयोरातः ॥ ११२ ॥ अनयोरातो लोपः स्यात्क्ङिति। लुनते। लुनताम्। मिमते। मिमताम्॥

२०९० ई हल्यघोः ॥ ११३ ॥ घुवर्जितानां श्नाप्रत्ययान्तानामभ्यस्तानां चाङ्गानामात ईकारादेशः स्याद्धलादौ सार्वधातुके क्ङिति। लुनीते। पुनीतः। मिमीते। मिमीथे॥

२०९१ इद्दरिद्रस्य ॥ ११४ ॥ दरिद्रातेर्हलादौ सार्वधातुके क्ङिति इकारादेशः स्यात्। दरिद्रितः। दरिद्रिथः॥

* दरिद्रातेरार्धधातुके लोपो वक्तव्यः।

* सिद्धश्च प्रत्ययविधौ भवतीति वक्तव्यम् दरिद्रातीति दरिद्रः। आकारा-

यमभिनिर्वृत्तस्य च योऽकारस्तस्य स्थाने एकारादेशोऽभ्यासलोपश्च न स्यात् ॥ विशशसतुः विशशसिथ । ददरे ददराते ॥ बबमतुः बबमुः । विशशरतुः लुलविथ ॥

३१०४ अर्वणस्त्रसावनञः ॥ १२७ ॥ नञा रहितस्यार्वन्नित्येतस्याङ्गस्य तृ इत्ययमादेशः स्यान्न तु सौ ॥ अर्वन्तौ अर्वन्तः ॥

३१०५ मघवा बहुलम् ॥ १२८ ॥ मघवन्नित्येतस्याङ्गस्य बहुलं तृ इत्ययमादेशः स्यात् ॥ मघवान् मघवन्तौ ॥ बहुलग्रहणात्-मघवा मघवानौ मघवान ॥

३१०६ भस्य ॥ १२९ ॥ आ अध्यायपरिसमाप्तेरयमधिकारः ॥

३१०७ पादः पत् ॥ १३० ॥ पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः स्यात् । द्विपदः द्विपदा द्विपदे ॥

३१०८ वसोः संप्रसारणम् ॥ १३१ ॥ वस्वन्तस्य भस्य संप्रसारणं स्यात् ॥ विदुषः पश्य । विदुषा ॥

३१०९ वाह ऊठ् ॥ १३२ ॥ भस्य वाह ऊठ् संप्रसारणं स्यात् ॥ प्रष्ठौहः प्रष्ठौहा ॥

३११० श्वयुवमघोनामतद्धिते ॥१३३॥ अन्नन्तानां भानामेषामतद्धिते संप्रसारणम् ॥ शुनः शुना । यूनः यूना ॥ मघोनः मघोना ॥

३१११ अल्लोपोऽनः ॥ १३४ ॥ अनित्येवमन्तस्य भस्याकारस्य लोपः स्यात् ॥ राज्ञः पश्य । राज्ञा ॥

३११२ षपूर्वहन्धृतराज्ञामणि ॥१३५॥ षपूर्वो योऽन् हनो धृतराज्ञश्च तस्याकारलोपः स्यादणि परतः ॥ औक्ष्णः ताक्ष्णः ॥ भ्रौणघ्नः धार्तराज्ञः ॥

३११३ विभाषा ङिश्योः ॥ १३६ ॥ ङौ परतः शीशब्दे चानोऽकारलोपो वा स्यात् ॥ राज्ञि राजनि । साम्नि सामनि । साम्नी सामनी ॥

३११४ न संयोगाद्वमन्तात् ॥१३७॥ वकारमकारान्त संयोगात्परस्यानोऽकारस्य लोपो न स्यात् ॥ पर्वणः पर्वणे । ब्रह्मणः ब्रह्मणा ॥

३११५ अचः ॥ १३८ ॥ लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् ॥ दधीचः पश्य ॥

३११६ उद ईत् ॥१३९॥ उदः परस्याचः ईकारादेशः स्यात् ॥ उदीचः उदीचा उदीचे ॥

३११७ आतो धातोः ॥१४०॥ आकारान्तस्य धातोर्भस्य लोपः स्यात् ॥ कीलालपः पश्य । शुभंयः पश्य ।

३११८ मन्त्रेष्वाङ्यादेरात्मनः ॥१४१॥ मन्त्रेषु आङि परत आत्मन आदेर्लोपः स्यात् ॥ त्मना देवेभ्यः । त्मना सोमेषु ॥ आङोऽन्यत्रापि छन्दसि लोपो दृश्यते ॥ 'त्मन्या समञ्जन्' 'त्मनोपतस्थः' ॥

३११९ ति विंशतेर्डिति ॥ १४२ ॥ भस्य विंशतेस्तिशब्दस्य लोपः स्याड्डिति ॥ विंशत्या क्रीतः विंशकः । विंशं शतम् ॥ विंशतेः पूरणो विंशः ॥ एकविंशः ॥

यस्तस्य लोपः स्यात्स चेत्सूर्याद्यवयवः ॥ सूर्येणैकदिक् सौरी बलाका । तैष्यम् अहः । अगस्त्यस्यापत्यं स्त्री आगस्ती । आगस्तीयः । मात्सी ॥

*मत्स्यस्य ङ्यामिति वक्तव्यम् । इह मा भूत् मत्स्यस्येदं मांसं मात्स्यम् ।

*सूर्यागस्त्ययोश्छे च ङ्यां च । सौरीयः सौरी । आगस्तीयः आगस्ती । इह मा भूत् 'सौर्यं चरुं निर्वपेत्' आगस्त्यः ॥

*तिष्यपुष्ययोर्नक्षत्राणि तिष्येण नक्षत्रेण युक्तः कालः तैषः । पौषः ।

*अन्तिकस्य तसि कादिलोप आद्युदात्तं च अन्तिकशब्दस्य तसि प्रत्यये परतः ककारादिशब्दस्य लोपो वक्तव्यः । अन्तितो न दूरात् ॥

* तमे तादेश्च कादेश्च लोपो वक्तव्यः अन्तमः ... अन्तमः ॥ अन्तितमे अवर्तेति ॥

*कादिलोपे बहुलमिति वक्तव्यम् अन्यत्रापि दृश्यते–अन्ति के सीदतीति अन्तिषत् ॥

*षे च अन्तिषः ॥

३१२७ हलस्तद्धितस्य ॥ १५० ॥ हलः परस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यादीति परे ॥ गार्गी वात्सी ।

३१२८ आपत्यस्य च तद्धितेऽनाति ॥ १५१ ॥ हलः परस्यापत्ययकारस्य लोपः स्यादनाकारादौ तद्धिते । गर्गाणां समूहो गार्गकम् ।

३१२९ क्यच्व्योश्च ॥ १५२ ॥ क्यचि च्वौ च परतो हलः परस्यापत्ययकारस्य लोपः स्यात् ॥ वात्सीयति गार्गीयति । च्वौ गार्गीभूतः । वात्सीभूतः ।

३१३० बिल्वकादिभ्यश्छस्य लुक् ॥ १५३ ॥ नडादिषु बिल्वादयः पठ्यन्ते । नडादीनां कुक् चेति कृतकुगागमा बिल्वकादयो भवन्ति तेभ्य उत्तरस्य छस्य लुक् स्यात्तद्धिते ॥ बिल्वा यस्यां सन्ति बिल्वकीया तस्यां भवा बैल्वकाः । वेणुकीया । वैणुकाः ॥

३१३१ तुरिष्ठेमेयस्सु ॥ १५४ ॥ इष्ठादिषु परेषु तृशब्दस्य लोपः स्यात् ॥ आसुतिं करिष्ठः । वहिष्ठः । दोहीयसी धेनुः

३१३२ टेः ॥ १५५ ॥ भस्य टेर्लोपः स्यादिष्ठादिषु । पटु–पटिष्ठः पटिमा पटीयान् । लघु–लघिष्ठः लघिमा लघीयान् ॥

* णाविष्ठवत्प्रातिपदिकस्य कार्यं भवतीति वक्तव्यम् । किं प्रयोजनम् ? पुंवद्भावरभावटिलोपयणादिपरार्थम् । एनीमाचष्टे एतयति । प्रथयति । पटयति । स्थूलमाचष्टे स्थवयति ॥ केचित्तु 'विन्मतोर्लुक्' इत्यर्थमपि स्रग्विणमाचष्टे स्रजयति । वसुमन्तमाचष्टे वसयति । युवानमाचष्टे यवयति कनयति । एतदुभयमपि उदाहरणमात्रं न परिगणनम् । अन्यत्रापि प्रतीयन्ते प्रियमाचष्टे प्रापयति ॥

३१३३ स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ॥ १५६ ॥

३१४३ संयोगादिश्च ॥ १६६ ॥ संयोगादिश्च इनणि प्रकृत्या स्यात् ॥ शङ्खिनोऽपत्यं शाङ्खिन माद्रिण. वाज्रिणः ॥

३१४४ अन् ॥ १६७ ॥ अनन्तमणि प्रकृत्या स्यात् ॥ सामन । वैमन ।

३१४५ ये चाभावकर्मणोः ॥ १६८ ॥ यादौ तद्धितेऽन् प्रकृत्या स्यादभावकर्मणो-रर्थयोः ॥ सामसु साधु सामन्य ॥

३१४६ आत्माध्वानौ खे ॥ १६९ ॥ एतौ खे प्रकृत्या स्तः ॥ आत्मने हित आत्मनीनः । अध्वनीन ॥

३१४७ न मपूर्वोऽपत्येऽवर्मणः ॥१७०॥ वर्मन्भिन्नमपूर्वोऽन् अपत्येऽर्थेऽणि प्रकृत्या स्यात् ॥ सुषाम्णोऽपत्यं सौषाम । चान्द्रसाम. ॥

* मपूर्वप्रतिषेधे वा हितनाम्न इति वाच्यम् हितनाम्नोऽपत्य हैतनाम. हैतनामनः ॥

३१४८ ब्राह्मो जातौ ॥ १७१ ॥ योगविभागोऽत्र क्रियते ब्राह्म इत्येतदपत्याधिकारेऽपि सामर्थ्यादपत्यादन्यत्रापि टेर्लोपार्थं निपात्यते ॥ ब्राह्मो गर्भः । ब्रह्मास्त्रम् । ब्राह्मं हविः ॥ तत —

* जातौ अपत्ये आतावपि ब्राह्मणाट्टिलोपो न ॥ ब्रह्मणोऽपत्यं ब्राह्मण ॥

३१४९ कार्मस्ताच्छील्ये ॥१७२॥ कार्म इति ताच्छील्ये टिलोपो निपात्यते ॥ कर्मशीलः कार्म. 'शील छत्रादिभ्योऽण.' इति णप्रत्ययः ॥ यद्येवं किमर्थमिदम् 'अन्सखिये' इत्येव टिलोप सिद्ध ? सत्यमेतत् । ज्ञापकार्थं तु । एतज्ज्ञापयति—

* 'ताच्छीलिके णेऽण्कृतानि भवन्ति' इति । तेन चौरी तापसीति णान्तादपीकार सिद्धो भवति ॥

३१५० औक्षमनपत्ये ॥ १७३ ॥ औक्षमित्यनपत्येणि टिलोपो निपात्यते ॥ औक्षम् पदम् ॥

३१५१ दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥१७४ एतानि निपात्यन्ते दण्डिनोऽपत्य दाण्डिनायन । हस्तिनोऽपत्यं हास्तिनायनः । अथर्वाणमधीते आथर्वणिक. । जिह्माशिनोऽपत्य जैह्माशिनेय. । वासिनोऽपत्य वासिनायनि. । भ्रूणघ्नो भाव. भ्रौणहत्यम् ॥ धीवनो भावो धैवत्यम् । सरयवा भव सारवम् उदकम् । इक्ष्वाकोरपत्यम् ऐक्ष्वाक । मित्रयोरपत्य मैत्रेय । हिरण्यस्य विकारः हिरण्मयः ॥

३१५२ ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ॥ १७५ ॥ ऋतौ भवं ऋत्व्यम् । वास्तौ भव वास्त्व्यम् । वस्तुनि भवो वास्त्वः । माध्वीर्न सन्त्वोषधी. । हिरण्ययेन सविता रथेन ॥

इति षष्ठाध्यायस्य चतुर्थःपादः समाप्तः ।

इति श्री समस्तमहीमण्डलमण्डितरण राणाचतान्ववायसमुद्रसमुद्भूतकामधेनुघा सं-

३१६६ सर्वनाम्नः स्मै ॥ १४ ॥ अदन्तात्सर्वनाम्नो ङेः स्मै स्यात् ॥ सर्वस्मै विश्वस्मै यस्मै कस्मै तस्मै ॥

३१६७ ङसिङ्योः स्मात्स्मिनौ ॥ १५ ॥ अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् विश्वस्मात् ॥ सर्वस्मिन् ।

३१६८ पूर्वादिभ्यो नवभ्यो वा ॥ १६ ॥ एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः पूर्वस्मात् पूर्वात् । पूर्वस्मिन् पूर्वे । परस्मात् परात् । परस्मिन् परे । अवरस्मात् अवरात् अवरस्मिन् अवरे । दक्षिणस्माद् दक्षिणात् दक्षिणस्मिन् दक्षिणे । उत्तरस्मात् उत्तरात् उत्तरस्मिन् उत्तरे । अपरस्मात् अपरात् अपरस्मिन् अपरे । स्वस्मात् स्वात् स्वस्मिन् स्वे । अन्तरस्मात् अन्तरात् अन्तरस्मिन् अन्तरे ॥

३१६९ जसः शी ॥ १७ ॥ अदन्तात्सर्वनाम्नो जसः शी स्यात् ॥ सर्वे विश्वे ये के ते ॥

३१७० औङ आपः ॥ १८ ॥ आबन्तादङ्गात्परस्यौङः शी स्यात् ॥ माले तिष्ठतः । माले पश्यतः ॥

३१७१ नपुंसकाच्च ॥ १९ ॥ नपुंसकादङ्गादौङः शी स्यात् ॥ कुण्डे तिष्ठतः । कुण्डे पश्य । त्रपुणी जतुनी ॥

३१७२ जश्शसोः शि ॥ २० ॥ नपुंसकादङ्गाज्जश्शसोः शि स्यात् ॥ कुण्डानि तिष्ठन्ति । कुण्डानि पश्य । त्रपूणि ।

३१७३ अष्टाभ्य औश् ॥ २१ ॥ कृताकारादष्टनो जश्शसोरौश् स्यात् ॥ अष्टन इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति ॥ अष्टौ तिष्ठन्ति । अष्टौ पश्य ॥

३१७४ षड्भ्यो लुक् ॥ २२ ॥ षट्संज्ञकेभ्य परयोर्जश्शसोर्लुक् ॥ षट् तिष्ठन्ति । षट् पश्य । अष्ट । पञ्च । सप्त । नव । दश ॥

३१७५ स्वमोर्नपुंसकात् ॥ २३ ॥ नपुंसकादङ्गात्स्वमोर्लुक् स्यात् ॥ दधि तिष्ठति । दधि पश्य ॥

३१७६ अतोऽम् ॥ २४ ॥ अदन्तादङ्गान्नपुंसकात्स्वमोरम् स्यात् ॥ कुण्डं तिष्ठति कुण्डं पश्य ॥

३१७७ अद्ड्डतरादिभ्यः पञ्चभ्यः ॥ २५ ॥ एभ्यः नपुंसकेभ्य स्वमोरद्डादेशः स्यात् ॥ कतरत् तिष्ठति । कतरत् पश्य ॥

३१७८ नेतराच्छन्दसि ॥ २६ ॥ इतरशब्दादुत्तरयो स्वमोश्छन्दसि अद्डादेशो न स्यात् ॥ इतरमितरमण्डमजायत । वार्त्रघ्नमितरम् ॥

*एकतरात् सर्वत्र प्रतिषेध इष्यते । एकतरं तिष्ठति एकतरं पश्येति ।

३१७९ युष्मदस्मद्भ्यां ङसोऽश् ॥ २७ ॥ युष्मदस्मद्भ्यां परस्य ङसोऽश् स्यात् । तव स्वम् । मम स्वम् ।

३१८० ङेप्रथमयोरम् ॥ २८ ॥ युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः स्यात् ॥ तुभ्यं दीयते । मह्यं दीयते । त्वम् अहम् युवाम् आवाम् । यूयम् वयम् । त्वाम् माम् युवाम् आवाम् ।

*इयाडियाजीकाराणामुपसंख्यानम् । इया 'दर्विया परिधानम्' 'दार्विया' उरुणा दारुणेति प्राप्ते ॥ डियाच् 'सुक्षेत्रिया सुगात्रिया' सुक्षेत्रिणा सुगात्रिणेति प्राप्ते । ईकारः 'दृतिं न शुष्कं सरसी शयानम्' सरसि शयानमिति प्राप्ते ॥

* आड्याजयारामुपसंख्यानम् । आड् 'प्रबाहवा' प्रबाहुनेति प्राप्ते ॥ अयाच् 'स्वप्नया सच सेवनम्' । स्वप्नेनेति प्राप्ते अयार्-'सिन्धुमिव नावया' नावेति प्राप्ते ॥

३१९२ अमो मश् ॥ ४० ॥ मिबादेशस्यामः छन्दसि मशादेशः स्यात् ॥ 'वधीं वृत्रम्' क्रमीं वृक्षस्य शाखाम्' ॥

३१९३ लोपस्त आत्मनेपदेषु ॥ ४१ ॥ आत्मनेपदेषु यस्तकारस्तस्य छन्दसि लोपः स्यात् ॥ देवा अदुह 'गन्धर्वाप्सरसो अदुह' अदुहतेति प्राप्ते । 'दुहामश्विभ्यां पयोऽघ्न्येयम्' दुग्धामिति प्राप्ते । 'दक्षिणतः शये' शेते इति प्राप्ते ॥ अपात्यर्थिष्याद्य भवति-'अन्न आत्मानममृतं कुरुते' ।

३१९४ ध्वमो ध्वात् ॥ ४२ ॥ छन्दसि ध्वमो ध्वादित्ययमादेशः स्यात् ॥ 'अन्तरे चोष्माणं वारयध्वात्' वारयध्वमिति प्राप्ते ॥

३१९५ यजध्वैनमिति च ॥ ४३ ॥ एतन्निपात्यते ॥ 'यजध्वैनं प्रियमेधाः' यजध्वमेनमिति प्राप्ते ॥

३१९६ तस्य तात् ॥ ४४ ॥ लोटो मध्यमपुरुष बहुवचनस्य स्थाने तादित्ययमादेशः स्यात् ॥ 'गात्रं गात्रमस्यानूनं कृणुतात्' कृणुतेति प्राप्ते ॥ 'ऊवध्यं गोहं पार्थिवं खनतात्' खनतेति प्राप्ते ॥ 'अस्मारक्षः संसृजतात्' संसृजतेति प्राप्ते ॥ 'सूर्यं चक्षुर्गमयतात्' गमयतेति प्राप्ते ॥

३१९७ तप्तनप्तनथनाश्च ॥ ४५ ॥ छन्दसि तस्य स्थाने तप् तनप् तन थन इत्येते आदेशाः स्युः ॥ तप् 'शृणोत ग्रावाणः' शृणुतेति प्राप्ते । 'सुनोत' सुनुतेति प्राप्ते ॥ तनप् 'सखायो धावतन' धत्तेति प्राप्ते ॥ तन-'जुजुष्टन' जुषतेति प्राप्ते छन्दसत्वाच्छ्लुः ॥ थन 'यदिष्ठन' यदिच्छतेति प्राप्ते । पित्करणमङित्त्वार्थम् ॥

३१९८ इदन्तो मसि ॥ ४६ ॥ छन्दसि मसित्ययं शब्द इकारान्तः स्यात् ॥ मसः सकारान्तस्य इकारागमः । स च तस्यान्तो भवति । तद्ग्रहणेन गृह्यत इत्यर्थः ॥ 'पुनस्त्वा दीपयामसि' दीपयाम इति प्राप्ते ॥ 'शलभं भञ्जयामसि' भञ्जयाम इति प्राप्ते ॥ 'त्वयि रात्रिं वासयामसि' वासयाम इति प्राप्ते ॥

३१९९ क्त्वो यक् ॥ ४७ ॥ क्त्वा इत्येतस्य यगागमः स्याच्छन्दसि ॥ 'दत्वाय सविता धियः' दत्त्वेति प्राप्ते ॥

३२०० इष्ट्वीनमिति च ॥ ४८ ॥ इष्ट्वीनमिति निपात्यते छन्दसि ॥ 'इष्ट्वीनं देवान्' इष्ट्वा देवानिति प्राप्ते ॥ पीत्वीनमित्यप्युच्यते ॥

३२१४ नेटयलिटि रधेः ॥ ६२ ॥ अलिटि इडादौ रधेर्नुम् न स्यात् ॥ रधिता रधितुम् रधितव्यम् ॥

३२१५ रभेरशब्लिटोः ॥ ६३ ॥ रभेरजस्य शब्लिड्वर्जिते ऽजादौ नुमागम स्यात् ॥ आरम्भयति आरम्भकः साध्वारम्भी । आरम्भम् आरम्भम् । आरम्भो वर्तते ।

३२१६ लभेश्च ॥ ६४ ॥ लभेरप्यजादौ शब्लिड्वर्जिते नुमागमः स्यात् ॥ लम्भयति लम्भकः । साधुलम्भी । लम्भं लम्भम् । लम्भो वर्तते ॥

३२१७ आङो यि ॥ ६५ ॥ आङः परस्य लभेर्नुमागम स्याद् यादौ प्रत्यये ॥ आलम्भ्या गौः ॥

३२१८ उपात् प्रशंसायाम् ॥ ६६ ॥ उपात्परस्य लभेर्नुम् स्यात् यादौ प्रत्यये प्रशंसायां गम्यायाम् । उपलम्भ्या भवता विद्या । उपलभ्यानि धनानि ।

३२१९ उपसर्गात्खल्घञोः ॥ ६७ ॥ उपसर्गादेव परस्य लभेर्नुमागम स्यात्खल्घञोः । ईषत्प्रलम्भः । सुप्रलम्भः । दुष्प्रलम्भः । विलम्भः ।

३२२० न सुदुर्भ्यां केवलाभ्याम् ॥ ६८ ॥ केवलाभ्यां सुदुर्भ्यां परस्य लभेर्नुम् न स्यात्खल्घञोः । सुलभम् दुर्लभम् सुलाभः दुर्लाभः ।

३२२१ विभाषा चिण्णमुलोः ॥ ६९ ॥ लभेर्नुम्वा स्याच्चिण्णमुलोः । अलम्भि अलाभि । लम्भं लम्भम् । लाभम् २ । व्यवस्थितविभाषा चेयम् । तेनानुपसृष्टस्य विकल्पः, उपसृष्टस्य नित्यं नुम् । प्रालम्भि प्रलम्भं प्रलम्भम् ।

३२२२ उगिदचां सर्वनामस्थानेऽधातोः ॥ ७० ॥ अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यात्सर्वनामस्थाने । भवतु भवान् भवन्तौ । ईयसुन् श्रेयान् श्रेयांसौ श्रेयांसः । शतृ पचन् पचन्तौ । अञ्चतेः प्राङ् प्राञ्चौ ।

३२२३ युजेरसमासे ॥ ७१ ॥ युजेः सर्वनामस्थाने नुमागमः स्यादसमासे । युङ् युञ्जौ युञ्जः ॥

३२२४ नपुंसकस्य झलचः ॥ ७२ ॥ झलन्तस्याजन्तस्य च नपुंसकस्य नुम् स्यात्सर्वनामस्थाने । उदश्वित्न्ति शकृन्ति पयांसि । यशांसि । कुण्डानि वारीणि त्रपूणि जतूनि ॥

* बहूर्जि प्रतिषेधो वक्तव्यः बहूर्जि ब्राह्मणकुलानि ॥

* अन्त्यात्पूर्वं नुममेक इच्छन्ति । बहूर्न्जि ब्राह्मणकुलानि ।

३२२५ इकोऽचि विभक्तौ ॥ ७३ ॥ इगन्तस्य नपुंसकस्याङ्गस्य नुम् स्यादजादौ विभक्तौ । वारिणी जतुनी तुम्बुरुणी त्रपुणे जतुने तुम्बुरुणे ।

३२२६ तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ॥ ७४ ॥ प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं नपुंसकं पुंवद्वा-

१२५२ ऋत इद्धातोः ।। १०० ।। ऋकारान्तस्य धातोरङ्गस्येकारादेशः स्यात् ।। किरति गिरति । आस्तीर्णम् विस्तीर्णम् ।

१२५३ उपधायाश्च ।। १०१ ।। धातोरुपधाभूतस्य ऋकारस्येकारादेशः स्यात् । कीर्तयति ।।

१२५४ उदोष्ठ्यपूर्वस्य ।। १०२ ।। अङ्गावयव ओष्ठ्यपूर्वो य ऋकारस्तदन्तस्य धातोरुत्स्यात् ।। पूर्तः पिपूर्तः । पुपूर्षति मुमूर्षति । बुबूर्षति इत्यादिकम् ।।

* इत्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन आस्तरणम् आस्तारकः ।।

१२५५ बहुलं छन्दसि ।। १०३ ।। छन्दसि ऋकारान्तस्य धातोरङ्गस्य बहुलमुकारादेशः स्यात् ।। मित्रावरुणौ ततुरिः दूरे ह्यध्वा जगुरिः ।। न च भवति—पप्रितमम् ।।

इति सप्तमाध्यायस्य प्रथमः पादः ।।

---

१२५६ सिचि वृद्धिः परस्मैपदेषु ।।१।। परस्मैपदे परे सिचि इगन्ताङ्गस्य वृद्धिः स्यात् । अचैषीत् अकार्षीत् अहार्षीत् अभार्षीत् ।

१२५७ अतो ल्रान्तस्य ।। २ ।। अतः समीपौ यौ लकाररेफौ तदन्ताङ्गस्यातो वृद्धिः स्यात् परस्मैपदे सिचि । अज्वालीत् अह्मालीत् ।। अक्षारीत् अत्सारीत् ।।

१२५८ वदव्रजहलन्तस्याचः ।। ३ ।। वदिव्रज्योर्हलन्तानां चाङ्गानामचः स्थाने वृद्धिः स्यात् परस्मैपदे सिचि ।। अवादीत् अव्राजीत् । अपाक्षीत् अभैत्सीत् अच्छैत्सीत् अरौत्सीत् ।।

१२५९ नेटि ।। ४ ।। इडादौ सिचि हलन्तस्याङ्गस्य वृद्धिर्न स्यात् ।। अदेवीत् असेवीत् अकोषीत् अमोषीत् ।।

१२६० ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।।५।। हकारमकारयकारान्तानां क्षणश्वसजागृणिश्वीनामेदितश्च परस्मैपदे इडादौ सिचि वृद्धिर्न स्यात् ।। अग्रहीत् । अस्यमीत् । अव्ययीत् । अक्षणीत् । अश्वसीत् । अजागरीत् । औनयीत् । ऐलयीत् । अश्वयीत् । अरगीत् । अकखीत् ।

१२६१ ऊर्णोतेर्विभाषा ।। ६ ।। ऊर्णोतेरिडादौ सिचि परस्मैपदे विभाषा वृद्धिः स्यात् । प्रौर्णावीत् प्रौर्णवीत् प्रौर्णुवीत् ।।

१२६२ अतो हलादेर्लघोः ।। ७ ।। हलादेरङ्गस्य लघोरकारस्येडादौ सिचि परस्मैपदे विभाषा वृद्धिः स्यात् ।। अकणीत् अकाणीत् । अरणीत् अराणीत् ।।

१२६३ नेड्वशि कृति ।। ८ ।। वशादौ कृत इण् न स्यात् । ईश्वरः । दीप्रः । भस्म । याच्ञा ।

१२६४ तितुत्रतथसिसुसरकसेषु च ।।९।। तितुत्रतथसिसुसरकस इत्येतेषु कृत्सु इडागमो न स्यात् ।।

* क्तिच् तन्तिः दीप्तिः ।।

* तुन् सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् सक्तुः ।।

* त्र 'वाप्नोति ष्ट्रन्-पत्रम् ॥ उणादेरपि-वक्त्रम् ॥

* त 'हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्' । हस्तः । स्रोतः । पोतः । धूर्तः । औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते, न पुनः कस्य, हसितमित्येव तत्र भवति ॥

* थ 'हनिकुषिनीरमिकाशिभ्यः क्थन्' कुष्ठम् काष्ठम् ॥

* सि 'उषिकुषिगर्तिभ्यः थन्' कुक्षिः ॥

* सु 'सुक् च इषेः' इक्षुः ॥

* सर 'अशेः क्सरन्' अक्षरम् ॥

* क 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' शल्कः ॥

* स 'वृतृवदिहनि कमिकषि गुशुचिभ्यः सः' वत्सः ॥

* तितुत्रेष्वग्रहादीनामिति वक्तव्यम् । ग्रहादयो ग्रहप्रकाराः येषामिट् क्वचित् दृश्यते विगृहीतिः उपस्निहितिः निकुचितिः निपठितिः । कनीत्ये । रोदिति स्वपिति ॥

३२६५ एकाच उपदेशेऽनुदात्तात् ॥१०॥ उपदेशे य एकाच् धातुरनुदात्तश्च तस्माद्विहितस्येड् न स्यात् ॥

ऊद्दन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥ १ ॥

शक्लृपच् मुच्रिच् वच्विच् सिच् प्रच्छित्यज् निजिर्भज ॥

भजभुज भ्रस्ज मस्जि यज् युज रुज् रञ्जविजिर् स्वञ्जि सञ्ज सृजः ॥ २ ॥

अद् क्षुद्-खिद्-छिद् तुदि नुदः पद्य भिद् विद्य तिविन्दु । शद्सदी स्विद्यति स्कन्दि हदी क्रुध क्षुधि-बुध्यती ॥ ३ ॥

बन्धियुधिरुधी राधि व्यध शुधः साधि-सिध्यती । मन्य हन्नाप् क्षिप्छुपितपतिपस्वपिति-दृप्यती ॥ ४ ॥

लिप् लुप्वप् शप् स्वप् सृपियम् रभ्लभ् गम् नम् यमो रमि । क्रुशिर्दंशिदिशी दृश् मृश रिश् रुश् लिश् विश् स्पृशः कृषिः ॥ ५ ॥

त्विष् तुष् द्विष् दुष् पिष् पुष्यविष् शिष् शुष् श्लिष्यतयो घसिः । वसतिर्दह दिहिदुहो नह् मिह् रुह् लिह् वहि स्तथा ॥ ६ ॥

अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ॥ तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥ तृपदृपौ तौ वारयितुं श्यना निर्देश आदृतः ।' किच' स्विद्यपदौ सिध्यबुध्यौ मन्यपुष्यश्लिषः श्यना ॥ ८ ॥

घसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये । ६ ।

निजिर्विजिर्शक्लृ इति सानुबन्धा अमी-तथा । विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते । १० ।

व्याघ्रभूत्यादयस्त्वेन नेह पेठुरिति स्थितम् । रञ्जिमस्जी अदिपदी तुद क्षुद शुषिपुषी शिषिः । ११ ।

भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसंमताः । ॥ १२ ॥

पाता चेता स्तोता हर्ता कर्ता इत्यादि ॥

३२६६ श्र्युकः किति ॥ ११ ॥ श्रिञ एकाच उगन्ताच्च परयोर्गित्किती

* त्र 'दाम्नीशि ष्ट्रन्–पत्रम् ॥ उणादेरपि–वस्त्रम् ॥

* त 'हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्य-स्तन्' । हस्तः । लोतः । पोतः । धूर्तः । औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते, न पुनः क्तस्य, हसितमित्येव तत्र भवति ॥

* थ 'हनिकुषिनीरमिकाशिभ्यः क्थन्' कुष्ठम् काष्ठम् ॥

* सि 'प्लुषिकुषिशुषिभ्यः क्सिः' कुक्षिः ॥

* सु 'सुक् च इषेः' इक्षुः ॥

* सर 'अशेः सरन्' अक्षरम् ॥

* क 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' शल्क ॥

* स 'वृतृवदिहनिकमिकषि युशुचिभ्यः सः' वत्स ॥

* तितुत्रेष्वग्रहादीनामिति वक्तव्यम् । ग्रहादयो ग्रन्थकारा येषामिट् क्वचित् दृश्यते विगृहीतिः उपस्निहितिः निकुचितिः निपठितिः । कनीत्ये । रोदिमि स्वपिति ॥

३२६५ एकाच उपदेशेऽनुदात्तात् ॥१०॥ उपदेशे य एकाच् धातुरनुदात्तश्च तस्मादिडागमो न स्यात् ॥

ऊदृदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥ १ ॥

शक्लृपच् मुच्रिच् वच्विच् सिच् प्रच्छित्यज् निजिर्भज ॥

भञ्ज भुज भ्रस्ज मस्जि यज् युज रुज् रञ्जविजिर् स्वञ्जि सञ्ज सृजः ॥ २ ॥

अद् क्षुद्-खिद्-छिद् तुदि नुदः पद्य भिद् विद्य विर्विनद् । शद्सदी स्विद्यति स्कन्दि हदी क्रुध क्षुधि-बुध्यती ॥ ३ ॥

बन्धियुधिरुधी राधि व्यध शुधः साधि-सिध्यती । मन्य हन्नाप् क्षिप्छुपितपतिपस्तृप्यति-दृप्यती ॥ ४ ॥

लिप् लुप् वप् शप् स्वप् सृपियम् रभ्लभ् गम् नम् यमो रमि । क्रुशिर्दंशि दिशी दृश् मृश् रिश् रुश् लिश् विश् स्पृशः, कृषिः ।५।

त्विष् तुष् द्विष् दुष् पिष् पुष्यविष् शिष् शुष् श्लिष्यतयो घसिः । वसतिर्दह दिहिदुही नहमिहरुहलिहवहि स्तथा ॥ ६ ॥

अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ॥ तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥ तृपदृपौ तौ वारयितु श्यना निर्देश आदृतः । क्लिच स्विद्यश्यौ सिध्यबुध्यौ मन्यपुष्यश्लिषः श्यना ॥ ८ ॥

घसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये । ९ ।

निजिर्विजिर्शक्लृ इति सानुबन्धा अमी-तथा । विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते । १० ।

व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् । इङ्जिमस्जी पदिपद्दी तुद क्षुद शुषिपुषी शिषि । ११ ।

भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसंमताः ॥ १२ ॥

पाता चेता स्तोता हर्ता कर्ता इत्यादि ॥

३२६६ श्र्युकः किति ॥ ११ ॥ श्रिञ् एकाच उगन्ताश्च परयोर्गित्कितोरिण्न

कष्टं व्याकरणम् । गहने—कष्टानि वनानि । कष्टः पर्वतः ।

३२७८ घुषिरविशब्दने ॥ २३ ॥ घुषेरविशब्दनेऽर्थे निष्ठाया इडागमो न स्यात् ॥ घुष्टा रज्जुः । घुष्टौ पादौ ।

३२७९ अर्देः संनिविभ्यः ॥२४॥ एभ्यः परस्यार्देर्निष्ठाया इडागमो न स्यात् । समर्णः । न्यर्णः । व्यर्णः ।

३२८० अभेश्चाविदूर्ये ॥२५॥ अभिपूर्वादर्देरविदूर्येऽर्थे निष्ठाया इडागमो न स्यात् । अभ्यर्णा सेना । अभ्यर्णा शरत् ।

३२८१ णेरध्ययने वृत्तम् ॥२६॥ ण्यन्तस्य वृतेर्निष्ठायां वृत्तमिति निपात्यते । वृत्तो गुणो देवदत्तेन । वृत्तं पारायणं देवदत्तेन ।

३२८२ वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ २७ ॥ एते वा निपात्यन्ते । दान्तः दमितः । शान्तः शमितः । पूर्णः पूरितः । दस्तः दासितः । स्पष्टः स्पाशितः । छन्नः छादितः । ज्ञप्तः ज्ञपितः ।

३२८३ रुष्यमत्वरसंघुषास्वनाम् ॥२८॥ एभ्यो निष्ठाया वेडागमः । रुषितः रुष्टः । अभ्यान्तः अभ्यमितः । तूर्णः त्वरितः । संघुष्टौ पादौ संघुषितौ पादौ ।

३२८४ हृषेर्लोमसु ॥ २९ ॥ लोमसु विषये हृषेर्निष्ठाया वेडागमः स्यात् । हृष्टानि लोमानि हृषितानि ।

३२८५ अपचितश्च ॥ ३० ॥ अपचित इति निपात्यते ॥ अपचितोऽनेन गुरुः । अपचायितोऽनेन गुरुः ॥

* क्तिनि नित्यमिति वक्तव्यम् । अपचितिः ।

३२८६ ह्रु ह्वरेश्छन्दसि ॥३१॥ ह्वरतेश्छन्दसि निष्ठाया ह्रु आदेशः स्यात् ॥ ह्रुतस्य चाह्रुतस्य च । अह्रुतमसि हविर्धानम् ॥

३२८७ अपरिह्वृताश्च ॥ ३२ ॥ अपरिह्वृता इति निपात्यते छन्दसि । अपरिह्वृताः सनुयाम वाजम् ॥

३२८८ सोमे ह्वरितः ॥३३॥ ह्वरतेर्निष्ठायामिडागमो गुणश्च निपात्यते छन्दसि, सोमश्चेद्विषयः ॥ 'मा नः सोमो ह्वरितो विह्वरितस्त्वम्' ॥

३२८९ ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरुत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ॥३४॥ छन्दस्येते निपात्यन्ते । 'ग्रसितं वा एतत्सोमस्य' ग्रस्तमिति भाषायाम् । 'विष्कभिते अजरे' विष्कब्धेति भाषायाम् । 'येन स्वः स्तभितम्' स्तब्धमिति भाषायाम् । 'सत्येनोत्तभिता भूमिः' उत्तब्धेति भाषायाम् । 'चत्ता वर्षेण विद्युत्' चतितेति भाषायाम् । 'उत्तानाया हृदयं यद्विकस्तम्' विकसितमिति भाषायाम् ॥ निपातेन बहुत्वमपीष्टं विकस्ता इति बहुवचनं कृतम् । तृपरेषु तु निपातनेषु प्रत्येकं विभक्तिनिर्देशः । 'एकस्त्वष्टुरश्वस्याविशस्ता' विशसितेति भाषायाम् ।

धातुकस्येड्वा स्यात् ॥ स्वरिता स्वर्ता । प्रसविता प्रसोता । सोता सविता । धोता धविता । विगाहिता विगाढा ॥

३३०० रधादिभ्यश्च ॥ ४५ ॥ रधादिभ्यः परस्य वलादेरार्धधातुकस्येड्वा स्यात् ॥ रधिता रद्धा । नशिता नष्टा । तृप्ता तर्प्ता तर्पिता । दृप्ता दर्प्ता दर्पिता । द्रोग्धा द्रोढा द्रोहिता । मोग्धा मोढा मोहिता । स्नोग्धा स्नोढा स्नोहिता । स्नेग्धा स्नेढा स्नेहिता ॥

३३०१ निरः कुषः ॥ ४६ ॥ निरःपरात्कुषः परस्य वलादेरार्धधातुकस्येड्वा स्यात् । निष्कोषिता निष्कोष्टा ॥

३३०२ इण्निष्ठायाम् ॥ ४७ ॥ निरः कुषो निष्ठाया इडागमः स्यात् ॥ निष्कुषितः निष्कुषितवान् ॥

३३०३ तीषसहलुभरुषरिषः ॥ ४८ ॥ इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् ॥ एषिता एष्टा । सहिता सोढा । लोभिता लोब्धा । रोषिता रोष्टा । रेषिता रेष्टा ॥

३३०४ सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ॥ ४९ ॥ एषां सन इडागमो वा स्यात् । दिदेविषति दुद्यूषति । आर्दिधिषति ईर्त्सति । बिभ्रज्जिषति बिभ्रक्षति बिभर्जिषति बिभर्क्षति । दिदम्भिषति धिप्सति धीप्सति । शिश्रयिषति शिश्रीषति । सिस्वरिषति सुस्वूर्षति । यियविषति युयूषति । प्रोर्णुनविषति प्रोर्णुनुविषति प्रोर्णुनूषति । बिभरिषति बुभूर्षति । जिज्ञपयिषति ज्ञीप्सति । सिसनिषति सिषासति ॥

* तनिपतिदरिद्रातिभ्यः सनो वेड्वाच्यः ॥ तितनिषति । तितंसति तितांसति । पिपतिषति पित्सति । दिदरिद्रिषति दिदरिद्रासति ॥

३३०५ क्लिशः क्त्वानिष्ठयोः ॥ ५० ॥ क्लिशः क्त्वानिष्ठयोरिडागमो वा स्यात् ॥ क्लिष्ट्वा क्लेशित्वा । क्लिष्टः क्लिशितः । क्लिष्टवान् क्लिशितवान् ॥

३३०६ पूङश्च ॥ ५१ ॥ पूङश्च क्त्वानिष्ठयोर्वेडागमः स्यात् । पूत्वा पवित्वा । पूतः पवितः पूतवान् पवितवान् ॥

३३०७ वसतिक्षुधोरिट् ॥ ५२ ॥ वसतेः क्षुधेश्च क्त्वानिष्ठयोरिडागमः स्यात् ॥ उषित्वा । उषितः । उषितवान् । क्षुधित्वा क्षुधितः । क्षुधितवान् ॥

३३०८ अञ्चेः पूजायाम् ॥ ५३ ॥ अञ्चेः पूजायामर्थे क्त्वानिष्ठयोरिडागमः स्यात् । अञ्चित्वा जानु जुहोति । अञ्चिता अस्य गुरवः ॥

३३०९ लुभो विमोहने ॥ ५४ ॥ विमोहनेऽर्थे लुभः क्त्वानिष्ठयोरिडागमः स्यात् । लुभित्वा लोभित्वा । विलुभिताः केशाः । विलुभितः सीमन्तः ॥

३३२३ विभाषा गमहनविदविशाम् ६८॥ एषां वसोरिडागमो वा स्यात् ॥ जग्मिवान् जगन्वान्। जघ्निवान् जघन्वान् । विविदिवान् विविद्वान् । विविशिवान् विविश्वान् ॥

* दृशेश्चेति वक्तव्यम् । ददृशिवान् ददृश्वान् ॥

३३२४ सनिससनिवांसम् ॥ ६९ ॥ सनिससनिवांसमिति निपात्यते ॥ 'अग्ने त्वामे सनिससनिवांसम्' छन्दसीदं निपातनम् । भाषायां सेनिवांसम् ॥

३३२५ ऋद्धनोः स्ये ॥ ७० ॥ ऋकारान्तानां हन्तेश्च स्यस्येट् स्यात् ॥ करिष्यति हरिष्यति हनिष्यति ॥

३३२६ अञ्जेः सिचि ॥ ७१ ॥ अञ्जेः सिच इडागमः स्यात् । आञ्जीत् आञ्जिष्टाम् ।

३३२७ स्तुसुधूञ्भ्यः परस्मैपदेषु॥७२॥ एभ्यः सिच परस्मैपदेष्विडागमः स्यात्॥ अस्तावीत् । असावीत् । अधावीत् ॥

३३२८ यमरमनमातां सक्च ॥ ७३ ॥ एषां सगागमः स्यात्परस्मैपदे सिचि सिच इडागमश्च ॥ अयंसीत् अयंसिष्टाम् व्यरंसीत् । अनंसीत् । अयासीत् अयासिष्टाम् अयासिषुः ॥

३३२९ स्मिपूङ्रञ्ज्वशां सनि ॥७४॥ एषां सन इडागमः स्यात् । सिस्मयिषते पिपविषते अरिरिषति अञ्जिजिषति अशिशिषते ॥

३३३० किरश्च पञ्चभ्यः ॥ ७५ ॥ कॄ गॄ दृङ् धृङ् प्रच्छतिभ्यः सन इडागमः स्यात् ॥ चिकरिषति जिगरिषति दिदरिषते दिधरिषते पिपृच्छिषति ॥

३३३१ रुदादिभ्यः सार्वधातुके ॥७६॥ रुदादिभ्यः पञ्चभ्यः परस्य वलादेः सार्वधातुकस्येडागमः ॥ रोदिति स्वपिति श्वसिति प्राणिति जक्षिति ॥

३३३२ ईशः से ॥७७॥ ईशः परस्य 'से' इत्येतस्य सार्वधातुकस्येडागमः स्यात् ईशिषे ईशिष्व ॥

३३३३ ईडजनोर्ध्वे च ॥ ७८ ॥ ईडजनोरुत्तरस्य ध्वे इत्येतस्य सेइत्यस्य च सार्वधातुकस्येडागमः स्यात् ॥ ईडिध्वे ईडिध्वम् । ईडिषे ईडिष्व । जनिध्वे जनिध्वम् । जनिषे जनिष्व ॥

३३३४ लिङः सलोपोऽनन्त्यस्य ॥७९॥ सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् ॥ कुर्यात् कुर्याताम् कुर्युः । कुर्वीत कुर्वीयाताम् कुर्वीरन् ॥

३३३५ अतो येयः ॥ ८० ॥ अतः परस्य सार्वधातुकावयवस्य याइत्येतस्य इय् स्यात् ॥ पचेत् पचेताम् पचेयुः ॥

३३३६ आतो ङितः ॥ ८१ ॥ अतः परस्य ङितामाकारस्य इय् स्यात् ॥ पचेते पचेथे पचेताम् पचेथाम् ॥

३३३७ आने मुक् ॥ ८२ ॥ अतोऽङ्गस्य मुगागमः स्यात् ॥ पचमानः यजमानः ॥

३३३८ ईदासः ॥ ८३ ॥ आसः परस्यानस्य ईः स्यात् ॥ आसीनो यजते ॥

३३५३ प्रत्ययोत्तरपदयोश्च ॥ ९८ ॥ एकार्थवाचिनोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तो प्रत्यये, उत्तरपदे च परतः ॥ तवायं त्वदीयः । ममायं मदीयः । त्वत्तर- मत्तर' । त्वयति मयति । त्वत्पुत्रः म- त्पुत्र । त्वन्नाथः मन्नाथ· ॥

३३५४ त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ ९९ ॥ स्त्रियां वर्तमानयोस्त्रिचतुरो- स्तिसृ चतसृ इत्येतावादेशौ स्तो विभक्तौ॥ तिस्र· चतस्रः । तिसृभिः चतसृभिः ॥ प्रियतिसा ब्राह्मणः । प्रियत्रिः ब्राह्मणौ ॥

३३५५ अचि र ऋतः ॥१००॥ तिसृ- चतसृएतयोर्ऋकारस्य रेफादेशः स्यादचि विभक्तौ ॥ तिस्रस्तिष्ठन्ति । तिस्रः पश्य । चतस्र स्तिष्ठन्ति । चतस्रः पश्य ॥

३३५६ जराया जरसन्यतरस्याम् १०१ जराशब्दस्य जरस् इत्यादेशो वा स्याद- जादौ विभक्तौ । जरसा दन्ता॥ शीर्यन्ते जरया दन्ता शीर्यन्ते । जरसे त्वा परिदद्युः जरायै त्वा परिदद्युः ॥

३३५७ त्यदादीनामः ॥ १०२ ॥ एषामकारः स्याद्विभक्तौ ॥ स्यः त्यौ त्ये । सः तौ ते । य· । एष· । इयम् । असौ अमी । द्वौ २ द्वाभ्याम् ३ द्वयोः २ ॥ द्वि- पर्यन्तानां त्यदादीनामत्वमिष्यते । इह न भवति-भवान् भवन्तौ भवन्तः ॥

३३५८ किमः कः ॥ १०३ ॥ किम् शब्दस्य कः स्याद्विभक्तौ ॥ कः कौ के ॥

३३५९ कु तिहोः ॥ १०४ ॥ किमः कु स्यात्तादौ हादौ च विभक्तौ । कुतः कुत्र कुह ॥

३३६० क्वाति ॥ १०५ ॥ किमः क्वः स्यादति विभक्तौ ॥ क्व गमिष्यसि ॥

३३६१ तदोः सः सावनन्त्ययोः १०६॥ त्यदादीनां तकारदकारयोरनन्त्ययोः स स्यात्सौ परतः ॥ स्यः स सा एष· असौ॥

३३६२ अदस औ सुलोपश्च ॥१०७॥ अदस औकारादेशः स्यात्सौ सुलोपश्च ॥ असौ देव· देवा च ॥

*औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च असुकः असकौ ॥

३३६३ इदमो मः ॥१०८॥ इदमो म· स्यात्सौ ॥ इयम् । अयम् ॥

३३६४ दश्च ॥१०९॥ इदमो दकारस्य स्थाने मकारादेशः स्यात्सौ । इमौ इमे इमम् इमौ इमान् ॥

३३६५ यः सौ॥ ११० ॥ इदमो दस्य य स्यात्सौ ॥ इयम् ॥

३३६६ इदोऽय् पुंसि ॥ १११ ॥ इदम इद· स्थाने अय् स्यात्सौ पुंसि ॥ अयम् ब्राह्मण ।

३३६७ अनाप्यकः ११२॥ अककार- स्येदम इदोऽन् स्यादापि विभक्तौ । अनेन अनयो· ॥

३३६८ हलि लोपः ॥११३ ॥ अकका- रस्येदम इदो लोप· स्यादापि हलादौ ॥ आभ्याम् एभिः एषाम् एषु ॥

३३७९ न कर्मव्यतिहारे ॥ ६ ॥ अत्र ऐच् न । व्यावक्रोशी व्यावलेखी व्यावचर्ती व्यावहासी ॥

३३८० स्वागतादीनां च ॥ ७ ॥ स्वागतादिगणपठितानामैच् न स्यात् । स्वागतमित्याह स्वागतिकः ॥

३३८१ श्वादेरिञि ॥ ८ ॥ श्वादेरङ्गस्य इञि परतो ऐचुक्तं तन्न स्यात् । श्वभस्यापत्यं श्वाभस्त्रिः श्वादंष्ट्रिः ॥

* इकारादिग्रहणं कर्तव्यं, श्वागणिकाद्यर्थम् श्वगणेन चरति श्वागणिकः ॥

३३८२ पदान्तस्यान्यतरस्याम् ॥ ९ ॥ पदशब्दान्तस्य श्वादेरङ्गस्यैज् वा स्यात् । श्वापदस्येदं श्वापदम् शौवापदम् ॥

३३८३ उत्तरपदस्य च ॥ १० ॥ उत्तरपदस्येत्ययमधिकारः । 'हनस्त' इति प्रागेतस्मात् यदित ऊर्ध्वमनुक्रमिष्याम उत्तरपदस्येत्येव तद्वेदितव्यम् ॥

३३८४ अवयवादृतोः ॥ ११ ॥ अवयववाचिन उत्तरस्य ऋतुवाचिन उत्तरपदस्याचामादेरचो वृद्धिः स्यात्तद्धिते

३३८५ सुसर्वार्द्धाज्जनपदस्य ॥ १२ ॥ एभ्य उत्तरस्य जनपदवाचिन उत्तरपदस्याचामादेरचो वृद्धिः स्यात् ञिति णिति किति च तद्धिते ॥ सुपाञ्चालकः । सर्वपाञ्चालकः । अर्द्धपाञ्चालकः ॥

३३८६ दिशोऽमद्राणाम् ॥ १३ ॥ दिशः परस्य उत्तरस्य जनपदवाचिनो मद्रवर्जितस्याचामादेरचो वृद्धिः स्याद् ञिति णिति किति च तद्धिते ॥ पूर्वपाञ्चालकः अपरपाञ्चालकः दक्षिणपाञ्चालकः ॥

३३८७ प्राचां ग्रामनगराणाम् ॥ १४ ॥ प्राचां देशे ग्रामनगराणां दिश उत्तरेषामचामादेरचो वृद्धिः स्याद् ञिति णिति किति च तद्धिते ॥ पूर्वैषुकामशम्यां भवः पूर्वैषुकामशमः । अपरैषुकामशमः ॥

३३८८ संख्यायाः संवत्सरसंख्यस्य च ॥ १५ ॥ संख्याया उत्तरस्य संवत्सरशब्दस्य संख्यायाश्चाचामादेरचो वृद्धिः स्यात्तद्धिते ञिति णिति किति च ॥ द्वौ संवत्सरावधीष्टो भृतो भावी वा द्विसांवत्सरिकः द्वि...कः ।

३३८९ वर्षस्याभविष्यति ॥ १६ ॥ संख्यायाः उत्तरस्य वर्षशब्दस्याचामादेरचो वृद्धिः स्याद् भविष्यदर्थभिन्ने तद्धिते ञिति णिति किति च ॥ द्वे वर्षे अधीष्टो भृतो भूतो वा द्विवार्षिकः त्रिवार्षिकः ॥

३३९० परिमाणान्तस्यासंज्ञाशाणयोः ॥ १७ ॥ परिमाणान्तस्याङ्गस्य संख्यायाः पर यदुत्तरपदं तस्याचामादेरचो वृद्धिः स्यात्तद्धिते ञिति णिति किति च । संज्ञायां विषये, शाणे चोत्तरपदे न स्यात् ॥ द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम् ॥ असंज्ञाशाणयोरिति किम् पाञ्चलोहितिकं पाञ्चकलापिकम् । द्वाभ्यां शाणाभ्यां क्रीतं द्वैशाणं द्विशाणम् ॥

स्यात् । पूर्वपदस्य वा ॥ प्राह्मणस्यापत्य प्राघाह्णेयः ॥ प्रवाह्णेयः ॥

२४०२ तद्धितप्रत्ययस्य च ॥२९॥ ढक्प्रत्ययान्तस्य प्रवाहणस्य ञ्णित्किस्तु तद्धितेषु परेषु उत्तरपदस्याचामादेरचो वृद्धिः स्यात् पूर्वस्य तु वा ॥ प्रवाहणेयस्यापत्य प्रावाहणेयिः प्रवाहणेयिः । प्रावाहणेयक प्रवाहणेयकम् ॥ बाह्यान्तर्ङ्गितनिमित्तो वृद्धिर्दीर्घ्येण विकल्पेन बाधितु न शक्येति भावः ॥

२४०३ नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ॥ ३० ॥ नञ उत्तरेषामेषामचामादेरचो वृद्धिः स्यात् पूर्वस्य तु वा ञिति णिति किति च तद्धिते ॥ आ(अ)शौचम् । आनैश्वर्यम् अनैश्वर्यम् । अक्षेत्रज्ञम् आक्षैत्रज्ञम् आकौशलम् अकौशलम् । अनैपुणम् आनैपुणम् ॥

२४०४ यथातथयथापुरयोः पर्यायेण ॥ ३१ ॥ नञ उत्तरयोरनयोः पर्यायेणाचामादेरचो वृद्धिः स्यात्तद्धिते ञिति णिति किति च ॥ आयथातथ्यम् अयाथातथ्यम् । अयाथापुर्यम् आयथापुर्यम् ॥

२४०५ हनस्तोऽचिण्णलोः ॥ ३२ ॥ हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञ्णिति प्रत्यये । घातयति । घातकः । साधुघाती । घाति घातम् घातो वर्तते ॥

२४०६ आतो युक् चिण्कृतोः ॥ ३३ ॥ आकारान्तस्य युगागमः स्याच्चिणि ञ्णिति कृति च ॥ अदायि अधायि दाय दायकः धायः धायकः ॥

२४०७ नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥ ३४ ॥ उदात्तोपदेशस्य मान्तस्याङ्गस्याचमिवर्जितस्य चिणि ञिति णिति कृति चोपधावृद्धिर्न स्यात् ॥ अशमि अतमि अदमि शमकः तमकः दमकः ॥

* अनाचमिकमिवमीनामिति वक्तव्यम् आचामः कामः वामः ॥

२४०८ जनिवध्योश्च ॥ ३५ ॥ जनिवध्योर्न वृद्धिश्चिणि ञ्णिति कृति च ॥ अजनि जनकः । अवधि वधः ॥

२४०९ अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ॥३६॥ एषामङ्गानामाकारान्तानां च पुगागमः स्यात् । अर्पयति ह्रेपयति व्लेपयति रेपयति क्नोपयति । क्ष्मापयति । दापयति धापयति ॥

२४१० शाच्छासाह्वाव्यावेपां युक् ॥३७ एषामङ्गानां युगागमः स्याण्णौ ॥ निशाययति अवच्छाययति अवसाययति ह्वाययति संव्याययति वाययति पाययति ॥

*पातेर्णौ लुग्वक्तव्यः । पालयति ॥

* धूञ्प्रीञोर्नुग्वक्तव्यः । धूनयति प्रीणयति ॥

---

१ दीक्षारचर्माज् औक्षोत्यादिक एव ऋधातुर्गते । तेन औणादिकस्य आरयति इत्येव । तेन कुम्भार –चर्मार–लौहार प्रभृतीनां सिद्धिरिति साधिमया ॥

इभ्यिका इभ्यका । क्षत्रियिका क्षत्रियका । चटकिका चटकका । मूषिकिका मूषिकका ॥

* यकपूर्वत्वे धात्वन्तप्रतिषेधः । सुनयिका सुशयिका । पाकिका आशोकिका ॥

३४२० भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि ॥४७॥ एषामातःस्थानेऽत इद्वा स्यात् । भस्त्रिका भस्त्रका अभस्त्रिका अभस्त्रका । एषिका एषका । अजिका अजका अनजिका अनजका । ज्ञका ज्ञिका । अज्ञिका अज्ञका । द्विके । द्वके । स्विका स्वका अस्विका अस्वका ॥

३४२१ अभाषितपुंस्काच्च ॥४८॥ अभाषितपुंस्काद्विहितस्यात स्थाने योऽकारस्तस्येद्वा स्यात् ॥ खट्विका खट्वका । अखट्विका अखट्वका । परमखट्विका परमखट्वका ॥

३४२२ आदाचार्याणाम् ॥४९॥ पूर्वसूत्रविषये आद्वा स्यात् ॥ खट्वाका अखट्वाका परमखट्वाका ॥

३४२३ ठस्येकः ॥५०॥ अङ्गात्परस्य ठस्य इकादेशः स्यात् ॥ आक्षिकः शालाकिकः ॥

३४२४ इसुसुक्तान्तात्कः ॥५१॥ इस् उस् उक् त इत्यन्तादङ्गादुत्तरस्य ठस्य क इत्ययमादेशः स्यात् ॥ सार्पिष्कः । धानुष्कः । नैषादकर्षुकः । शाबरजम्बुकः । मातृकम् पैतृकम् । औदश्वित्कः । शाकृत्कः ।

* दोष उपसंख्यानम् । दोर्भ्यां चरति दौष्कः ॥

३४२५ चजोः कु घिण्ण्यतोः ॥५२॥ चकारजकारयोः कवर्गादेशः स्याद् घिति ण्यति च ॥ पाकः । त्यागः । रागः । पाक्यं रैक्यम् ॥

३४२६ न्यङ्क्वादीनां च ॥५३॥ न्यङ्क्वित्येवमादीनां कवर्गादेशः स्यात् ॥ न्यङ्कु इत्यादि ॥

३४२७ हो हन्तेर्ञ्णिन्नेषु ॥५४॥ हन्तेर्हकारस्य कवर्गादेशः स्याद् ञिति णिति प्रत्यये नकारे च । घातयति घातकः साधुघाती । घातं घातम् । घातो वर्तते । घ्नन्ति घ्नन्तु अघ्नन् ॥

३४२८ अभ्यासाच्च ॥५५॥ अभ्यासादुत्तरस्य हन्तेर्हकारस्य कुत्वं स्यात् ॥ जिघांसति जङ्घन्यते जघनिथ ॥

३४२९ हेरचङि ॥५६॥ अभ्यासादुत्तरस्य हिनोतेर्हकारस्य कुत्वं स्यान्न तु चङि ॥ प्रजिघीषति प्रजेघीयते ॥ प्रजिघाय ।

३४३० सन्लिटोर्जेः ॥५७॥ सनि लिटि च प्रत्यये जयतेरङ्गस्य योऽभ्यासस्तस्मादुत्तरस्य कवर्गादेशः स्यात् ॥ जिगीषति जिगाय ॥

३४३१ विभाषा चेः ॥५८॥ चिनोतेरङ्गस्य सन्लिटोरभ्यासादुत्तरस्य वा कवर्गादेशः स्यात् । चिचीषति चिकीषति चिकाय चिचाय ॥

३४४८ ष्ठिवुक्लमुचमां शिति ॥ ७५ ॥ एषां दीर्घः स्याच्छिति । ष्ठीवति क्लामति-

* दीर्घत्वमाङि चम इति वक्तव्यम् । आचामति ॥

३४४९ क्रमः परस्मैपदेषु ॥ ७६ ॥ क्रम परस्मैपदे परे शिति दीर्घः स्यात् । क्रामति क्रामतु अक्रामत् ॥ क्राम्येत् ॥

३४५० इषुगमियमां छः ॥ ७७ ॥ एषां शिति छः स्यात् ॥ इच्छति गच्छति यच्छति ॥

३४५१ पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥ ७८ ॥ पादीनां पिबादयः स्युरित्संज्ञकशकारादौ । पिबति जिघ्रति धमति तिष्ठति मनति यच्छति पश्यति ऋच्छति धावति शीयते सीदति ॥

३४५२ ज्ञाजनोर्जा ॥ ७९ ॥ शिति ॥ जानाति जानीते । जायते ॥

३४५३ प्वादीनां ह्रस्वः ॥ ८० ॥ पूञित्येवमादीनां ह्रस्वः शिति । पुनाति ॥

३४५४ मीनातेर्निगमे ॥ ८१ ॥ मीनाते ह्रस्वः स्याच्छिति निगमे । "प्रमिनन्ति व्रतानि" ॥

३४५५ मिदेर्गुणः ॥ ८२ ॥ मिदेरङ्गस्येको गुणः स्याच्छिति । मेद्यति मेद्यतः मेद्यन्ति ॥

३४५६ जुसि च ॥ ८३ ॥ जुसीगन्ताङ्गस्य गुणः स्यात् । अजुहवुः अबिभयुः ॥

३४५७ सार्वधातुकार्धधातुकयोः ॥ ८४ ॥ अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । तरति नयति भवति कर्ता चेता स्तोता ॥

३४५८ जाग्रोऽविचिण्णल्ङित्सु ॥ ८५ जागर्तेर्गुणः स्यात् विचिण्णल्ङिद्भ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेधविषये च । जागरयति । जागरकः । साधुजागरी ॥ जागरः । जागरम् । जागरो वर्तते । जागरितः । जागरितवान् ॥

३४५९ पुगन्तलघूपधस्य च ॥ ८६ ॥ पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात् । ह्रेपयति क्लोपयति रेपयति क्नोपयति भेदनम् छेदनम् भेत्ता छेत्ता ॥

३४६० नाभ्यस्तस्याचि पिति सार्वधातुके ॥ ८७ ॥ अभ्यस्तसंज्ञकस्याङ्गस्य लघूपधस्य गुणो न स्यादजादौ पिति सार्वधातुके ॥ नेनिजानि । अनेनिजम् परिवेविषाणि पर्यवेविषम् ॥

* बहुलं छन्दसीति वक्तव्यम् जुजोषदिति यथा स्यात् ॥

३४६१ भूसुवोस्तिङि ॥ ८८ ॥ एतयोः सार्वधातुके तिङि गुणो न ॥ अभूत् अभूः अभूवम् । सुवै सुवावहै सुवामहै ।

३४६२ उतो वृद्धिर्लुकि हलि ॥ ८९ ॥ उकारान्तस्य वृद्धिः स्याल्लुकि सति हलादौ पिति सार्वधातुके । यौति यौषि । नौति ॥

३४६३ ऊर्णोतेर्विभाषा ॥ ९० ॥ ऊर्णोतेर्वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके

खट्वया मालया । खट्वयोः मालयोः ॥

२४७९ संबुद्धौ च ॥ १०६ ॥ आबन्तस्याङ्गस्यैकारः स्यात्संबुद्धौ ॥ हेखट्वे हे माले । हे सीमे । हे कारीषगन्ध्ये ॥

२४८० अम्बार्थनद्योर्ह्रस्वः ॥ १०७ ॥ अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्संबुद्धौ ॥ हे अम्ब हेअक्क हे अल्ल ॥ हेकुमारि हे शार्ङ्गरवि हे ब्रह्मबन्धु ॥

* (असंयुक्त) डलकवतीनां प्रतिषेध ॥ हे अम्बाडे । हे अम्बाले । हे अम्बिके ॥

* छन्दसि वेति वक्तव्यम् हे अम्बाड हे अम्बाडे । हे अम्बाल हे अम्बाले । हे अम्बिके हे अम्बिक ॥ ( काशिका ) ॥

*वलो ह्रस्वो वा डिसंबुद्धयोरिति वक्तव्यम् देवताया : भक्ति , देवते भक्ति । हे देवत हे देवते ॥

* मातॄणां मातच् पुत्रार्थमर्हते । हे गार्गीमात ॥

२४८१ ह्रस्वस्य गुणः ॥ १०८ ॥ ह्रस्वान्तस्याङ्गस्य गुण स्यात्संबुद्धौ ॥ हे अग्ने हे वायो ॥

२४८२ जसि च ॥१०९॥ ह्रस्वान्तस्याङ्गस्य गुण स्याज्जसि ॥ अग्नय वायव ॥

* जसादिषु छन्दसि वा वचनं प्राक् ' णौ चङ्युपधायाह्रस्वः ' इत्येतस्मात्, इतः प्रकरणात्प्रभृति छन्दसि वेति वक्तव्यम् किं प्रयोजनम् ? अम्बे दधिं शतक्रत्व. प्रश्वे किं पिदीव्या॥ अम्बे अम्ब । दधे दधि शतक्रत्व शतक्रतव ।पश्वे पशवे । किंकिदीव्या किंकिदीविन ।

२४८३ ऋतोङिसर्वनामस्थानयो ११०॥ ऋकारान्तस्याङ्गस्य गुण स्यान्ङौ सर्वनामस्थाने च ॥ मातरि पितरि । कर्तारौ कर्तारः मातरौ पितरौ भ्रातरौ ॥

२४८४ घेर्ङिति ॥ १११ ॥ घ्यन्ताङ्गस्य गुण स्यान्ङिति ॥ अग्नये वायवे । अग्नेरागच्छति वायोरागच्छति । अग्नेः स्वम् वायोः स्वम् ॥

२४८५ आण् नद्याः ॥ ११२ ॥ नद्यन्तादङ्गादुत्तरस्य ङित प्रत्ययस्या आगमः स्यात् ॥ नद्यै धेन्वै कुमार्यै । ब्रह्मबन्ध्वै । नद्याः धेन्वाः कुमार्याः ब्रह्मबन्ध्वाः ॥

२४८६ याडापः ॥ ११३ ॥ आबन्तादङ्गात्परस्य ङितो याडागमः स्यात ॥ खट्वायै बहुराजायै । कारीषगन्ध्यायै । खट्वायाः कारीषगन्ध्यायाः बहुराजायाः ॥

२४८७ सर्वनाम्नःस्याड् ढ्रस्वश्च॥११४॥ आबन्तात्सर्वनाम्नो ङित. स्याडागमश्च ह्रस्व. ॥ सर्वस्यै विश्वस्यै यस्यै तस्यै कस्यै । सर्वस्याः विश्वस्याः यस्याः तस्याः कस्याः ॥

२४८८ विभाषा द्वितीया तृतीयाभ्याम् ॥ ११५ ॥ आभ्यामुत्तरस्य ङितो वा स्याडागमो ह्रस्वश्च ॥ द्वितीयस्यै द्वितीयायै तृतीयस्यै तृतीयायै ॥

प्रत्याख्यातमिदम् 'तीयस्य ङित्सु' इति वार्तिकेन सिद्धत्वात् ॥

खट्वया मालया । खट्वयोः मालयोः ॥

३४७९ संबुद्धौ च ॥ १०६ ॥ आबन्तस्याङ्गस्यैकारः स्यात्संबुद्धौ ॥ हे खट्वे हे माले । हे सीते । हे कारीषगन्ध्ये ॥

३४८० अम्बार्थनद्योर्ह्रस्वः ॥ १०७ ॥ अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्संबुद्धौ ॥ हे अम्ब हे अक्क हे अल्ल ॥ हे कुमारि हे शार्ङ्गरवि हे ब्रह्मबन्धु ॥

* (असंयुक्त) डलकवतीनां प्रतिषेधः ॥ हे अम्बाडे । हे अम्बाले । हे अम्बिके ॥

* छन्दसि वेति वक्तव्यम् हे अम्बाड हे अम्बाडे । हे अम्बाल हे अम्बाले । हे अम्बिके हे अम्बिक ॥ ( काशिका ) ॥

*तलो ह्रस्वो वा ङिसंबुद्ध्योरिति वक्तव्यम् देवताया भक्ति, देवते भक्ति । हे देवत हे देवते ॥

* मातॄणां मातच् पुत्रार्थमर्हते । हे गार्गीमात ॥

३४८१ ह्रस्वस्य गुणः ॥ १०८ ॥ ह्रस्वान्तस्याङ्गस्य गुणः स्यात्संबुद्धौ ॥ हे अग्ने हे वायो ॥

३४८२ जसि च ॥१०९॥ ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि ॥ अग्नयः वायवः ॥

* जसादिषु छन्दसि वा वचनं प्राक् 'णौ चङ्युपधाया ह्रस्वः' इत्येतस्मात्, इतः प्रकरणात्प्रभृति छन्दसि वेति वक्तव्यम् किं प्रयोजनम् ? अम्बे दर्वि शतक्रत्व. अघं कि विदीव्या॥ अम्बे अम्ब । दर्वे दर्वि शतक्रत्व शतक्रतव । पश्वे पशवे । किकिदीव्या किकिदीविना ।

३४८३ ऋतो ङिसर्वनामस्थानयोः ११०॥ ऋकारान्तस्याङ्गस्य गुणः स्यान्ङौ सर्वनामस्थाने च ॥ मातरि पितरि । कर्तारौ कर्तारः मातरौ पितरौ भ्रातरौ ॥

३४८४ घेर्ङिति ॥ १११ ॥ घ्यन्ताङ्गस्य गुणः स्यान्ङिति ॥ अग्नये वायवे । अग्ने रागच्छति वायोरागच्छति । अग्नेः स्वम् वायोः स्वम् ॥

३४८५ आण् नद्याः ॥ ११२ ॥ नद्यन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्याट् आगमः स्यात् ॥ मत्यै धेन्वै कुमार्यै । ब्रह्मबन्ध्वै । मत्याः धेन्वाः कुमार्याः ब्रह्मबन्ध्वाः ॥

३४८६ याडापः ॥ ११३ ॥ आबन्तादङ्गात्परस्य ङितो याडागमः स्यात् ॥ खट्वायै बहुराजायै । कारीषगन्ध्यायै । खट्वायाः कारीषगन्ध्यायाः बहुराजायाः ॥

३४८७ सर्वनाम्नः स्याड्ढ्रस्वश्च॥११४॥ आबन्तात्सर्वनाम्नो ङितः स्याडागमश्च ह्रस्वः ॥ सर्वस्यै विश्वस्यै यस्यै तस्यै कस्यै । सर्वस्याः विश्वस्याः यस्याः तस्याः कस्याः ॥

३४८८ विभाषा द्वितीयातृतीयाभ्याम् ॥ २१५ ॥ आभ्यामुत्तरस्य ङितो वा स्याडागमो ह्रस्वश्च ॥ द्वितीयस्यै द्वितीयायै तृतीयस्यै तृतीयायै ॥

प्रत्याख्यातमिदम् 'तीयस्य ङित्सु' इति वार्तिकेन सिद्धत्वात् ॥

लिटि ॥ सस्वरतुः दध्वरतुः सस्वरुः दध्वरुः ॥

३५०२ ऋच्छत्यॄताम् ॥ ११ ॥ ऋच्छते रङ्गस्य ऋत्येतस्य ॠकारान्तानां च लिटि गुणः स्यात्॥ आनर्छ आनर्छतुः । आर आरतुः । निचकरतुः निचकरुः । निजगरतुः निजगरुः ।

३५०३ शॄदॄप्रां ह्रस्वो वा ॥ १२ ॥ एषामङ्गानां लिटि ह्रस्वः स्यात्॥ विशश्रतुः विशश्रुः विशशरतुः विशशरुः । विदद्रतुः विदद्रुः विददरतुः विददरुः । निपप्रतुः निपप्रुः निपपरतुः निपपरुः ।

३५०४ केऽणः ॥ १३ ॥ के प्रत्ययेऽणो ह्रस्वः स्यात्॥ अत्र कुमारिका किशोरिका॥

३५०५ न कपि ॥ १४ ॥ कपि परेऽणो ह्रस्वो न स्यात् । बहुकुमारीकः बहुवधूकः । बहुलक्ष्मीकः ॥

३५०६ आपोऽन्यतरस्याम् ॥ १५ ॥ आबन्तस्य कपि ह्रस्वो वा स्यात्॥ बहुखट्वकः बहुखट्वाकः॥

३५०७ ऋदृशोऽङि गुणः ॥ १६ ॥ ऋवर्णान्तानां दृशेश्चाङि गुणः स्यात्॥ 'शकलाङ्गुष्ठकोऽकरत्' 'अहं तेभ्योऽकरं नमः' । असरत् आरत् अदर्शत्॥

३५०८ अस्यतेस्थुक् ॥ १७ ॥ अस्यतेरङ्गस्य थुगागमः स्यादङि॥ आस्थत् आस्थताम् आस्थन्॥

३५०९ श्वयतेरः ॥ १८ ॥ श्वयतेरङ्गस्य अकारादेशः स्यादङि॥ अश्वत् । अश्वताम् । अश्वन्॥

३५१० पतः पुम् ॥ १९ ॥ पतेः पुमागमः स्यादङि॥ अपप्तत् अपप्तताम्॥

३५११ वच उम् ॥ २० ॥ वचेरङ्गस्याङि परे उमागमः स्यात्॥ अवोचत्॥

३५१२ शीङः सार्वधातुके गुणः ॥ २१ ॥ शीङोऽङ्गस्य सार्वधातुके गुणः स्यात्॥ शेते शयाते शेरते॥

३५१३ अयङ् यि क्ङिति ॥ २२ ॥ यकारादौ क्ङिति शीङोऽङ्गस्यायङादेशः स्यात् । शय्यते शाशय्यते प्रशय्य उपशय्य॥

३५१४ उपसर्गाद्ध्रस्व ऊहतेः ॥ २३ ॥ उपसर्गादुत्तरस्य ऊहतेरङ्गस्य ह्रस्वः स्यात् यादौ क्ङिति ॥ समुह्यते समुह्य गत· अभ्युह्यते अभ्युह्य ।

३५१५ एतेर्लिङि ॥ २४ ॥ एतेरङ्गस्योपसर्गादुत्तरस्य यादौ क्ङिति लिङि ह्रस्वः स्यात् ॥ उदियात् अन्वियात् ।

३५१६ अकृत्सार्वधातुकयोर्दीर्घः ॥ २५ ॥ अजन्ताङ्गस्य दीर्घः स्याद्यादौ न तु कृत्सार्वधातुकयोः ॥ भृशायते सुखायते चीयते चेचीयते ॥

३५१७ च्वौ च ॥ २६ ॥ अजन्ताङ्गस्य दीर्घः स्याच्च्वौ ॥ शुची करोति शुची भवति शुची स्यात् ।

३५१८ रीङ् ऋतः ॥ २७ ॥ अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परे ऋतो रीङादेशः स्यात् ॥ मात्रीयति मात्रीयते चेक्रीयते मात्रीभूतः ।

*स्यतेरित्वं व्रते नित्यमिति वक्तव्यम् । संशितो ब्राह्मणः ।

देवत्रातो गलो ग्राह इतियोगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥

३५३३ दधातेर्हिः ॥ ४२ ॥ दधातेस्तङ्गस्य हीत्ययमादेशः स्यात्तादौ किति । हितः हितवान् हित्वा. हितम् ॥

३५३४ जहातेश्च क्त्वि ॥ ४३ ॥ जहातेस्तङ्गस्य हीत्ययमादेश स्यात् क्त्वाप्रत्यये ॥ हित्वा राज्यं वनं गतः । हित्वा गच्छति ।

३५३५ विभाषा छन्दसि ॥ ४४ ॥ जहातेस्तङ्गस्य वा हीत्ययमादेश स्यात् क्त्वा प्रत्यये छन्दसि ॥ हित्वा शरीरं यातव्यम् । हात्वा वा ॥

३५३६ सुधित वसुधित नेमधित धिष्व धिषीय च ॥ ४५ ॥ एतानि छन्दसि निपात्यन्ते ॥ 'गर्भ माता सुधितम्' सुहितमिति प्राप्ते ॥ 'वसुधितमग्नौ जुहोति' वसुहितमिति प्राप्ते ॥ नेमधिता बाधन्ते' नेमहिता इति प्राप्ते । 'धिष्व सोमम्' धस्त्वेति प्राप्ते ॥ धिषीयेति । धासीयेति प्राप्ते ॥

३५३७ दो दद् घोः ॥ ४६ ॥ घुसञ्ज्ञकदा इत्यस्य 'दद्' इत्ययमादेश स्यात्तादौ किति ॥ दत्त दत्तवान । दत्ति. ॥

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥१

'अच उपसर्गात्तः' इति प्राप्ते निपात्यन्ते ॥ अनुपसर्गा वा एते अवादय क्रियान्तरविषया वेदितव्या. ॥

३५३८ अच उपसर्गात्तः ॥ ४७ ॥ अजन्तादुपसर्गादुत्तरस्य दा इत्येतस्य घुसञ्ज्ञकस्य 'त' इत्ययमादेशः स्यात्तादौ किति । प्रत्तम् अवत्तम् नीत्तम् । परीत्तम् ।

३५३९ अपो भि ॥ ४८ ॥ अपस्तकारः स्याद्भादौ प्रत्यये ॥ अद्भिः अद्भ्यः ॥

३५४० सः स्यार्धधातुके ॥ ४९ ॥ सस्य तः स्यात्सादावार्धधातुके ॥ वत्स्यति अवत्स्यत् । जिघत्सति ॥

३५४१ तासस्त्योर्लोपः ॥ ५० ॥ तासेरस्तेश्च सकारस्य लोपः स्यात्सादौ प्रत्यये ॥ कर्तासि कर्तासे ॥ त्वम्=असि व्यति रे ॥

३५४२ रि च ॥ ५१ ॥ तासस्त्योः सकारस्य लोपः स्याद्रादौ प्रत्यये ॥ कर्तारौ कर्तारः । व्यति रे ॥

३५४३ ह एति ॥ ५२ ॥ तासस्त्योः सकारस्य हकारः स्यादेति ॥ कर्ताहे व्यति हे ॥

३५४४ यीवर्णयोर्दीधीवेव्योः ॥ ५३ ॥ यकारादाविवर्णादौ च दीधीवेव्योर्लोपः स्यात् । आदीध्य गतः । आवेव्य गतः ॥ आदीध्य । आवेव्यते आदीधिता आवेविता आदीधीत आवेवीत ॥

३५४५ सनि मीमाघुरभलभशकपतपदामच इस् ॥ ५४ ॥ एषामच इस्स्यात् सनि ॥ मो इति मीनातिमिनोत्योर्द्वयोरपि ग्रहणमिष्यते ॥ मित्सति प्रमित्सति ।

३५५९ व्यथो लिटि ॥ ६८ ॥ व्यथेरभ्यासस्य सम्प्रसारणं स्याल्लिटि । विव्यथे । विव्यथाते ।

३५६० दीर्घ इणः किति ॥ ६९ ॥ इणोऽङ्गस्य योऽभ्यासस्तस्य दीर्घः स्यात् किति लिटि । ईयतुः ईयुः ॥

३५६१ अत आदेः ॥ ७० ॥ अभ्यासस्यादेरतो दीर्घः स्याल्लिटि । आट आटतुः । आनञ्जे आनञ्जतुः ॥

३५६२ तस्मान्नुड् द्विहलः ॥ ७१ ॥ द्विहलो धातोर्दीर्घीभूतादभ्यासादकारात्परस्य नुट् स्यात् ॥ आनञ्ज आनञ्जतुः ॥ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते तेनेहापि नुट्—मानृधतुः आनृधुः ॥

द्विपदस्यानेकपरत्वान्नुट्-आनच्छ ॥

३५६३ अश्नोतेश्च ॥ ७२ ॥ अश्नोतेश्च दीर्घीभूतादभ्यासादकारात्परस्य नुडागमः स्यात् । व्यानशे व्यानशाते व्यानशिरे ॥

३५६४ भवतेरः ॥ ७३ ॥ भवतेरभ्यासोकारस्याकारादेशो, लिटि ॥ बभूव बभूवतु बभूवुः ॥

३५६५ ससूवेति निगमे ॥ ७४ ॥ ससूव इति निपात्यते निगमे ॥ ससूव स्थविरं विपश्चिताम्' सुषुवे इति भाषायाम् ॥

३५६६ णिजां त्रयाणां गुणः श्लौ ॥ ७५ ॥ णिज्विजिविषामभ्यासस्य गुणः स्याच्छ्लौ । नेनेक्ति वेवेक्ति वेवेष्टि ॥

३५६७ भृञामित् ॥ ७६ ॥ भृञादीनां त्रयाणामभ्यासस्येकारादेशः स्याच्छ्लौ । बिभर्ति मिमीते जिहीते ॥

३५६८ अर्तिपिपर्त्योश्च ॥ ७७ ॥ अनयोरभ्यासस्येकारादेशः स्याच्छ्लौ ॥ इयर्ति धूमम् । पिपर्ति सोमम् ॥

३५६९ बहुलं छन्दसि ॥ ७८ ॥ छन्दसि अभ्यासस्य श्लौ बहुलमिकारादेशः स्यात् ॥ 'पूर्णां विवष्टि' 'जनिमा विवक्ति' । 'वत्सं न माता सिषक्ति'। 'जिघर्ति सोमम्'॥ न च भवति 'ददातीत्येव ब्रूयात्' । 'जजनमिन्द्रम्' मै० सं० १।६।१। 'माता यद्वीरं दधनद्धनिष्ठा' ( ऋ० १०।७३।१ ) ॥

३५७० सन्यतः ॥ ७९ ॥ अभ्यासस्यात इत्स्यात्सनि ॥ पिपक्षति यियक्षति ॥

३५७१ ओः पुयण्ज्यपरे ॥ ८० ॥ सनि परे यदङ्गं तदवयवस्याभ्यासस्योत इत्स्यात् ॥ पवर्ग-यण्-जकारेष्ववर्णपरेषु परतः ॥ यथा 'पिपविषति पिपावयिषति बिभावयिषति । यणि—यियविषति यियावयिषति रिरावयिषति लिलावयिषति । जे—जिजावयिषति ॥

३५७२ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥ ८१ ॥ एषामभ्यासस्य उवर्णस्य अवर्णपरे धात्वक्षरे परे वा इकारादेशः स्यात् ॥ सिस्रावयिषति सुस्रावयिषति । शुश्रावयिषति शिश्रावयिषति । दिद्रावयिषति दुद्रावयिषति । पिप्रावयिषति पुप्रावयिषति । पिप्लावयिषति पुप्लावयिषति । चिच्यावयिषति चुच्यावयिषति ॥

३५७३ गुणो यङ्लुकोः ॥ ८२ ॥ इगन्तस्याभ्यासस्य गुणः स्याद्यङि यङ्लुकि च ॥ चेचीयते लोलूयते जोहवीति चोकुशीति ॥

अचचकाशत् ॥

३५८५ दीर्घोऽकितः ॥९४॥ अकितोऽभ्यासस्य दीर्घः स्यात् यन्यङ्लुगविषयौ । यंयम्यते यंयमीति । यावीकरत् अजाहरत् ।

३५८६ अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ॥९५ ॥ एषामभ्यासस्यात् स्याच्चङ्परे णौ ॥ असस्मरत् अददरत् अतत्वरत् अपप्रथत् अमम्रदत् अतस्तरत् अपस्पशत् ॥

३५८७ विभाषा वेष्टिचेष्ट्योः ॥९७ ॥ अनयोरभ्यासस्य वा अकारादेशः स्याच्चङ्परे णौ ॥ अववेष्टत् अविवेष्टत् ॥ अचचेष्टत् अचिचेष्टत् ॥

३५८८ ई च गणः ॥ ९८ ॥ गणेरभ्यासस्येकारादेशः स्याच्चङ्परे णौ । चादत् ॥ अजीगणत् । अजगणत् ॥

इति सप्तमाध्यायस्य चतुर्थः पादः ॥

अध्यायश्च समाप्तः ।

इति श्री समस्तमहीमण्डलमण्डितरणराणा-वतोभ्यवायसमुद्रसमुद्भूत—कानधेश्वा सवाईजयपुरनगराधीश्वर—महाराजाधिराज—सवाई रामसिंह- सहधर्मिण्या रूपकुमारीदेव्या कारितायां माथुरचतुर्वेद श्री राजकुमारात्मजजानकीलाल-शर्म विरचितायां राणावतीयपाणिनीयसूत्रवृत्तौ सप्तमोऽध्यायः समाप्तः ॥

३५८९ सर्वस्य द्वे । १ ॥ सर्वस्येति द्वे इति चैतदधिकृतं वेदितव्यम् ॥ इत उत्तरं यद् वक्ष्याम प्राक् 'पदस्येत्यतः', 'सर्वस्य द्वे भवतः' इत्येवं तद्वेदितव्यम् ॥ ]

३५९० तस्य परमाम्रेडितम् ॥ २ ॥ द्विरुक्तस्य यत्परं शब्दरूपं तदाम्रेडितसंज्ञं स्यात् ॥ चौर चौर । वृषल वृषल ॥ दस्यो दस्यो घातयिष्यामि त्वाम् ॥

३५९१ अनुदात्तं च ॥ ३ ॥ अनुदात्तं च तद्भवति यदाम्रेडितसंज्ञम् ॥ भुङ्क्ते भुङ्क्ते । पशून् पशून् ॥

३५९२ नित्यवीप्सयोः ॥ ४ ॥ नित्येऽर्थे वीप्सायां च यद्वर्तते तस्य द्वे भवतः ॥ केषु नित्यता ? तिङन्तेषु, अव्ययसंज्ञककृदन्तेषु च । कृत एतद् ? आभीक्ष्ण्यमिह नित्यता । आभीक्ष्ण्यं च क्रियाधर्मः । यां क्रियां कर्ता प्राधान्येनानुपरमन् करोति, तन्नित्यम् । पचति पचति ॥ जल्पति जल्पति । भुक्त्वा भुक्त्वा व्रजति । भोजं भोजं व्रजति । लुनीहि लुनीहीत्येवायं लुनाति ॥ अथ केषु वीप्सा ? सुप्सु वीप्सा ॥ का पुनः सा ? व्याप्तिविशेषविषया प्रयोक्तुरिच्छा वीप्सा । ग्रामो ग्रामो रमणीयः । जनपदो जनपदो रमणीयः । पुरुषः पुरुषो निधनमुपैति ॥

३५९३ परेर्वर्जने ॥५॥ * वा वचनम् ॥ परेरेतस्य वर्जने द्वे वा भवतः ॥ परि परि (परि वा) त्रिगर्तेभ्यो वृष्टो देवः ॥

३५९४ प्रसमुपोदः पादपूरणे ॥ ६ ॥ एषां पादपूरणे द्वे भवतो द्विर्वचनेन चेत्पादः पूर्यते ॥ 'प्र प्रायमग्निर्भरतस्य शृण्वे'

*आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम् । भुक्त्वा भुक्त्वा व्रजति ॥

*डाचि बहुलं द्वे भवत इति वक्तव्यम् । पटपटा करोति ॥ न च भवति—पटिताया करोति ॥

*पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम् । पूर्वं पूर्वं पुष्प्यन्ति प्रथमं प्रथमं पच्यन्ते । अतिशयिकोऽपि दृश्यते पूर्वतरं पुष्प्यन्ति प्रथमतरं पच्यन्ते इति ॥

*डतरडतमयोः समसंप्रधारणयोः स्त्रीनिगदे भावे द्वे भवत इति वक्तव्यम् । उभाविमावाढ्यौ कतरा कतरा अनयोराढ्यता । सर्वे इमे आढ्याः कतमा कतमा एषामाढ्यता ॥ डतरडतमाभ्यामन्यत्रापि दृश्यते कीदृशी कीदृशी अनयोराढ्यता ॥ तथा स्त्रीनिगदादन्यत्रापि दृश्यते—उभाविमावाढ्यौ कतरः कतरोऽनयोर्विभव

*कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यम् । समासवच्च बहुलम् । यदा न समासवत् तदा पूर्वपदस्य प्रथमैकवचनम् । अन्यमन्यमिमे ब्राह्मणाः भोजयन्ति अन्योऽन्यमिमे ब्राह्मणा भोजयन्ति । अन्योन्यस्य ब्राह्मणा भोजयन्ति । इतरेतरान् भोजयन्ति ॥

*स्त्रीनपुंसकयोरुत्तरपदस्य चाम्भावो वक्तव्यः । अन्योऽन्यामिमे ब्राह्मण्यौ भोजयत अन्योन्यामिमे ब्राह्मणकुले भोजयतः । इतरेतरमिमे ब्राह्मणकुले भोजयतः ॥

३६०१ अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ॥ १३ ॥ प्रियसुखयोर्वा द्वे भवतोऽकृच्छ्रेद्योत्ये ॥ प्रियप्रियेण ददाति । सुखसुखेन ददाति । प्रियेण ददाति सुखेन ददाति ॥

३६०२ यथास्वे यथायथम् ॥ १४ ॥ यो यः आत्मा यच्चात्मीयं तद्यथास्वम् । तस्मिन्यथायथमिति निपात्यते ॥ ज्ञाताः सर्वे पदार्था यथायथम् । यथास्वभावमित्यर्थः ॥ सर्वेषां तु यथायथम् यथात्मीय मित्यर्थ ॥

३६०३ द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥ १५ ॥ द्वन्द्वमिति निपात्यते एष्वर्थेषु ॥ तत्र रहस्यं द्वन्द्वशब्दवाच्यम्, 'इतरे विषयभूताः द्वन्द्वं मन्त्रयन्ते ॥ आचतुरं हि इमे पशवो द्वन्द्वं मिथुनायन्ते । माता पुत्रेण मिथुनं गच्छति पौत्रेण तत्पुत्रेणापीति मर्यादार्थः । 'द्वन्द्वं व्युत्क्रान्ताः' व्युत्क्रमणम् भेदः पृथगवस्थानम् ॥ द्विवर्गसम्बन्धेन पृथगवस्थिता व्युत्क्रान्ता इत्युच्यन्ते । यज्ञपात्रप्रयोगे 'द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति धीरः' । अभिव्यक्तौ 'द्वन्द्वं नारदपर्वतौ' 'द्वन्द्वं सङ्कर्षणवासुदेवौ' अन्यत्रापि द्वन्द्वमित्येव दृश्यते तदर्थं योगविभागः कर्तव्यः । द्वन्द्वं युद्धं वर्तते । द्वन्द्वानि सहते धीरः । चार्थे द्वन्द्वं इति ॥

३६०४ पदस्य ॥ १६ ॥ अयमधिकारः प्रागपदान्ताधिकारात् । यदित ऊर्ध्वमनुक्रमिष्यामः 'पदस्य' इत्येवं तद्वेदितव्यम् ॥

ग्रामो मा च पश्यति । युवां च पश्यति । आवां च पश्यति । युष्मांश्च पश्यति । अस्मांश्च पश्यति । एवं चादियोगेऽप्युदाहार्यम् ॥

३६१३ पश्यार्थैश्चानालोचने ॥ २५ ॥ अनालोचने वर्तमानैः पश्यार्थैर्युक्तयोर्युष्मदस्मदोर्वान्नावादयो न स्युः ॥ ग्रामस्तव स्वं समीक्ष्यागतः ॥ ग्रामो मम स्व समीक्ष्यागत ॥

३६१४ सपूर्वायाः प्रथमाया विभाषा ॥ २६ ॥ विद्यमानपूर्वात्प्रथमान्तात् पदादुत्तरयोर्युष्मदस्मदोर्वान्नावादयः स्युः । ग्रामे कम्बलस्ते स्वम् । ग्रामे कम्बलो मे स्वम् । ग्रामे कम्बलो मम स्वम् । इत्यादि ॥

३६१५ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ २७ ॥ तिङन्तात्पदात्पराणि गोत्रादीनि कुत्सने आभीक्ष्ण्ये चार्थे वर्तमानानि अनुदात्तानि स्युः । पचति गोत्रम् । पचति पचति गोत्रम् । एवं प्रुव-प्रवचन-प्रहसन-प्रकथन-प्रत्ययनादयः ॥ कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणम् ॥ तेनान्यत्रापि गोत्रादिग्रहणे कुत्सनाद्यर्थ एव कार्यं ज्ञेयम् ॥

३६१६ तिङ्ङतिङः ॥ २८ ॥ अतिङन्तात्पदात् परं तिङन्तं निहन्यते अग्निम् । ईळे (ऋ० सं० १।१।१) ॥

३६१७ न लुट् ॥ २९ ॥ लुडन्तं न निहन्यते ॥ श्वः कर्ता कर्तारौ कर्तारः ॥

३६१८ निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ॥ ३० ॥ एतैर्निपातैर्युक्तं न निहन्यते ॥ यत्करोति । यदि करोति । हन्त करोति । कुवित्करोति । नेज्जिह्मायन्तो नरकं पताम । स चेद्भुङ्क्ते । च णिद्विशिष्टश्चेदर्थे । अयं च मरिष्यति । कच्चिद्भुङ्क्ते । यत्र भुङ्क्ते ॥

३६१९ नह प्रत्यारम्भे ॥ ३१ ॥ नहेत्यनेन युक्तं तिङन्तं नानुदात्तम् ॥ नह भोक्ष्यसे ॥

३६२० सत्यं प्रश्ने ॥ ३२ ॥ सत्ययुक्तं तिङन्तं नानुदात्तं प्रश्ने । सत्यं भोक्ष्यसे ॥

३६२१ अङ्गाप्रातिलोम्ये ॥ ३३ ॥ अङ्गेत्यनेन युक्तं तिङन्तं नानुदात्तमप्रातिलोम्ये ॥ अङ्ग कुरु ॥ अङ्ग पच ॥

३६२२ हि च ॥ ३४ ॥ हियुक्तं तिङन्तं नानुदात्तम् ॥ आ हि ष्मा याति (ऋ० ४।२९।२) । आ हि रुहतम् । (ऋ० ८।२२।६) ॥

३६२३ छन्दस्यनेकमपि साकाङ्क्षम् ॥ ३५ ॥ हीत्यनेन युक्तं साकाङ्क्षमनेकमपि नानुदात्तम् ॥ अनृतं हि मत्तो वदति पाप्मा एनं विपुनाति । तिङन्तद्वयमपि न निहन्यते ॥

३६२४ यावद्यथाभ्याम् ॥ ३६ ॥ आभ्यां योगे तिङन्तं नानुदात्तम् । यावद्भुङ्क्ते । यथा भुङ्क्ते ॥ देवदत्तः पचति यथा ।

न्तर्थमाधीयत इति।

३६५६ सगतिरपि तिङ् ॥ ६८ ॥ पूजनेभ्यः काष्ठादिभ्यस्तिङन्तं पूजितमनुदात्तम्। यत्काष्ठ पचति प्रपचति। 'तिङ्ङतिङ' इति निघातस्य 'निपातैर्यद्यदि' निषेधे प्राप्ते विधिरयम्। सगतिग्रहणाच्च गतिरपि निहन्यते। गतिग्रहणे उपसर्गग्रहणं मिष्यते। नेह-यत्काष्ठ शुक्लीकरोति॥

३६५७ कुत्सने च सुप्यगोत्रादौ ॥६९॥ कुत्सने च सुबन्ते परे सगतिरगतिरपि तिङनुदात्तो गोत्रादौ तु न। पचति = प्रपचति पूति। पचति—प्रपचति मिथ्या।

* क्रियाकुत्सने इति वाच्यम् ॥ कर्तुः कुत्सने मा भूत्। पचति पूतिर्देवदत्तः॥

* पूतिश्च चानुबन्ध इति वाच्यम् ॥ तेनार्थ चकारानुबन्धत्वा दन्तोदात्तः॥

* वा बह्वर्थमनुदात्तमितिवाच्यम् ॥ पचन्ति (पचन्ति) पूति॥ प्रपचन्ति (प्रपचन्ति) पूति॥

३६५८ गतिर्गतौ ॥ ७० ॥ अनुदात्तः। अभ्युद्धरति।

३६५९ तिङि चोदात्तवति ॥ ७१ ॥ गतिरनुदात्तः। यत्प्रपचति। तिङ्ग्रहण मुदात्तवतः परिमाणार्थम्। अन्यथा हि यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गतिस्तत्र धातावेवोदात्तवति स्यात्। प्रत्यये न स्यात्।

३६६० आमन्त्रितं पूर्वमविद्यमानवत् ॥७२ आमन्त्रितं पूर्वमविद्यमानवद्भवति। अग्ने तव। अग्ने नय 'अग्न इन्द्र वरुण। इह युष्मदस्मदोरादेशस्तिङन्तनिघात आमन्त्रितनिपातश्च न।

३६६१ नामन्त्रिते समानाधिकरणे (सामान्यवचनम्[1]) ॥७३॥ विशेष्य समानाधिकरणे आमन्त्रिते विशेषणे परे अविद्यमानवन्न स्यात्॥ हरे दयालो नः पाहि अग्ने तेऽस्विन। (पद०)।

३६६२ विभाषितं विशेषवचने (बहुवचनम्[2])॥७४॥ बहुवचनान्त विशेष्यं समानाधिकरण आमन्त्रिते विशेषणे परे अविद्यमानवद्वा। देवाः शरण्याः(शरण्याः वा) युष्मान्भजे, वो भजे इति वा। इहान्त्यादेशोऽपि वा॥

इत्यष्टमाध्यायस्य प्रथमः पादः॥

३६६३ पूर्वत्रासिद्धम् ॥ १ ॥ अयमधिकार, आ अध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्याम 'पूर्वत्रासिद्धम्' इत्येवं तद्वेदितव्यम्॥ तत्र येयं सपादसप्ताध्यायी अनुक्रान्ता एतस्याम् अय पादोनाध्यायो

१ अत्र भाष्यकृतोत्तरसूत्रस्थम 'सामान्यवचनम्' इतीं योजितम्—'अप्न्ये देवि सरस्वति—' इत्यत्रापत्तिवारणाय॥

२ अत्र सूत्रे भाष्यकृता 'बहुवचनम्' इति पठितम्॥

*प्लुतविकारस्तुग्विधौ छे सिद्धो वक्तव्यः। अग्ना३इच्छत्रम्' 'पटा३उच्छत्रम्' प्लुतविकारस्यासिद्धत्वात्[१] 'छे च' इति ह्रस्वलक्षणस्तुगिस्त्य न प्राप्नोति ।

*श्चुत्वं धुटि सिद्धं वक्तव्यम् ॥ अट्श्चोतति 'ङः सि धुट्' इति प्राप्नोति ।

* अभ्यासजश्त्वचर्त्वे एत्वतुकोः सिद्धे वक्तव्ये । बभणतुः बभणुः । अभ्यासजश्त्वस्यासिद्धत्वात् 'अनादेशादेः' इत्येत्व प्राप्नोति । प्रचिच्छिषतीति अभ्यासादेशस्य सिद्धत्वात् 'छे च इति तुक् प्राप्नोति ।

* द्विवचने परसवर्णत्वं सिद्धं वक्तव्यं ॥ सय्ँयन्ता सँव्वत्सर. यँल्लोकमिति परसवर्णस्यासिद्धत्वात् 'यर इति द्विर्वचन न प्राप्नोति ।

* पदाधिकारश्चेल्लत्वढत्वघत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि सिद्धानि वक्तव्यानि । रुत्वम्-गको गरः गरोगर. । घत्वम्-द्रोग्धा द्रोग्धा । ढत्वम्-द्रोढा द्रोढा ॥ नत्वम्—सुन्न सुन्न । रुत्वम्-अभिनोऽभिनः । अभिनदभिनत् । षत्वम्-मातुःष्वसा मातुःष्वसा मातुःस्वसा मातुःस्वसा । णत्वम्—माषवापाणि माषवापाणि । अनुनासिक—वाङ्नयनम् वाङ्नयनम् वाग्नयन वाग्नयनम् । छत्वम् वाक्छयनम् वाक्छयनम् वाक्शयनम् वाक्शयनम् । रुत्वादीनां विकल्पितानां सिद्धत्वादृते द्विर्वचने सत्युपरिष्टाद्विकल्पे सति गरो गरः गरो गर इत्येव द्वयमपि द्विरुक्त स्यात् ॥ तदेतत् सर्वं 'न मु ने' इति योगविभागेन साध्यते 'न' इत्येतावद्विनिर्दिष्टे विषये पूर्वत्रासिद्धस्य प्रतिषेधार्थम् ततो 'मु ने' इति । नेत्यतदनुवर्तते ॥

१ धातुषु चकारे परे तालव्यशकारस्य द स्य सकारस्यानिकत्वमियमात् ॥

३६६६ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ॥ ४ ॥

उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यात् ॥ कुमार्यौ कुमार्यः । स्वरितयण्—खलप्व्याशा खलप्वाशा कृत्स्वरेणान्तोदात्तः खलपूशब्दः, ततः सप्तम्येकवचने ङि प्रत्यये 'ओः सुपीति यणादेशः। स उदात्तयण् ततःपरस्य सुप्त्वेनानुदात्तस्य सप्तम्येकवचनस्य स्वरितत्वम् । तस्य यो यणादेश तस्मात्परस्याशाशब्दाद्याकारस्यानुदात्तस्य स्वरितः ।

३६६७ एकादेश उदात्तेनोदात्तः । ५ ।

उदात्तेन सहानुदात्तस्य य एकादेश स उदात्तः स्यात् । अग्नी । वायू । वृक्षैः ॥

३५६८ स्वरितो वाऽनुदात्ते पदादौ ॥ ६ ॥

अनुदात्ते पदादौ उदात्तेन सह य एकादेशः स स्वरितो वा स्यात् । सु + उत्थित = सूत्थित, सूत्थित । वि + ईक्षते = वीक्षते वीक्षते । वसुक + असि वसुकोऽसि ॥

न्तः कर्णवन्तः सखायः' । अस्थन्वन्तं यदनस्था बिभर्ति' 'अक्षण्वता लाङ्गलेन । शीर्षण्वती मूर्धन्वती । सुटोऽसिद्धत्वात्तस्य च रुत्व न, ततः परस्य च भवति ॥

३६७९ नाद् घस्य ॥ १७ ॥ नात्परघसंज्ञकस्य नुडागमः स्याच्छन्दसि ॥ 'सुपथिन्तरः' 'दस्युहन्तमः' ॥

* भूरिदाव्नस्तुड् वक्तव्यः । भूरिदावत्तरः ॥

* ईद्रथिनः । रथिनः ईकारादेशो घे परतः । रथीतरः । रथशब्दाद्वेव वा मत्वर्थीयोऽयमीकारः 'छन्दसीवनिपाविति ॥

३६८० कृपो रो लः ॥१८॥ कृपे ऋलृतेर्लश्रुतिः स्यात् । कल्पते कल्पिता क्लृप्तः क्लृप्तवान् ॥

* कृपणादीनां प्रतिषेधो वक्तव्यः । कृपणः । कृपा । कृपाणः । कृपीटः कर्पूरः ॥

* बालमूललघ्वसुरालमङ्गुलीनां वा रो लत्वमापद्यते इति वक्तव्यम् । बालः वारः । मूलम् मूरम् । लघुः रघुः । असुरः असुलः । अलम् अरम् । अङ्गुलिः अङ्गुरिः ॥

* कपिलकादीनां संज्ञाछन्दसोर्वा रो लत्वमापद्यते इति वक्तव्यम् ॥ कपिरकः कपिलकः । तिल्विलीकम् । तिर्विरीकम् । लोमानि रोमाणि । पांसुरम् पांसुलम् । शुक्लः । शुक्रः । कर्म कल्म ॥ रफयोरेकत्वस्मरणमिति केचित् ॥

३६८१ उपसर्गस्यायतौ ॥ १९ ॥ अयतौ परत उपसर्गस्य यो रेफस्तस्य लः स्यात् ॥ प्लायते पलायते ॥

३६८२ ग्रो यङि ॥ २० ॥ गृत्येतस्य धातो रेफस्य लः स्याद्यङि ॥ निजेगिल्यते ।

३६८३ अचि विभाषा ॥२१॥ अजादौ प्रत्यये परे ग्रो रेफस्य वा लः स्यात् ॥ निगिरति निगिलति । निगरणम् निगलनम् । निगारकः निगालकः ॥

३६८४ परेश्च घाङ्कयोः ॥ २२ ॥ परे रेफस्य लो वा स्याद्घाङ्कयोः ॥ परिघः पलिघः । पर्यङ्कः पल्यङ्कः ॥

* योगे चेति वक्तव्यम् । परियोगः पलियोगः ॥

३६८५ संयोगान्तस्य लोपः ॥ २३ ॥ संयोगान्तस्य पदस्य लोपः स्यात् ॥ गोमान् । यवमान् । कृतवान् हतवान् ॥

३६८६ रात्सस्य ॥ २४ ॥ रेफात्परस्य संयोगान्तस्य सस्यैव लोपो नान्यस्य ॥ मातुः पितुः ॥ नेह—ऊर्क् अमार्ट्[1] ॥

३६८७ धि च ॥ २५ ॥ धादौ प्रत्यये सस्य लोपः स्यात् ॥ अलविध्वम् अलविढ्वम् ॥ चकाधि ॥

३६८८ झलो झलि ॥ २६ ॥ झलः परस्य सस्य लोपः स्याज्झलि ॥ अभित्त अच्छित्त अभित्थाः अच्छित्थाः ॥

३६८९ ह्रस्वादङ्गात् ॥ २७ ॥ ह्रस्वा-

[1] 'उद स्यास्तम्भो—' इत्यारम्भसामर्थ्यात् सिच एव लोप इति सारम् ॥

दग्धा । दग्धुम् । दग्धव्यम् । भवद्ध । भवद्धाः ॥ दोग्धा । रेढा । वोढा ॥

३७०३ षढोः कः सि ॥ ४१ ॥ षस्य ढस्य च कः स्यात्सकारे परे ॥ पिपेक्ष्यति अपेक्ष्यत विविक्षति लेक्ष्यति अलेक्ष्यत लिलिक्षति ॥

३७०४ रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ ४२ ॥ रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यात्पूर्वस्य दकारस्य च ॥ आस्तीर्णम् विस्तीर्णम् विशीर्णम् । भिन्नः भिन्नवान् । छिन्नः छिन्नवान् ॥

३७०५ संयोगादेरातो धातोर्यण्वतः ॥ ४३ ॥ संयोगादिर्यो धातुराकारान्तो यण्वान् तस्मादुत्तरस्य निष्ठातस्य नः स्यात् ॥ द्राणः द्राणवान् । ग्लानः ग्लानवान् ॥

३७०६ ल्वादिभ्यः ॥ ४४ ॥ ल्वादिभ्यः परस्य निष्ठातस्य नः स्यात् ॥ लूनः लूनवान् । धूनः जीनः ॥

* ल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम् । कीर्णिः गीर्णिः शीर्णिः लूनिः धूनिः ॥

* दुग्वोर्दीर्घश्चेति वक्तव्यम् । आदूनः विगूनः ॥

* पूञो विनाश इति वक्तव्यम् पूनाः यवाः विनष्टा इत्यर्थः ॥

* सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम् सिनो ग्रासः स्वयमेव ॥

३७०७ ओदितश्च ॥ ४५ ॥ ओकारेतो धातोः परस्य निष्ठातस्य नः स्यात् ॥ ओलस्जी लग्नः लग्नवान् ॥ ओविजी उद्विग्नः । उद्विग्नवान् ॥

* स्वादय ओदितः । सूनः सूनवान् । दूनः दूनवान् । दीनः दीनवान् । डीनः डीनवान् । धीनः धीनवान् । मीनः मीनवान् । रीणः रीणवान् । लीनः लीनवान् । प्रीणः प्रीणवान् ॥

३७०८ क्षियो दीर्घात् ॥ ४६ ॥ दीर्घात्क्षियो निष्ठातस्य नः स्यात् । क्षीणाः क्लेशाः । क्षीणो जाल्मः ॥

३७०९ श्योऽस्पर्शे ॥ ४७ ॥ श्यायतेरुत्तरस्य निष्ठातस्य नः स्यादस्पर्शे ॥ शीनं घृतम् । शीनं मेदः ॥

३७१० अञ्चोऽनपादाने ॥ ४८ ॥ अञ्चतेरुत्तरस्य निष्ठातस्य नः स्यात् । न चेदपादानं तत्र स्यात् ॥ समक्नौ शकुनेः पादौ । तस्मात्पशवो न्यक्ताः ॥

३७११ दिवोऽविजिगीषायाम् ॥ ४९ ॥ दिवः परस्य निष्ठातस्य नः स्यादविजिगीषायामर्थे ॥ आद्यूनः । परिद्यूनः ।

३७१२ निर्वाणोऽवाते ॥ ५० ॥ निर्पूर्वाद्वातेरुत्तरस्य निष्ठातस्य नः स्यात् न चेद्वाताधिकरणो वात्यर्थः स्यात् ॥ निर्वाणोऽग्निः । निर्वाणः प्रदीपः । निर्वाणो भिक्षुः ॥

३७१३ शुषः कः ॥ ५१ ॥ शुषेर्धातो-

३७२७ म्वोश्च ॥ ६५ ॥ मान्तस्य धातोर्मस्य नः स्याद् म्वोः परयोः ॥ 'अगन्म तमस पारम्'। अगन्व' 'जगन्वान्' ॥

३७२८ ससजुषो रुः ॥ ६६ ॥ सकारान्तस्य, पदस्य, सजुष् इत्येतस्य च रुः स्यात् ॥ अग्निरत्र । वायुश्च 'सजूर्ऋतुभिः' 'सजूर्देवेभि ॥

३७२९ अवयाः श्वेतवाः पुरोडाश्च ॥६७॥ एते सम्बुद्धौ कृतदीर्घा निपात्यन्ते ॥ हे अवयाः । हे श्वेतवाः । हे पुरोडाः ॥ स्वात् बहुवचनाः ॥

३७३० अहन् ॥ ६८ ॥ अहन्नित्यस्य रु स्यात्पदान्ते ॥ अहोभ्याम् अहोभिः ॥

३७३१ रोऽसुपि ॥ ६९ ॥ अह्नो रेफादेशः स्यात् तु सुपि ॥ अहर्ददाति । अहर्भुङ्क्ते ॥

३७३२ अम्नरूधरवरित्युभयथा छन्दसि ॥ ७० ॥ अम्नस् ऊधस् अवस् इत्येतेषां छन्दसि रुर्वा रेफो वा ॥ अम्न एव, अम्नरेव । ऊध एव, ऊधरेव । अव एव, अवरेव ।

*छन्दसि भाषायां च विभाषा प्रचेतसो राजन्युपसंख्यानम् । प्रचेता राजन् । प्रचेतो राजन् ।

* अहरादीनां पत्यादिषूपसंख्यानम् । अहर्पति । अहःपति । गीर्पतिः गीःपतिः । धूर्पति धूःपति ॥

३७३३ भुवश्च महाव्याहृतेः ॥ ७१ ॥ भुवस् इत्येतस्य महाव्याहृतेश्छन्दसि रुर्वा रेफो वा । 'भुव इत्यन्तरिक्षम्' । 'भुवरित्यन्तरिक्षम्' ॥

३७३४ वसुस्रंसुध्वंस्वनडुहां दः ॥७२ ॥ सान्तस्य वस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । विद्वद्भ्याम् । विद्वद्भिः । उखास्रद्भ्याम् । पर्णध्वद्भ्याम् अनडुद्भ्याम् ।

३७३५ तिप्यनस्तेः ॥ ७३ ॥ तिपि सकारान्तस्य पदस्य दः स्यान्न त्वस्तेः । अचकाद्भवान् ।

३७३६ सिपि धातो रुर्वा ॥ ७४ ॥ सिपि सकारान्तस्य पदस्य धातो रुः स्याद् । वा दकारादेशः । अचकास्त्वम् अचकात्त्वम् ।

३७३७ दश्च ॥ ७५ ॥ दकारान्तस्य धातोः रुः स्याद् दकारो वा सिपि परे ॥ अभेः अभेद् ॥

३७३८ र्वोरुपधाया दीर्घ इकः ॥ ७६ ॥ रेफवकारान्तस्य धातोः पदस्य उपधाया इको दीर्घः स्यात् । गीः । धूः । आशीः ।

३७३९ हलि च ॥ ७७ ॥ हलि च रेफवकारान्तस्य धातोरुपधाया इको दीर्घः स्यात् । आस्तीर्णम् विस्तीर्णम् दीव्यति सीव्यति ॥

३७४० उपधायां च ॥ ७८ ॥ धातोरुपधाभूतौ यौ रेफवकारौ हल्परौ तयोरुपधाया इको दीर्घः स्यात् । हूर्छिता मूर्छिता ऊर्दिता तूर्विता ।

३७४१ न भकुर्छुराम् ॥ ७९ ॥ रेफवकारान्तस्य भस्य कुर्छुरोश्चोपधाया

स्थस्य नित्यं षः स्यात् ॥ सर्पिष्कुण्डिका धनुष्कपालम् ॥

३८१६ अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ॥ ४६ ॥ अकारादुत्तरस्यानव्ययविसर्गस्य, समासेऽनुत्तरपदस्थस्य नित्यं सः स्यात्करोत्यादिषु परेषु ॥ अयस्कारः । अयस्कामः । अयस्कंसः । अयस्कुम्भः । अयस्पात्रम् । अयस्कुशा । अयस्कर्णी ॥

३८१७ अधः शिरसी पदे ॥ ४७ ॥ एतयोर्विसर्गस्य समासेऽनुत्तरपदस्थस्य सः स्यात्पदशब्दे परे ॥ अधस्पदम् । शिरस्पदम् ॥

३८१८ कस्कादिषु च ॥ ४८ ॥ 'कस्क' इत्येवमादिषु च विसर्गस्य सः स्यात्, इण उत्तरस्य षः स्यात् ॥ कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका । धनुष्कपालम् ॥

३८१९ छन्दसि वाऽप्राम्रेडितयोः ॥ ४९ ॥ छन्दसि विसर्गस्य सो वा स्यात् कुप्वोः, प्रशब्दमाम्रेडितं च वर्जयित्वा ॥ अयस्पात्रम् अयःपात्रम् । विश्वतःपात्रम् विश्वतस्पात्रम् ॥

३८२० कःकरत्करतिकृधिकृतेष्वनदितेः ॥ ५० ॥ एषु अनदितेः विसर्गस्य सः स्याच्छन्दसि ॥ विश्वतस्कः । विश्वतस्करत् । पयस्करति । कणस्कृधि । सदस्कृतम् ॥

३८२१ पञ्चम्याः परावध्यर्थे ॥ ५१ ॥ पञ्चमीविसर्जनीयस्य सः स्यात्परावध्यर्थे ॥ 'दिवस्परि' (ऋ० सं० १० । ४५ । १) ॥ अग्निं सवनस्परि ॥

३८२२ पातौ च बहुलम् ॥ ५२ ॥ पञ्चमीविसर्जनीयस्य बहुलं सः स्याच्छन्दसि ॥ दिवस्पातु राजस्पातु ॥ न च भवति 'परिषदः पातु' ॥

३८२३ षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ॥ ५३ ॥ षष्ठीविसर्गस्य सः स्यात्पत्यादिषु छन्दसि ॥ वाचस्पतिं विश्वकर्माणमूतये' 'दिवस्पुत्राय सूर्याय' 'दिवस्पृष्ठे धावमानं सुपर्णम्' 'अगन्म तमसस्पारम्' 'इळस्पदे समिध्यसे' 'ऊर्वं चक्षुर्दिवस्पयः' । 'रायस्पोषं यजमानेषु धत्तम्' ॥

३८२४ इडाया वा ॥ ५४ ॥ इडायाः षष्ठीविसर्जनीयस्य वा सः स्यात्पत्यादिषु छन्दसि ॥ इडायास्पतिः । इडायाः पतिः । इडायास्पुत्रः इडायाः पुत्रः । इडायास्पृष्ठम् इडायाः पृष्ठम् । इडायास्पारम् इडायाः पारम् । इडायास्पदम् । इडायाः पदम् । इडायास्पयः इडायाः पयः । इडायाः पोषम् इडायास्पोषम् ॥

३८२५ अपदान्तस्य मूर्धन्यः ॥ ५५ ॥ अपदान्तस्येति मूर्धन्य इति चैतदधिकृतं वेदितव्यम् आ पादपरिसमाप्तेः ॥

३८२६ सहेः साडः सः ॥ ५६ ॥ साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात् ॥ जलाषाट् पृतनाषाट् ॥

३८२७ इण्कोः ॥ ५७ ॥ अधिकारोऽयम् । इतउत्तरं यद्वक्ष्यामः, 'इणः कवर्गाच्च' इत्येव तद्वेदितव्यम् ...

ञ्चति अभ्यषिञ्चत् पर्यषिञ्चत्। अभिषिषिक्षति परिषिषिक्षति। अभिषजति परिषजति अभ्यषजत् पर्यषजत्। अभिषिषङ्क्षति परिषिषङ्क्षति। अभिष्वजते परिष्वजते। अभ्यष्वजत पर्यष्वजत अभिषिष्वङ्क्षते परिषिष्वङ्क्षते॥

३८३६ सदिरप्रतेः॥ ६६॥ प्रतिभिन्नादुपसर्गात्सदेः सस्य मूर्धन्यः स्यात्। निषीदति न्यषीदत् निषसाद॥

३८३७ स्तन्भेः॥ ६७॥ स्तन्भेः सौत्रस्य सस्य मूर्धन्यः स्यात्। अभिष्टभ्नाति परिष्टभ्नाति अभ्यष्टभ्नात् पर्यष्टभ्नात्। अभितष्टम्भ, परितष्टम्भ॥

३८३८ अवाच्चालम्बनाविदूर्ययोः॥ ६८॥ अवात्स्तन्भेः सस्य मूर्धन्यादेशः स्यात् आलम्बने आविदूर्ये चार्थे॥ अवष्टभ्य तिष्ठति अवष्टब्धा सेना॥

३८३९ वेश्च स्वनो भोजने॥ ६९॥ व्यवाभ्यां स्वनतेः सस्य मूर्धन्यः स्यात्॥ विष्वाण अवष्वाण॥

३८४० परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्॥ ७०॥ परिनिविभ्य एषां सकारस्य मूर्धन्यः स्यात्॥ परिषेवते निषेवते विषेवते पर्यषेवत न्यषेवत व्यषेवत परिषिषेविषते निषिषेविषते विषिषेविषते। परिषितः निषितः विषितः। परिषयः निषयः विषयः। परिषीव्यति निषीव्यति विषीव्यति। परिषहते निषहते विषहते। परिष्करोति। परिष्टौति निष्टौति विष्टौति। परिष्वजते विष्वजते निष्वजते॥ पूर्वेणैव सिद्धे स्तुस्वञ्जिग्रहणमुत्तरार्थम् अड्व्यवाये विभाषा यथा स्यात्॥

३८४१ सिवादीनां वाड्व्यवायेऽपि॥ ७१॥ सिवादीनामड्व्यवायेऽपि परिनिविभ्य उत्तरस्य सस्य मूर्धन्यो वा स्यात्॥ पर्यषीव्यत् न्यषीव्यत् व्यषीव्यत् पर्यसीव्यत् न्यसीव्यत् व्यसीव्यत्। पर्यषहत न्यषहत व्यषहत पर्यसहत न्यसहत व्यसहत। पर्यष्करोत् न्यष्करोत् व्यष्करोत् पर्यस्करोत् न्यस्करोत् व्यस्करोत्। पर्यष्टौत् न्यष्टौत् व्यष्टौत् पर्यस्तौत् न्यस्तौत् व्यस्तौत्। पर्यष्वजत न्यष्वजत व्यष्वजत पर्यस्वजत न्यस्वजत व्यस्वजत॥

३८४२ अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु॥ ७२॥ एभ्य उत्तरस्य स्यन्दतेः सकारस्य वा मूर्धन्यादेशः स्यात् अप्राणिषु॥ अनुष्यन्दते विष्यन्दते परिष्यन्दते अभिष्यन्दते निष्यन्दते॥

३८४३ वेः स्कन्देरनिष्ठायाम्॥ ७३॥ वेः परस्य स्कन्देः सकारस्य वा मूर्धन्यः स्यात् अनिष्ठायाम्॥ विष्कन्ता विस्कन्ता विष्कन्तुम् विस्कन्तुम् विष्कन्तव्यम् विस्कन्तव्यम्॥

३८४४ परेश्च॥ ७४॥ परिशब्दादुत्तरस्य स्कन्देः सकारस्य वा मूर्धन्यः स्यात्। परिष्कन्ता। परिस्कन्ता परिष्कन्दः परिस्कन्दः॥

त्रिषन्ति प्रादुःषन्ति । अभिष्यात् निष्यात् प्रादुःष्यात् ।

३८५८ सुविनिर्दुर्भ्यः सुपिसूतिसमाः ॥ ८८ ॥ सु वि निर् दुर् इत्येतेभ्य उत्तरस्य सुपि सूति सम इत्येतेषां सकारस्य मूर्धन्यादेशः स्यात् । सुपीति स्वपि. कृतसम्प्रसारणो गृह्यते सुषुप्तः विषुप्तः निःषुप्तः । दुःषुप्तः । सुषूतिः विषूतिः निःषूतिः दुःषूतिः सुषमम् विषमम् । निःषमम् दुःषमम् ।

३८५९ निनदीभ्यां स्नातेः कौशले ॥ ८९ ॥ नि नदी इत्येताभ्यामुत्तरस्य स्नातिसकारस्य मूर्धन्यादेशः स्यात् कौशले गम्ये । निष्णातः कटकरणे, निष्णातः शास्त्रेषु, नदीष्णातः नद्याः स्नातीति सुपीति योगविभागात्कः ॥

३८६० सूत्रं प्रतिष्णातम् ॥ ९० ॥ प्रतिष्णातमिति निपात्यते सूत्र चेद्भवति ॥ प्रतिष्णातं सूत्रम् ॥

३८६१ कपिष्ठलो गोत्रे ॥ ९१ ॥ कपिष्ठल इति निपात्यते गोत्रविषये । कपिष्ठलो नाम यस्य स कापिष्ठलिः पुत्रः ॥

३८६२ प्रष्ठोऽग्रगामिनि ॥ ९२ ॥ अग्रगामिनि अभिधेये 'प्रष्ठः' इति निपात्यते ॥ प्रतिष्ठत इति प्रष्ठः । अग्रतो गच्छतीत्यर्थः ॥

३८६३ वृक्षासनयोर्विष्टरः ॥ ९३ ॥ विष्टर इति निपात्यते वृक्ष आसने च गम्ये । विष्टरो वृक्षः विष्टरमासनम् ॥

३८६४ छन्दोनाम्नि च ॥ ९४ ॥ विष्टर इति 'छन्दोनाम्नि च' (६९८) इत्यैव विहित इति विष्टार इत्यपि निपात्यते ॥ विष्टारपङ्क्तिश्छन्दः । विष्टारो बृहतीछन्दः ॥]

३८६५ गवि युधिभ्यां स्थिरः ॥ ९५ ॥ आभ्यामुत्तरस्य स्थिरसकारस्य मूर्धन्यः स्यात् । गविष्ठिरः युधिष्ठिरः । गोशब्दादकारान्तत्वेऽपि एतस्मादेव निपातनात्सप्तम्या अलुग् भवति ॥

३८६६ विकुशमिपरिभ्यः स्थलम् ॥ ९६ ॥ एभ्य उत्तरस्य स्थलसकारस्य मूर्धन्यादेशः स्यात् ॥ विष्ठलम् कुष्ठलम् शमिष्ठलम् । परिष्ठलम् ॥

३८६७ अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ॥ ९७ ॥ एभ्य उत्तरस्य स्थसकारस्य मूर्धन्यादेशः स्यात् । अम्बष्ठः आम्बष्ठः गोष्ठः भूमिष्ठः सव्येष्ठः अपष्ठः द्विष्ठः त्रिष्ठः कुष्ठः शेकुष्ठः शङ्कुष्ठः अङ्गुष्ठः मञ्जिष्ठः पुञ्जिष्ठः परमेष्ठः बर्हिष्ठः दिविष्ठः । अग्निष्ठः ॥

* स्थास्थिन्स्थॄणामिति वक्तव्यम् । सव्येष्ठा, परमेष्ठी सव्येष्ठा सारथिः ॥

३८६८ सुषामादिषु च ॥ ९८ ॥ सुषामादिषु शब्देषु सस्य मूर्धन्यादेशः स्यात् । शोभनं साम यस्यासौ सुषामा ब्राह्मणः निष्षामा इत्यादि ॥

कापर्ड जुहोति' । 'विसृज्यः कथयति ॥ सृपि'पुरा क्रूरस्य विसृपः' सृजि–'वाचो विसर्जनात्' । स्पृशि'-'विपिस्पृशम्' स्पृधि 'विस्पृद्ध कथयति'।।'सवनादीनाम' 'सवने सवने । सुते सुते । सामे सामे । सवनमुखे ।' रथतीति किम 'अनुसवनम्' 'गोसवनम्' 'अश्वसनिम्' 'पूर्वपदा'दिति प्राप्ते प्रतिषेधः । अश्वसनिग्रहणमनिणोऽपि पदे मस्तो तिज्ञापनार्थम । तेन 'जलाषाहमश्वषाहमि त्यत्रापि सिद्धं भवति ।। क्वचिदेव गणपाठ स्याथे सवने अनुसवने २ 'गवाया बृहस्य निसव प्रकृतिसवनम सोमे सोमे सुते सुते सवत्सरे सम्वत्सरे । किसम् किसम् मुसलंमुसल गोसनिम् अश्वसनिम् ॥

३८७९ सात्पदाद्योः ॥ १०९ ॥ 'सात्' इत्येतस्य' पदादेश्च मूर्धन्यादेशो न स्यात ॥ सात्—'अग्निसात्' 'दधिसात्' 'मधुसात' । पदादे –'दधि सिञ्चति' 'मधु सिञ्चति ॥

३८८० सिचो यङि ॥ ११०॥ सिच सकारस्य यङि मूर्धन्यादेशो न स्यात ॥ सेसिच्यते अभिसेसिच्यते ॥

३८८१ सेधतेर्गतौ ॥ १११ ॥ सेधते सस्य मूर्धन्या न स्यात् गतौ ॥ अभिसेधयति गौ ॥

३८८२ प्रतिस्तब्ध निस्तब्धौ च॥११२॥ प्रतिस्तब्धनिस्तब्ध इत्येतौ मूर्धन्याभावे धाय निपात्येते ॥ प्रतिस्तब्धः निस्तब्धः॥

३८८३ सोढः ॥ ११३ ॥ सोढ इतिरूपस्य सहे सस्य मूर्धन्यो न स्यात् ॥ परिसोढा परिसोढुम् परिसोढव्यम् ॥

३८८४ स्तम्भुसिवुसहां चङि ॥११४॥ एषां सस्य मूर्धन्यादेशो न स्याच्चङि ॥ पर्यतस्तम्भत् पर्यसीषिवत् पर्यसीषहत् ॥

* स्तम्भुसिवुसहां चङि उपसर्गादिति वक्तव्यम् उपसर्गाद्यो प्राप्तिस्तस्याः प्रतिषेधो यथास्यात् । अभ्यासाद्या प्राप्तिस्तस्याः, मा भूदिति तथा चैवोदाहृतम् ॥

३८८५ सुनोतेः स्यसनोः ॥ ११५ ॥ सुनो इ. सस्य मूर्धन्यादेशो न स्येसनि च॥ अभिसोष्यति ॥ सनि अभिसुसूषते अभिसुसु ॥

३८८६ सदिष्वञ्जोः परस्य लिटि॥११६॥ सदि ष्वञ्ज इत्येतयोर्लिटि परतः परस्य सस्य मूर्धन्यो न स्यात् । अभिषसाद परिषसाद । निषसाद विषसाद ॥ परिषस्वजे परिषस्वजाते परिषस्वजिरे अभिषस्वजे ॥ स्वञ्जे रुयोगा दाऋप विभाषा किद कित्वमिच्छन्तीति परिषेऽसुपञ्जोर ॥

३८८७ निव्यभिभ्योऽड्व्यवाये वा छन्दसि ॥ ११७ ॥ निविअभि इत्येतेभ्य उ त्तरस्य सस्याड्व्यवायेपि छन्दसि मूर्धन्यादेशो न स्याद्वा । 'न्यषीदत् पिता नः' 'न्यसीदत् पिता नः' न्यसीदत् व्यसीदत् अभ्यषीदत् अभ्यसीदत् ॥

इत्यष्टमाध्यायस्य तृतीयः पादः ॥

* वा प्रकरणे गिरिनद्यादीनामुपसंख्यानम् । गिरिणदी गिरिनदी । चक्रणदी चक्रनदी । चक्रणितम्बा चक्रनितम्बा ॥

३८९८ प्रातिपदिकान्तनुम्विभक्तिषु च ॥ ११ ॥ पूर्वपदस्थान्निमित्तादुत्तरस्य प्रातिपदिकान्ते नुमि विभक्तौ च स्थितस्य नस्य णो वा स्यात् ॥

प्रातिपदिकान्ते—माषवापिणौ माषवापिनौ ॥ नुमि—माषवापाणि माषवापानि ॥ विभक्तौ–माषवापेण माषवापेन ॥

* युवादीनां प्रतिषेधो वक्तव्यः ॥ आर्ययूना क्षत्रिययूना प्रपक्वानि दीर्घाह्नी शरत् ॥

३८९९ एकाजुत्तरपदे णः ॥ १२ ॥ एकाजुत्तरपदं यस्य स एकाजुत्तरपदस्तस्मिन्नेकाजुत्तरपदे समासे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य नस्य णः स्यात् ॥ प्रातिपदिकान्ते–वृत्रहणौ वृत्रहणः ॥ नुमि—क्षीरपाणि सुरापाणि । विभक्तौ—क्षीरपेण सुरापेण ॥ ण इति वर्तमाने पुनर्णग्रहणं विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थम् ॥

३९०० कुमति च ॥ १३ ॥ कवर्गवत्युत्तरपदे प्रातिपदिकान्तनुम्विभक्तिषु च पूर्वपदस्थान्निमित्तादुत्तरस्य नस्य णः स्यात् ॥ वस्त्रयुगिणौ वस्त्रयुगिण स्वर्गकामिणौ (वृषगामिणौ ॥ नुमि वस्त्रयुगाणि खरयुगाणि ॥ विभक्तौ—वस्त्रयुगेण खरयुगेण ॥)

३९०१ उपसर्गादसमासेऽपि णोपदेशस्य ॥ १४ ॥ ण उपदेशे यस्यासौ णोपदेशः णोपदेशस्य धातोर्यो नकारस्तस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशः स्यात् समासेऽसमासेऽपि ॥ प्रणमति परिणमति । समासे प्रणायकः परिणायकः ॥

३९०२ हिनुमीना ॥ १५ ॥ हिनु मीना इत्येतयोरुपसर्गस्थान्निमित्तादुत्तरस्य नस्य णः स्यात् ॥ प्रहिणोति प्रहिणुतः प्रमीणाति प्रमीणीतः ॥

३९०३ आनि लोट् ॥ १६ ॥ उपसर्गस्थान्निमित्तादुत्तरस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् ॥ प्रवपाणि । परिवपाणि । प्रयाणि । परियाणि ॥

३९०४ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ॥ १७ ॥ नेरित्येतस्य उपसर्गस्थान्निमित्तादुत्तरस्य नस्य णः स्याद्गदादिषु परेषु ॥ प्रणिगदति प्रणिनदति, प्रणिपतति, प्रणिपद्यते, प्रणिददाति प्रणिदधाति । माङ्—प्रणिमिमीते प्रणिमयते । प्रणिस्यति । प्रणिहन्ति । प्रणियाति । प्रणिवाति । प्रणिद्राति । प्रणिप्साति प्रणिवपति । प्रणिवहति । प्रणिशाम्यति । प्रणिचिनोति । प्रणिदेग्धि अडव्यवायेऽपि नेर्गदादिषु णत्वमिष्यते । प्रण्यगदत् परिण्यगदत् ॥

३९०५ शेषे विभाषाऽकखादावषान्त उपदेशे ॥ १८ ॥ अककारखकारादिरषकारान्तश्चोपदेशे यो धातुः शेषस्तस्मिन्परत उपसर्गस्थान्निमित्तादुत्तरस्य नेर्नकारस्य वा णकारः स्यात् । प्रणिपचति

स्यात् ॥ प्रयापणम् । प्रयापनम् । परियापणम् । परियापनम् । प्रयाप्यमाणम् प्रयाप्यमानम् । प्रयापणीयम् प्रयापनीयम् । प्रयापणि प्रयापिणा प्रयापिनौ ॥

३९१८ हलश्चेजुपधात् ॥ ३१ ॥ हलादिर्यो धातुरिजुपधस्तस्मात्परो यः कृत्प्रत्ययस्तत्स्थस्य नकारस्योत्तरस्योपसर्गस्थान्निमित्तात्परस्य वा णः स्यात् ॥ प्रकोपणम् प्रकोपनम् । परिकोपणम् परिकोपनम् ॥

३९१९ इजादेः सनुमः ॥३२॥ इजादेः सनुमो हलन्ताद्धातोर्विहितो यः कृत्तत्स्थस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णः स्यात् ॥ प्रेङ्खणम् परेङ्खणम् प्रेङ्गणम् परेङ्गणम् प्रोम्भणम् परोम्भणम् । सिद्धे सत्यारम्भो नियमार्थः—इजादेरेव सनुमो नान्यस्मादिति । तेनेह न—प्रमङ्गनम् परिमङ्गनम् ॥

३९२० वा निंसनिक्षनिन्दाम् ॥ ३३ ॥ एषां नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णः स्यात् ॥ प्रणिंसनम् । प्रनिंसनम् ॥ प्रणिक्षणम् प्रनिक्षणम् । प्रणिन्दनम् प्रनिन्दनम् ॥

३९२१ न भाभूपूकमिगमिप्यायिवेपाम् ॥ ३४ ॥ एषामुपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थस्य नकारस्य णकारो न स्यात् ॥ प्रभानम् परिभानम् । प्रभवनम् परिभवनम् । प्रपवनम् परिपवनम् ॥

* पूञ्ग्रहणं द्रष्टव्यम् पुङो हि भवत्येव णत्वम् 'प्रपवणं सोमस्येति ॥ प्रकमनम् परिकमनम् । प्रगमनम् परिगमनम् । प्रप्यायनम् परिप्यायनम् । प्रवेपनम् परिवेपनम् ॥

* ण्यन्तानां भादीनामुपसंख्यानम् कर्तव्यम् ॥ प्रभापनम् परिभापनम् ॥

३९२२ षात्पदान्तात् ॥ ३५ ॥ षकारान्तात्पदान्तादुत्तरस्य नकारस्य णकारादेशो न स्यात् ॥ निष्पानम् । दुष्पानम् सर्पिष्पानम् ॥

३९२३ नशेः षान्तस्य ॥ ३६ ॥ नशेः षकारान्तस्य णो न स्यात् ॥ प्रनष्टः परिनष्टः ॥

३९२४ पदान्तस्य ॥ ३७ ॥ पदान्तस्य नस्य णो न स्यात् ॥ वृक्षान् प्लक्षान् । अरीन् गिरीन् ॥

३९२५ पदव्यवायेऽपि ॥ ३८ ॥ निमित्तनिमित्तिनोः पदेन व्यवायेऽपि नस्य णो न स्यात् । माषकुम्भवापेन चतुरङ्गयोगेन प्रावनद्धम् पर्यवनद्धम् ॥

* पदव्यवायेऽपि अतद्धित इति वक्तव्यम् इह मा भूत् आर्द्रगोमयेण शुष्कगोमयेण ।

३९२६ क्षुभ्नादिषु च ॥ ३९ ॥ क्षुभ्ना इत्येवमादिषु शब्देषु नकारस्य णो न स्यात् । क्षुभ्नाति । नृनमन ॥

३९२७ स्तोः श्चुना श्चुः ॥ ४० ॥ सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः ॥ रामश्शेते । हरिश्चिनोति । वृक्षश्छाद्यति । सच्चित् । शार्ङ्गिञ्जय ॥

चार्यस्य मतेन न स्यात् ॥ इन्द्रः चन्द्रः उष्ट्रम् ॥

३९३८ सर्वत्र शाकल्यस्य ॥ ५१ ॥ शाकल्यस्याचार्यस्य मतेन सर्वत्र द्विर्वचनं न स्यात् । अर्कः । मर्कः ॥

३९३९ दीर्घादाचार्याणाम् ॥ ५२ ॥ दीर्घादुत्तरस्याचार्याणां मतेन द्वित्वं न स्यात् ॥ दात्रम् । पात्रम् । सूत्रम् ॥

३९४० अनुस्वारस्य ययि परसवर्णः ॥ ५३ ॥ अनुस्वारस्य ययि परतः परसवर्णः स्यात् । शङ्किता । अञ्चिता । कुण्ठिता । नन्दिता । कम्पिता ॥

३९४१ वा पदान्तस्य ॥ ५४ ॥ पदान्तस्यानुस्वारस्य ययि परसवर्णो वा स्यात् ॥ त्वङ्करोषि । त्वं करोषि ॥

३९४२ तोर्लि ॥ ५५ ॥ तवर्गस्य लकारे परे परसवर्णः स्यात् ॥ तल्लयः । विद्वाँल्लिखति ॥

३९४३ उदः स्थास्तम्भोः पूर्वस्य ॥ ५६ ॥ उदः परयोः स्था स्तम्भ इत्येतयोः पूर्वसवर्णः स्यात् ॥ उत्थानम् उत्तम्भनम् ॥

* उदः पूर्वत्वे स्कन्देश्छन्दस्युपसंख्यानम् अग्ने दूरमुत्कन्द ।

* रोगे चेति वक्तव्यम् उत्कन्दो रोगः ।

३९४४ झयो होऽन्यतरस्याम् ॥ ५७ ॥ झयः परस्य हस्य पूर्वसवर्णो वा स्यात् ॥ वाग्घसति । वाग्हसति । अजझौ अज्झौ लिड्ढसति लिड्हसति । तद्धितः तद्हितः । गुड्मासः गुड्हासः ॥

३९४५ शश्छोऽटि ॥ ५८ ॥ झयः परस्य शस्य छो वा स्यादटि ॥ वाक्छेते वाक्शेते ॥

* छत्वममीति वाच्यम् । तच्छ्लोकेन ॥ तच्छ्मश्रुणा ॥

३९४६ झलां जश् झशि ॥ ५९ ॥ झलां स्थाने जशादेशः स्यात् झशि । लब्धा । लब्धम् । दोग्धा । दुग्धम् ॥

३९४७ अभ्यासे चर्च ॥ ६० ॥ अभ्यासे वर्तमानानां झलां चरादेशः स्यात् चाज्जश् ॥ चखान । चिच्छेद । टिठकारयिषति । पफाल । बभूव ॥ जघास । डुढौकिषते ॥

* प्रकृतिचरां प्रकृतिचरः स्युः चिचीषति । टिटीकिषति तितनिषति ॥

* प्रकृतिजशां प्रकृतिजशः स्युः जिजनिषति । बुबुधे । ददौ । डिड्ये ॥ उत्था स्म उत्तम्भनम् उत्कन्द ॥

३९४८ खरि च ॥ ६१ ॥ खरि झलां चरः स्युः ॥ भेत्ता । भेत्तुम् । भेत्तव्यम् ॥ युयुत्सते । आरिप्सति । आलिप्सति ॥

३९४९ वाऽवसाने ॥ ६२ ॥ अवसाने झलां चरो वा स्युः ॥ वाक् वाग् ।

---

१ काशिकायाम् पदद्वयं सूत्र चतुष्टयस्योल्लेखो अनुस्वारस्य ययि परसवर्णः (३९४०) इत्यतः प्रागेवोपलभ्यते । अस्मामिस्तु भाष्यसमत एव क्रमो रक्षितः । न जाने काशिकाकारेण भाष्योपलब्धक्रमः किमर्थं परिवर्तितः 'उत्कन्द' इत्यत्र थकाराश्रवणं कथं समर्थितम् ॥ छान्दसो लोपस्थकारस्य पृषोदरादित्वकल्पनं च मनसि धृतं भवेत् ॥

